y. ९ १३६ 1907

THE

# HOWKHAMBÂ SANSKRIT SERIES;

A

LLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 113.

श्रीमन्निम्बार्काचार्यविरचितदशश्लोकीव्याख्या

# वेदान्तरत्नमञ्जूषा ।

श्रीभगवत्पुरुषोत्तमाचार्यकृता ।

श्रीमदाचार्यश्रीवल्लभाधीश्वरशुद्धाद्वैतसंप्रदायविदुषा रत्नगोपालभट्टेन संशोधिता ।

# VEDÂNTA RATNA MANJÛSHÂ

Y BHAGAVATPURUSHOTTAMÂ CHÂRYA.

EDITED BY

*Ratna Gopâl Bhatta.*

FASCICULUS I.

*BLISHED AND SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT:

BENARES;

AGENTS:-OTTO HARRASSOWITZ, LEIPZIG:

PANDIT JYESHTHÂRÂMA MUKUNDJI BOMBAY.

*Printed by Hari Dâs Gupta, Proprietor,*

AT THE VIDYÂ-VILÂSA PRESS,

BENARES.

*Price Rupee One.*

॥ श्रीः ॥

—*—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तवकः—११३




श्रीमद्धंससनकनारदनिम्बार्कादिगुरुभ्यो नमः ।

# वेदान्तरत्नमञ्जूषा ।

## श्रीभगवत्पुरुषोत्तमाऽऽचार्यकृता ।

---

यो ब्रह्मेशसुरर्षिवन्दितपदो वेदान्तवेद्यो हरि-
स्तं वन्दे मनसा गिरा च शिरसा श्रीश्रीनिवासं गुरुम् ।
कण्ठे यस्य चकास्ति कौस्तुभमणिर्वेदान्ततत्त्वात्मको
भक्तेः श्रीहृदये शरण्यमगतेः कारुण्यसिन्धुं मुदा ॥ १ ॥

इह सकलब्रह्मरुद्रादिकिरीटकोटिवन्दितपादपीठेनानन्ताचिन्त्यस्वाभाविकस्वरूपशक्तिवैभवेन ज्ञानबलैश्वर्य्यवीर्यकारुण्यवात्सल्यदयातितिक्षाद्यनन्तकल्याणगुणार्णवेन जगज्जन्मादिहेतुना सर्वश्रुतिशिरोरत्नवेदान्तवेद्यचरणेन रमानिवासेन भगवता श्रीवासुदेवेन विष्णुना आत्मस्थापितवेदमार्गसंरक्षणाय नियुक्तो निरतिशयात्मप्रिय आत्मशक्त्युपबृंहितानन्तशक्तिः स्वहस्ताधारको निजायुधः कोटिसूर्य्यसमप्रकाशो भगवान् सुदर्शनोऽवनितलाऽवतीर्णस्तैलङ्गद्विजवरात्मना तस्मिन्नेव देशे, नियमानन्दाभिधो भगवदीयां सनातनीं कलौ नष्टां वेदान्तसन्ततिं प्रवर्तयिष्यन् शारिरकमीमांसावाक्यार्थरूपवेदान्तपारिजातसौरभाख्यादिग्रन्थरचनाव्याजेन सर्ववेदान्तार्थं संग्रहेण संदर्भयामास । तस्य च विधिप्राप्तोपनयनादिसंस्कृताधीतषडङ्गश्रुतिजिज्ञासितधर्ममीमांसानिरस्तकर्मफलादिविषयसंदेहकतत्फलनिर्विण्णभगवद्दिदृक्षालम्पट-

गुरुभक्तिसंपन्नमुमुक्ष्वधिकारिकत्वेनाऽनन्ताचिन्त्यापरिमितस्वरूप-
गुणशक्तिवैभवपरब्रह्मभूतश्रीवासुदेवविषयकत्वेन श्रीभगवद्भावा-
पत्तिलक्षणमोक्षप्रयोजनकत्वेनाचिन्त्यापारातिगम्भीराशयत्वमाक-
लय्य मन्दमतीनां सर्वशास्त्रार्थजिज्ञासूनां शिथिलप्रयत्नानां शास्त्रा-
र्थविचारासमर्थानां मुमुक्षूणामुपकारार्थं वेदान्तरत्नभूतां शास्त्रा-
र्थकामधेनुं दशश्लोकीमपि निर्ममे । तथाच तत्रैवोक्तं स्वयमेव
अथाधीतषडङ्गवेदेन कर्मफलविषयकक्षयाक्षयत्वोभयप्रकारवाक्य-
जन्यसंशयाविष्टेन तत एव जिज्ञासितधर्ममीमांसानिश्चितकर्मत-
त्प्रकारतत्फलविषयकज्ञानवता कर्मब्रह्मज्ञानफलयोः सान्तत्वान-
न्तत्वसातिशयत्वनिरतिशयत्वविषयकव्यवसायजातनिर्वेदेन भग-
वत्प्रसादेप्सुना तद्दर्शनेच्छालम्पटेन आचार्यैकदेवेन गुरुभक्त्येकहा-
र्देन मुमुक्षुणा अनन्ताऽचिन्त्यस्वाभाविकरूपगुणशक्त्यादिभिर्बृह-
त्तमो यो रमाकान्तः पुरुषोत्तमो ब्रह्मशब्दाभिधेयस्तद्विषयिका
जिज्ञासा सततं संपादनीयेतिवाक्येन । तथाच शास्त्रं "स्वाध्यायो
ऽध्येतव्यः, स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं,
यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते,
परीक्ष्य लोकान् कर्मजितान् ब्राह्मणो निर्वेदमायात्, नास्त्यकृतःकृ-
तेन, जुष्टं यदा पश्यत्यन्यमीशं, यदा पश्यः पश्यते रुक्मवर्णं कर्तार-
मीशं पुरुषं ब्रह्मयोनिं, यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः । तमक्रतुं पश्यति
वीतशोको धातुः प्रसादान्महिमानमात्मनः, यमेवैष वृणुते तेन
लभ्यः, सर्वे वेदा यत् पदमामनन्ति, तं त्वौपनिषदं पुरुषं पृच्छामि,
नामानि सर्वाणि यमाविशन्ति, शास्त्रयोनित्वात्, वेदैश्च सर्वैरहमेव
वेद्यो, निरञ्जनः परमं साम्यमुपैति, तन्महिमानमिति वीतशोकः,
बहवो ज्ञानतपसा पूता मद्भावमागताः, मम साधर्म्यमागताः,

तन्निष्ठस्य मोक्षव्यपदेशात्, तत्तु समन्वयात्, नमामः सर्ववचसां प्रतिष्ठा यत्र शाश्वती"इत्यादि । भाषितं चेदं वाक्यं शङ्खावतारैः श्रीनिवासाचार्यचरणैः । उक्तञ्च विश्वाचार्यचरणैः—

शङ्खावतारः पुरुषोत्तमस्य
यस्य ध्वनिः शास्त्रमचिन्त्यशक्तिः ।
यत्स्पर्शमात्राद् ध्रुव आप्तकाम-
स्तं श्रीनिवासं शरणं प्रपद्ये, इति ॥

तस्या मिताक्षरैः कोष्ठचतुष्टयात्मिका वेदान्तरत्नमञ्जूषाख्या मितव्याख्या यथामति विधीयते । तत्र प्रथमे पदार्थरत्नसंग्रहः । द्वितीये संप्रदायनिर्णयपूर्वकतत्प्राप्तवाक्यार्थरत्नसंग्रहः । तृतीये साधनकदम्बरत्नसंग्रहः । चतुर्थे पूर्वोक्तशास्त्रार्थस्मरणपूर्वकफल-रत्नसंग्रह इति विवेकः ।

तत्र प्रथमे निरूपणीयपदार्थेषु तावत् त्वम्पदार्थं निरूपय-ति—

ज्ञानस्वरूपं च हरेरधीनं
शरीरसंयोगवियोगयोग्यम् ॥
अणुं हि जीवं प्रतिदेहभिन्नं
ज्ञातृत्ववन्तं यदनन्तमाहुः ॥ १ ॥

ज्ञानेति ॥ चेतनं स्वयञ्ज्योतिःस्वरूपम् । स्वयञ्ज्योतिष्ट्वं नाम करणव्यापारायत्तप्रकाशशून्यत्वम् । तेषामपि प्रकाशक-त्वात् स्वयञ्ज्योतिष्ट्वस्वरूपत्वसिद्धिः । अनेन तार्किकादिपक्षो-ऽपि व्यावर्त्यते । तथाच श्रूयते—यथा सैन्धवघनोऽनन्तरोऽबा-ह्यः कृत्स्नो रसघन एव,एवं वा रेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव, अत्रायं पुरुषः स्वयञ्ज्योतिर्भवतीति । चकारो

देहादिजडवर्गवैलक्षण्यसमुच्चयार्थको बाह्यपक्षनिरसनपरः । देहेन्द्रियमनोबुद्धिप्राणवैलक्षण्यत्वम् । तस्माद् वा एतस्मान्मनोमयादन्योऽन्तरात्मा विज्ञानमय इति श्रुतेः । परिच्छिन्नबाह्यानां पक्षे मायावादेऽतिप्रसङ्गं वारयति—ज्ञातृत्ववन्तमिति॥ज्ञानाश्रयत्वम् । योऽयं वेद जिघ्राणीति स आत्मा कतम इत्युपक्रम्य, पुरुष एव द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा विज्ञानात्मा पुरुषः, विज्ञातारम् अरे केन विजानीयात्, जानात्येवाऽयं पुरुषः, न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतां, सोत्तमः पुरुषो नोपजनं स्मरन्निदं शरीरम्, एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः । पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति, यद्वै पश्यन्न पश्यति, न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽनाशित्वात्, न हि घ्रातुर्घ्रातेर्न हि रसयितू रसयतेर्न हि वक्तुर्वक्तेर्न हि श्रोतुः श्रुतेर्न हि मन्तुर्मतेर्न हि स्पर्ष्टुः स्पृष्टेर्न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्, अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मेत्यादिश्रुतिभ्यो, ज्ञोऽत एव, कर्ता शास्त्रार्थवत्त्वादिति न्यायाद्, एतद् यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विद इति गीयमानाच्च कर्तृत्वादीनामप्युपलक्षणं ज्ञातव्यम् ।

ननु स्वयञ्ज्योतीरूपस्य ज्ञानस्यात्मनो ज्ञानाश्रयत्वं विरुद्धम् । ज्ञानत्वाऽविशेषात् । न हि जले जलं भिन्नमवतिष्ठते, ज्योतिषि ज्योतिर्वा । अतो बुद्धिवृत्तिप्रतिबिम्बितस्य चेतनस्वरूपस्य ज्ञानत्वोपचार इतिचेन्न । न हि धर्म्मिधर्मयोरत्यन्तसाजात्यमभेदनियामकम्,अपि तु भेदाग्रहमात्रमेव तयोर्ज्ञानत्वाविशेषेऽपि धर्मित्वधर्मत्वावच्छेदेन विजातीयत्वाद् दृष्टान्तासिद्धिः । द्युमणितत्प्रभयोस्तैजसत्वसाम्येऽपि द्युमणित्वप्रभात्वावच्छिन्नतया धर्मिधर्मभावस्य दृष्टचरत्वान्नानुपपत्तिः । वस्तुतस्तु जले

ज्योतिषि चात्यन्तसाजात्येन भेदाग्रहेऽपि भेदस्य सत्त्वमेव। सावयवद्रव्यत्वेनानुमानात्। अन्यथा घटादौ पार्थिवावयवानामप्यभेदः कुतो नाशङ्कनीयः। तथात्र प्रयोगः—जले निक्षिप्तं जलं भिन्नत्वेनावस्थातुमर्हति, सावयवद्रव्यत्वात्। पार्थिवरजसि निक्षिप्तपार्थिवरजोवत्। तिलराशौ निक्षिप्ततिलवच्च। किञ्च, न हि बुद्धिवृत्तिप्रतिविम्बिते चेतने ज्ञानत्वोपचाराभ्युपगमे ज्ञानजन्यव्यवहारसंभवः। तथात्वे च सूर्यप्रतिबिम्बेनापि सूर्य्यप्रकाश्यभूतदेशीयतमःशीतयोर्निवृत्तिः स्यात्। नच दृष्टचरा, युक्ता वा। किञ्चास्तां वृत्तिप्रतिविम्बितचेतनस्य ज्ञानत्वव्यवहारः। प्रतिबिम्ब एव तावन्न सिद्ध्यति। उभयोश्चेतनवृत्त्योर्बिम्बोपाध्योर्निरवयवत्वान्नीरूपत्वाच्च। तथाभूतस्यापि प्रतिबिम्बभावाभ्युपगमे रसादीनामपि शब्दादौ कालादौ वा, कालादीनामपि रसादौ प्रतिबिम्बत्वापत्तेः। एतेनैव ब्रह्मप्रतिविम्ब एव जीव इत्यपि निरस्तम्। दूषणसाम्यात्। ब्रह्मभूतविम्बस्याऽविद्यारूपोपाधेश्च निरवयवत्वादिसाम्यात्। ननु नीरूपनिरवयवस्यापि रूपस्य गगनादेश्च प्रतिबिम्बदर्शनान्नोक्तविरोध इतिचेन्न। सावयवद्रव्याश्रितस्यैव रूपस्य सूर्य्यनक्षत्रादिप्रभायुक्तस्यैवाकाशस्य तथात्वदर्शनात्। उक्तानुपपत्तेस्तादवस्थ्यमेव। वस्तुतस्तु गगनं रूप्येव। पञ्चीकृतभूतत्वात्। पृथिव्यादिवत्। अत एव सावयवत्वपरिच्छिन्नत्वयोरपि तत्र भावान्न तत्प्रतिबिम्बदर्शनम् अनुपपत्त्युद्धारे प्रयोजकम्। एतेनैवाकाशे नीलत्वादिप्रत्ययो भ्रम इत्यपि निरस्तम्। रूपादेस्तत्र सत्त्वेन भ्रमत्वोक्तेस्तुच्छतरत्वात्। नच—

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥

उपमा सूर्य्यकादिवदिति श्रुतिन्याययोर्बाध इति वाच्यम् । तयोरन्तर्यामिनिर्लेपत्वस्वतन्त्रत्वप्रतिपादनपरत्वात् । तथाहि । यथा सूर्य्यः स्वप्रभाव्याप्त्या जले तिष्ठन् न तद्गतशैत्यादिगुणैर्लिप्यते, प्रत्युत जलमेव स्वोष्मणा च प्रकाशेन चोष्णीकृत्यावभासयति । चन्द्रश्च तथैव स्वकरनिकरव्याप्त्या जलमेव भासयँस्तच्छैत्यं वर्द्धयति, न तु स्वयमपि तद्गतेन द्रवत्वेन लिप्त्वाऽऽर्द्रीभावं प्राप्नोति, तद्वत् परमात्माऽपि विश्वस्मिन् पदार्थे आत्मना एव व्याप्यावस्थितोऽपि तद्धर्म्मास्पृष्ट एव विश्वं प्रकाशते इति श्रुतिसूत्रयोरर्थः । अनेनैवोपमानेन ब्रह्मणः स्वातन्त्र्यप्रकाशकत्वं, विश्वस्य तदायत्तप्रकाशकत्वमप्युक्तं भवति । "अग्निर्यथैको भुवनं प्रविष्टो, रूपं रूपं प्रतिरूपो बभूव, एकस्तथा सर्वभूतान्तरात्मा, रूपं रूपं प्रतिरूपो बहिश्च, वायुर्यथैको भुवनं प्रविष्टो, रूपं रूपं प्रतिरूपो बभूव, एकस्तथा सर्वभूतान्तरात्मा, रूपं रूपं प्रतिरूपो बहिश्च, सूर्य्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः, एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः, एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्" इत्यादिकठवल्लीश्रुतिभ्य एकार्थत्वात् ।

ननु स्यादेतदविद्याब्रह्मणोरुपाधिविम्बयोर्निरवयवत्वनीरूपत्वाभ्यां प्रतिविम्बभावाऽनुपपत्तिः । किन्त्वविद्यावच्छिन्नमन्तःकरणावच्छिन्नं वा ब्रह्म प्रत्यगात्मशब्दाभिधेयम् । यथा घटावच्छिन्नाकाशस्य मठाकाशेन भेदस्तस्य चानवच्छिन्नेन महाकाशेनाभेदस्तथाऽन्तःकरणाऽवच्छिन्नस्य व्यष्टिरूपजीवस्याविद्यावच्छिन्नेन समष्टिरूपेण भेदस्तस्य च शुद्धेन नित्यमुक्तेनानवच्छिन्नेन ब्रह्मणाऽभेद उपाधिकृतो भेदश्चेतिचेन्न । विकल्पासहिष्णुतया

तुच्छत्वात्। तथाहि। उपाधिरविद्याभूतोऽन्तःकरणरूपो वा? चेतनं शुद्धं निर्मुक्तं निर्विशेषं ब्रह्म, कुठारः काष्ठानीव छित्वा भिनत्ति तद्वद् भिनत्ति वा? यथावस्थितमेवैकदेशे स्थित्वाऽवच्छिनत्तीतिविवेचनीयम्। नाद्यः। सर्वगतस्य निरवयवस्य वस्तुनश्छेदनानर्हत्वात्। अन्यथा ब्रह्मणो निरवयवत्वसर्वतगत्वादीनां प्रत्यगात्मनामनादित्वाजत्वादेर्भङ्गप्रसङ्गात्। तद्विषयकश्रुतिव्याकोपाच्च। नापि द्वितीयः। तत्राप्युपाधेः परिच्छिन्नत्वं, सर्वगतत्वं वा। नान्त्यः ' उत्क्रान्तिगत्याद्यनुपपत्तेः। किञ्च। ब्रह्मणो विभुत्वेनोपाधेरपि तत्त्वात् सर्वस्यापि आवृतत्वेन शुद्धस्य मुक्तप्राप्यस्योच्छेदेन जगदान्ध्यापत्तेश्च। नाप्याद्यः। उपाधेः परिच्छिन्नत्वे हि उत्क्रान्त्यादिव्यवस्थासंपत्तावपि दोषाऽन्तरस्य सत्त्वात्। तथाच उपाधेर्गमनाद्यवस्थायां सर्वगतस्य ब्रह्मणो महाकाशवन्निश्चलत्वेन घटावच्छिन्नाकाशस्य घटगमनेन गमनाऽसंभववद् गमनाऽसंभवात्। पूर्वदेशस्थस्य चेतनक्षेत्रज्ञाख्यस्याऽऽकस्मिको मोक्षस्तदुत्तरदेशस्थस्य चेतनस्य नित्यमुक्तशुद्धबुद्धरूपस्य अकस्मान्निर्हेतुको बन्धश्च पदे पदे स्याताम्। कृतनाशाकृताभ्यागमप्रसङ्गश्च। तस्मादनादरणीयोऽयमवच्छेदवादो विद्वद्भिः।

किञ्चाहमर्थस्याप्युपलक्षणमेतत्। ज्ञातृत्वाभिन्नाहमर्थत्वमिति यावत्। अहं जानामीच्छामि करोम्यनुभवामीत्यादिप्रत्ययेभ्यः।

ननु स्यादेतद्—अस्मदर्थस्यात्मस्वरूपत्वं यदि सर्वावस्थानुगतत्वं तस्य, तदेव तु न। सुषुप्त्याद्यवस्थास्वहमर्थस्य व्यभिचारदर्शनात्। अतश्च प्रकृतिकार्य्यरूप एवायमहं जानामीत्यादिप्रतीतिविषयोऽहमर्थः। अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा इति गीयमानाच्चेतिचेन्न। उक्तस्य हेतोः स्वरूपासिद्धिशून्यत्वात्। तथाहि। सुषुप्त्यादावहमर्थस्यावगमो मानसिद्धः। एता-

वन्तं कालं सुखमहमस्वाप्सं न किंचिदवेदिषम्,एतावन्तं कालं मूर्च्छित एवासमित्यादिप्रत्यभिज्ञाया एवात्र मानत्वात् । तस्मात् तत्तदवस्थायामपि सुखाज्ञानविषयकज्ञानाश्रयाऽभिन्नोऽहमर्थोऽनुगत एव । विशेषविषयाभावेन विशेषविषयकप्रत्ययस्यानुत्थानात् ।

ननु एतावन्तं कालं मामपि अहं नावेदिषमिति प्रत्यभिज्ञानस्यास्मदर्थाभावविषयकस्यापन्होतुमशक्यत्वाद् व्यभिचारस्यतादवस्थ्याद्धेतुसिद्धिरितिचेन्न । भवदभिमेते प्रत्यभिज्ञानेऽपि तस्यानुगतत्वेन सत्त्वात् तत्र मामिति कर्मभूतद्वितीयान्तस्यास्मदर्थस्य जाग्रदाद्यवस्थानुभूतानादिकर्मसंस्कारनिरूपिताऽऽत्मत्वाभिमतदेहादियुक्तो विषयः । अहमित्यस्य प्रथमान्तस्य कर्तुरस्मदर्थस्य देहेन्द्रियादिविलक्षणशुद्धभगवदात्मकप्रत्यक्पदार्थो ज्ञाता विषयः । तथाच मामिति जाग्रदनुभूतस्य देहादियुक्तस्यात्मत्वेन अभिमतस्य तत्राभावान्निषेधविषयत्वं सूपपन्नम् । तथैव चाहमिति देहादिवियुक्तस्य शुद्धास्मदर्थस्य तत्र भावेन विशिष्टाभावविषयाऽनुभवाश्रयस्य तत्रापि सत्त्वात् तस्य ज्ञातृतया भानमपि सूपपन्नतरम् । *देहाद्यवच्छिन्नाहमर्थाभावविषयकानुभवाश्रयाभिन्नाऽहमर्थस्योक्तप्रत्यभिज्ञानविषयत्वे सति* । एवमहमर्थस्य सर्वावस्थाऽनुगतत्वाद् अनुभवस्मृत्योरेकाधिकरण्यनियमाच्च उक्तहेत्वसिद्धेस्तादवस्थ्यमेव । अन्यथा एतावन्तं कालं नाहमासम्, इदानीं जातोऽहम्,एतावन्तं कालं नाहमभवं, किन्तु किञ्चिदनुभवमात्रमासीदिदानीं तदन्योऽहमस्मीत्यादिप्रत्यभिज्ञानं स्यात् । तस्य तु कुत्राप्यदृष्टचरत्वाद्, अनुपपन्नत्वाच्च । तत्सिद्धम् उक्तप्रत्ययप्रमाणाज्ज्ञात्रभिन्नाहमर्थ एवात्मस्वरूप इति ।

किञ्च सर्वश्रुतिमूलभूतस्य सर्वमन्त्रभूषणरूपस्याप्यस्मदर्थ-

प्रयोगदर्शनाद् गायत्र्याख्यमन्त्रस्यायमेवार्थः । ज्ञात्रभिन्नास्मदर्थ एवात्मेति यावत् । ननु आत्मबुद्ध्योरन्योन्याध्यासाभिप्रायप्रयुक्तोऽयमस्मच्छब्दो नात्मस्वरूपविषयक इतिचेन्न । धीशब्दस्य पृथक् प्रयोगात् । अयमभिप्रायः । वेदमातृगायत्र्याख्याया देवतायाः सर्वज्ञत्वं, न वेति विवेचनीयम् । आद्ये, तया देवतयाऽयमस्मच्छब्दप्रयोगो ज्ञात्वैवाध्यासाभिप्रायेण दर्शित इति वक्तुं नैव शक्यः । अन्यथा मात्रादेरपि वत्सलतरायास्तस्या एवंभूतमिथ्यात्वोपदेशे सर्ववञ्चकतयाऽनाप्तत्वापत्तेः । द्वितीयेऽज्ञत्वादेवाप्रामाणिकत्वापत्तेस्तन्मूलकस्य सर्वस्यापि वेदस्य तच्छाखारूपस्याप्रामाणिकतरत्वापत्तेश्च । सर्वस्य वेदस्य बाधायां सत्यां बाह्यमतस्यैव वरीयस्त्वापत्तेश्च ।

किञ्चास्तां तावत् सुषुप्त्यादावहमर्थस्य व्यभिचारशङ्काऽवकाशो, मोक्षदशायामपि तस्यानुगतत्वेनात्मस्वरूपतासिद्धेरविरुद्धत्वात् । तथाहि । महाप्रलये विश्वलयात्मकेऽवशिष्यमाणस्यैकाद्वितीयादिशब्दाभिधेयस्य परब्रह्माख्यस्य पुरुषोत्तमस्य नित्यमुक्तत्वं निर्विवादम् । तथाच तस्यापि ज्ञात्रभिन्नाहमर्थस्वरूपत्वं श्रावयन्त्यस्तत्साम्यप्राप्तानां मुक्तानामपि तथात्वमर्थतः प्रतिपादयन्ति वेदान्तश्रुतयः । ब्रह्मैवेदमग्र आसीत्, तदात्मानं, वेदाहं ब्रह्मास्मीति, बहु स्यां प्रजायेय, नामरूपे व्याकरवाणि, त्रिवृतं त्रिवृतं करवाणीत्यादयः । मुक्तानामपि वामदेवादीनां तथैवानुभवश्रवणाच्चापि । तद्धै पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चेति ।

किञ्च, वेदाहं समतीतानि वर्तमानानि इति अस्मदर्थस्यैव सर्वज्ञत्वम् । अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा, अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तत इति विश्वोत्पत्तिस्थितिप्रवृत्तिसंहारकार-

२

णत्वम् । इति मत्वा भजन्ते मां बुधा भावसमन्विता इति भजनीयविषयत्वम् । तद्भजतां च ज्ञानित्वम् । तेषामहं समुद्धर्ता मृत्युसंसारसागरादिति संसारनिवारकत्वम् । तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वतेति अनुकम्पादिगुणाऽऽश्रयत्वं, ज्ञानदातृत्वम्, अज्ञाननाशकत्वं, सर्वधीनिष्ठत्वञ्च । भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति इति तद्विषयकज्ञानस्यैव मोक्षान्तरङ्गहेतुत्वम् । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते । मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः परां सिद्धिमितो गताः । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। बहवो ज्ञानतपसा पूता मद्भावमागता इति । मुक्तोपसृप्यव्यपदेशात् । तन्निष्ठस्य मोक्षव्यपदेशादिति सूत्रोक्तमुक्तोपसृप्यत्वम् । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिमिति तदप्राप्तेः संसृतिहेतुत्वम् । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम इति पुरुषोत्तमत्वम् । अहमात्मा गुडाकेश, क्षेत्रज्ञं चापि मां विद्धि इति विश्वान्तरात्मत्वम् । विष्टभ्याहमिदं कृत्स्नमिति विश्वाधारत्वम् । न तदस्ति विना यत् स्यान्मया भूतं चरचरमिति विश्वव्यापकत्वम् । सर्वस्य चाहं हृदि सन्निविष्ट इति सर्वधीवृत्तिप्रवर्तकत्वम् । वेदैश्च सर्वैरहमेव वेद्य इति सर्वशास्त्रयोनित्वम् । अपरेयमितस्त्वन्यां, जीवभूतां महाबाहो ययेति चेतनाचेतनप्रकृत्यधिष्ठातृत्वम् । अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम् । मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिता इति तदवज्ञाया मूढत्वराक्षसत्वासुरत्वमोहत्वभावापत्तिकारणत्वम् । मामेकं शरणं व्रजेति सर्वशरण्यत्वम् । अहं त्वां सर्व-

पापेभ्यो मोक्षयिष्यामि मा शुच इति निःशेषपापनिवारकत्वम्। न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः। न चैव न भविष्यामः सर्वे इति कालत्रयाऽबाध्यत्वम्। मत्तः परतरं नाऽन्यत् किञ्चिदस्ति धनञ्जय इति साम्यातिशयशून्यतया ईश्वरकल्पानामपि नियन्तृत्वरूपं निरतिशयैश्वर्यं च स्वयमेव श्रीमुखेन गानात्। सर्वस्यापि गीताशास्त्रस्यास्मदर्थाभिन्नसर्वज्ञानन्ताचिन्त्यशक्त्याश्रयपुरुषोत्तमविषयकत्वमवगम्यते उदाहृतेभ्यो हेतुगर्भितश्लोकेभ्यः। तस्मादहमर्थ एव परब्रह्मभूतो विश्वात्मा भगवान् वासुदेव इति सिद्धम्।

एवमेव कर्तृत्वमपि। तथाहि। तन्मनोऽनुकुरुतेत्यादिवाक्ये मनसः कर्मत्वं, शृण्वन्तः श्रोत्रेण विद्वांसो मनसेति करणत्वम्। मन उत्क्रामन्मीलित इवाश्नन् पिबन्नास्ते इत्यादिश्रुतौ मनस उत्क्रमणानन्तरमपि आत्मनः कर्तृत्वं, परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते जक्षन् क्रीडन् रममाणः सह ब्रह्मणा विपश्चितेति परमोक्षदशायां भगवद्भावापत्त्यनन्तरमपि कर्तृत्वं श्रूयते उदाहृतश्रुतिभ्यः। अतः सर्वावस्थानुगतत्वात् कर्तृत्वं स्वाभाविकमेवेत्यवगम्यते। इतरथा मनस एव कर्मत्वकरणत्वकर्तृत्वादिप्रसङ्गो दुर्वारः। तथात्वासंभवात्। अदृष्टचरत्वात्। नापि सुषुप्त्यादौ तदभावः शङ्कनीयः। ज्ञातृत्ववत् तस्यापि अनुगतत्वात्।

किञ्च बद्धावस्थायां ज्ञानादिसंकोचेन करणनिमित्तकत्वाद्विशेषकर्तृत्वस्य करणानां च सुषुप्त्यादौ लयात् तदभावं न विरुद्ध्यते। नचैवं जाग्रदवस्थायां कदाचिदपि तदुपरमो न स्यादिति वाच्यम्। विशेषविषयसंबन्धिक्रियाया अपि तत्सहकारित्वात्। तस्या अभावे तदनाविर्भावो विरुद्धः। ननु करणक्रियादिनिमित्तकात्मनिष्ठकर्तृत्वकल्पने महागौरवाद् वरीयान्

उपाधेरेव कर्तृत्वाभ्युपगम इति चेन्न । उपाधेर्जडस्य कर्तृत्वाऽभ्युपगमेऽतिप्रसङ्गात् । ननूपाधिसंबन्धादकर्तुरप्यात्मनः कर्तृत्वं, नोपाधिमात्रस्येतिचेन्न । तथात्वे नपुंसकस्यापि स्त्रीसंबन्धमात्रेण प्रजोत्पत्तिः स्वीकरणीया स्यात् । एवं कुत्राप्यदृष्टचरीऽनुपपन्ना चेति । तस्मात् स्वाभाविककर्तृत्वाद्याश्रयस्यैवात्मनः स्वाभाविकदहनशक्त्याश्रयस्याग्नेः काष्ठादिसंबन्धेन तदाविर्भाववत् करणादिसंबन्धनिमित्तकस्तदाविर्भाव उपपन्नतरः । नचैवं कर्तृत्वनिषेधविषयकशास्त्रबाध इति वाच्यम् । तस्य स्वतन्त्रत्वावच्छिन्नकर्तृत्वादिनिषेधविषयकत्वेन समञ्जसत्वात् । अन्यथा, कर्ता शास्त्रार्थवत्त्वादित्यधिकरणबाधस्यापि तुल्ययोगक्षेमत्वात् कथं नालोच्यते वादिभिः । ननु तस्य बुद्ध्यवच्छिन्ननिष्ठकर्तृत्वविषयकत्वान्न बाध इतिचेन्न । अशब्दानुमानिकसांख्यमतप्रवेशात् । तत्र दोषाणां पूर्वमेवोद्घाटितत्वात् । निराकृतत्वाच्चावच्छेदप्रतिबिम्बवादयोः । तस्माज्ज्ञातृत्ववत् कर्तृत्वमपि स्वाभाविकमात्मनः स्वरूपनिरूपितो धर्मविशेष इति साधीयान् ।

एवं भोक्तृत्वादयोऽप्यूहनीयाः । तथाहि सुषुप्त्यादौ सुखादिभोक्तृत्वे प्रत्यभिज्ञायाः, मोक्षे भगवत्स्वरूपगुणादिविषयानुभवानन्दभोक्तृत्वे, जक्षन् क्रीडन् रममाणः सह ब्रह्मणा विपश्चितेति श्रुतेश्च प्रमाणत्वात् ।

यद्वा ज्ञानस्वरूपमित्यनेनैव तार्किकपक्षव्यावृत्तिवद् बाह्यपक्षव्यावृत्तिरप्यर्थसिद्धा । उभयोरपि अचेतनात्माङ्गीकारसाम्यात् । चकारोऽहमर्थत्वसमुच्चयार्थक एवेति पदस्वारस्यं ज्ञेयम् ।

ननु स्यादेतत्, तथाप्युक्तलक्षणस्य परब्रह्मणि पुरुषोत्तमाख्येऽपि समन्वयात् तत्राऽतिप्रसङ्गस्तस्यापि लक्ष्यत्वाभ्युपगमेऽस्मत्पक्षपातादसन्ताभेदसिद्धेः सिद्धान्तभङ्ग इति चेत् तत्राह—

हरेरिति ॥ श्रीपुरुषोत्तमायत्तस्वरूपस्थितिप्रवृत्तिकत्वं, सर्वनियन्तुर्विश्वात्मनः श्रीवासुदेवस्यायत्तं,नियततन्त्रं स्वरूपं,स्थितिश्च, प्रवृत्तिश्च यस्य तत्त्वं, सर्वदेशसर्वकालीनवस्तुविषयकज्ञानादौ क्रियाप्रवृत्त्यादौ च स्वातन्त्र्याऽभावत्वमिति यावत्। तथाच देहादिजडवर्गभिन्नचेतनत्वे ज्ञानाश्रयत्वे च सति भगवदायत्तस्वरूपस्थितिप्रवृत्तिकत्वं त्रिविधानां प्रत्यगात्मनां साधारणम्। तत्र प्रत्यन्तस्य विशेषणद्वयात्मकस्य परमात्मसाधारणत्वेऽपि न क्षतिः। उत्तरदलस्याऽसाधारणस्य व्यावर्तकत्वान्नोक्तदोषगन्धस्पृष्टत्वात-स्पर्शावकाशः। उक्तासाधारणत्वे, श्रुतयः—"तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति, एष एव साधु कर्म्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते, आत्मा हि परमः स्वतन्त्रोऽधिगुणो, जीवोऽल्पशक्तिरस्वतन्त्रोऽवरः। अचिन्त्यशक्तिः पुरुषः पुराणः, नचान्येषां शक्तयस्तादृशाः स्युः, स कारयेत् पुण्यमथापि पापं न तावता दोषवानीशिताऽपि" इत्यादयः। "बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः। सुखं दुःखं भवो भावो भयं चाभयमेव च। अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः। भवन्ति भावा भूतानां मत्त एव पृथग्विधाः। ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया। सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च" इति श्रीमुखेन स्वयमेव गीतानि च। जगद् वशे वर्ततेऽदः कृष्णस्य सचराचरमिति भीष्मश्चाह।

नन्वीश्वरस्यैव पुण्यापुण्यकर्मणां प्रयोजककर्तृत्वाभ्युपगमे वैषम्यनैर्घृण्यप्रसक्तिः स्यादितिचेन्न। कर्मसापेक्षत्वात्। तथाह भगवान् सूत्रकारः—वैषम्यनैर्घृण्ये न सापेक्षत्वादिति। ननु

तर्हि कर्मण एव प्रयोजकत्वमभ्युपगन्तव्यं, किमीश्वरेण सापेक्षेणेतिचेन्न । तस्य जडत्वेन कर्तृत्वनियन्तृत्वादेरसंभवात् । अन्यथा घटादावतिप्रसङ्गाच्च । नच प्रलये कर्मणोऽप्यभावात् कथमिव तत्सापेक्षत्वं परमात्मनः संपादनीयमिति वाच्यम् । कर्मणामनादित्वात् । इतरथा सृष्ट्यभावप्रसङ्गः । कृतनाशाऽकृताभ्यागमप्रसङ्गश्च । तथाच सूत्रं—न कर्माविभागादितिचेन्नानादित्वादिति । तस्मात् कर्मसापेक्षत्वात् पुण्यापुण्यादिप्रयोजकस्य नियन्तुर्न वैषम्यादिशङ्कावकाशः ।

एतदुक्तं भवति—यथा व्रीह्याम्रकण्टकादीनां विषमाणामप्युत्पत्तौ पर्जन्यस्यासाधारणहेतुत्वेऽपि वैषम्यस्य तत्तद्बीजवृत्तित्वेन न पर्जन्ये तत्प्रसक्तिरेवमेव पुण्यापुण्यसुखदुःखादीनां विषमाणामपि साधने परमात्मनोऽसाधारणत्वेऽपि वैषम्यस्य तद्बीजात्मकानादिकर्म्मनिष्ठत्वेन परमेश्वरे भगवति न वैषम्यादिप्रसङ्ग इति । तथाच श्रुतिः—पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति। नचैवं मुक्तौ कर्मणोऽभावादीश्वरतन्त्रत्वस्याभाव इति वाच्यम्। नियन्तृत्वनियम्यत्वयोस्तत्त्वम्पदार्थस्वरूपत्वात्। न हि स्वरूपनाश एव मुक्तिरपि तु स्वरूपापत्तिरेवेति । किञ्च । न वयं ब्रह्मनियन्तृत्वस्य कर्मसापेक्षत्वं ब्रूमः, किन्तु पुण्यादिकर्मकारयितृत्वे तत्फलदातृत्वे च। तयोर्मुक्तावभावेऽपि स्वरूपस्थितिप्रवृत्त्यादौ नियन्तृत्वस्य सदायतनत्वात् सर्वं समञ्जसम्। नच स्यादेतत्, तथापि परमात्मनः सर्वप्रयोजकत्वाभ्युपगमे शास्त्राऽऽचार्योपदेशस्य वैयर्थ्यापत्तिरिति वाच्यम्। भगवदायत्तस्वरूपस्थितिप्रवृत्त्यादिविषयकज्ञानाभाववन्तमेव मुमुक्षुमधिकृत्य शास्त्रस्य प्रवृत्त्यभ्युपगमात् सर्वमनवद्यम् ।

किञ्च, प्रत्यगात्मानः, परमात्मायत्तस्वरूपस्थितिप्रवृत्तिकाः।

तदात्मकत्वात्। यो यदात्मकः स तदायत्तस्वरूपस्थितिप्रवृत्तिकः। मृदात्मकघटादिवत्। घटादीनां मृदात्मकत्वेन मृदायत्तस्वरूपस्थित्यादेर्दृष्टचरत्वाद् उक्तसिद्धान्ताऽनुमानस्यापि प्रमाणत्वम्। नचाचेतने व्यभिचारत्वेन हेतोरनैकान्त्यमिति वाच्यम्। तस्यापि साध्यत्वसाम्यात्। नन्वेवं तर्हि दृष्टान्तासिद्धिरितिचेन्न। व्यतिरेकिदृष्टान्तस्य खपुष्पादेः सत्त्वात्। चेतनाचेतनवस्तुजातं, ब्रह्माऽऽयत्तस्वरूपस्थितिप्रवृत्तिकम्। तदात्मकत्वात्। यन्नैवं तन्नैवम्। खपुष्पनरविषाणाद्यवस्तुवत्। किञ्चेश्वरपारतन्त्र्यस्येश्वरेऽपि सत्त्वादात्मायत्तत्वात् परमात्मनः परस्येति ब्रह्मण्यतिव्याप्तिस्तद्वस्थैवेति। तर्काऽभिज्ञस्य देवानांप्रियस्य तात्पर्यमाकलय्य तद्व्यावृत्त्यर्थमन्यदसाधारणविशेषणं वदन् प्रत्यग्वृत्तिपरिमाणविवादं निराकरोति—अणुमिति॥ यद्वा, किंपरिमाणकोऽसौ प्रत्यगात्मेत्याशङ्कायां वैभवमाध्यमपरिमाणवादितार्किकादिबाह्यादिपक्षौ निराकरोति—अणुमिति॥ अणुपरिमाणकमिति यावत्। "अणुर्ह्येष आत्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश, अणुर्वा ह्येष आत्मा यं वा एते सिनीतः, पुण्यं पापं, बालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चाऽऽनन्त्याय कल्पते" इत्यादिश्रुतेः। "उत्क्रान्तिगत्यागतीनां, नाणुरतच्छ्रुतेरितिचेन्नेतराधिकारात्, तद्गुणसारत्वात् तद्व्यपदेशः प्राज्ञवद्" इत्यादिन्यायाच्च।

नन्वणुपरिमाणकस्य प्रत्यगात्मनो देहातिसूक्ष्मतमाल्पतरैकदेशस्थत्वेन मेर्वेकातिसूक्ष्मदेशस्थसर्षपस्येव सर्वशरीरानुसन्धातृत्वप्रकाशकत्वतत्तदवयववृत्तिसुखदुःखाद्यनुभवितृत्वादीनामसंभवस्य दुर्वारत्वान्नाणुत्वोपपत्तिरितिचेन्न। धर्म्मिणो जीवात्मनोऽणुत्वेऽपि तदाश्रितधर्मभूतज्ञानस्य विभुत्वेन सर्वस्य सामञ्ज-

स्यं स्यात् । गुणाद्वा लोकवदिति न्यायात् । "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारते"ति दृष्टान्तोपपत्तिसहकृतभगवद्वचनाच्च । एतेनैव विभुविषयकशास्त्रस्यापि नैराकाङ्क्ष्यं व्याख्यातम् ।

ननु बुद्ध्युपाधिकृतमेवेदं श्रूयमाणमणुत्वं,न वास्तवम् । बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्ट इति श्रवणाद्विभुपरिमाणकत्वमात्मनोऽभ्युपगन्तव्यमिति चेत् । अहो विवेकनैपुण्यं देवानां हितकारिणः !! । स्वहस्तेनैव स्वगृहदाहो नालोच्यते कथम् । भवद्भिरुदाहृतश्रुतेरणुपरत्वेनास्मदिष्टत्वाद्, युष्मदनिष्टत्वाच्च । तथाहि । बुद्धेः परिमाणलक्षणेन गुणेन, तथैवात्मपरिमाणलक्षणेन गुणेन चोभयथाऽपि अवरः प्रत्यगात्मा अणुपरिमाणक एव दृष्टः सूक्ष्मदर्शिभिरेकाग्रमनस्कैः । अवधारणेनान्ययोगव्यवच्छेदपरेण मध्यमविभुपक्षौ निरस्येते, न मध्यमपरिमाणको विभुपरिमाणको वा, किन्त्वाराग्रमात्रोपलक्षिताणुमात्र एवेत्यवधारणार्थः । यत्तूक्तं विभुरेवात्मेति तत्तुच्छम् । तथाहि । विभुत्वे बहुत्वमेकत्वं वा प्रत्यगात्मन इति विवेचनीयम् । नाद्यः । तत्र मनसोऽणुत्वे विभुत्वे वा सर्वेषामपि विभूनां प्रत्यगात्मनां सर्वमूर्तसंयोगवत्त्वाविशेषात् सर्वैर्मनोभिः सह नित्यसंयुक्ततया सर्वेषां सर्वान्तरवृत्तिज्ञातृत्वापत्तेः । अत एव ब्रह्मण्यतिप्रसङ्गाच्च । अहं त्वमयमिति प्रत्ययानां निगमनाविरहेण विभागाभावापत्तेश्च । आत्मत्वेन मनःसंयोगत्वेन च विशेषाभावात् । नचात्मत्वसाम्येऽपि तत्तत्कर्म्मतज्जन्मसंस्कारविशिष्टमनोवैलक्षण्यादीनां परस्परभिन्नत्वेन नियामाकानां सत्त्वान्नोक्तदोषावकाश इति वाच्यम् । तत्तत्कर्म्मादृष्टादीनामपि नियामकत्वेनाभ्युपेतानां परस्परभिन्नानामपि सर्वेष्वात्मसंबन्धाऽविशेषात् ।

तत्राप्यन्यकल्पनेऽनवस्थापत्तेश्च । न द्वितीयः । तत्राप्येकस्य विभोरात्मनः सर्वैरन्तःकरणरूपोपाधिभिरवच्छिन्नत्वात् सर्वेषामुपहितानां सर्वज्ञातृत्वं समानम्। अन्यथा त्वस्यैवैकस्मिन् देशे वर्तमानानामन्तःकरणानां संबन्धेन तत्कृतदुःखाद्यनुभवत्वाऽभ्युगमे देवदत्तस्य स्वशिरःपादाद्यवयववृत्तिवेदनानुसंधानाभावप्रसङ्गात् । अननुसंधातुर्देहवज्जडत्वापत्तेः । ज्ञातृत्वादेरुपाधिधर्म्मत्वाभ्युपगमात् । उपाधेश्च चेतनत्वापत्तेश्च । उपाधेश्चाणुत्वस्वीकारेण शिरःपाण्याद्यवयवैर्युगपदसंबन्धतया तद्गतसुखादीनां युगपदनुसंधानाभावापत्तेश्च । उपाधेर्मध्यमपरिमाणाङ्गीकारे तदवच्छिन्नस्यापि तथात्वापत्त्या बौद्धपक्षस्वीकारापत्तेश्च । उपाध्यणुत्वनिरूपितजीवात्माणुत्वप्रतिपादितसिद्धान्तभङ्गाच्चोक्तेभ्यो हेतुभ्यो महापापीयानयं पक्षः । उक्तसिद्धान्तस्यैव श्रौतत्वाद् वरीयस्त्वम् ।

स्यादेतत् । तथाप्यणुत्वे निरवयवत्वस्याप्यवश्यंभावात् तथात्वे चेश्वरस्य तत्र व्याप्त्यसंभवेनान्तर्यामित्वभङ्गप्रसङ्गादितिचेन्न तुच्छतरत्वाच्छङ्कायाः । जीवस्य निरवयवत्वाणुत्वयोः सतोरपि परस्य व्यापनशीलत्वेनैव सर्वत्र व्यापकत्वात् । तथाहि । न हि नियन्तृनियम्यभावे, व्याप्यव्यापकभावे वा सावयवत्वनिरवयवत्वयोः प्रयोजकत्वम् । तथात्वे कालशब्दस्पर्शरूपादीनां निरवयवाणां नियम्यत्वाभावप्रसङ्गात् । किन्तु वस्तुगतव्याप्यव्यापकताशक्तिरेव नियामिका । एवञ्च सर्वगतस्य नियन्तुः सर्वव्यापनस्वरूपशक्तिमत्त्वात् सर्वमनवद्यमिति कृतं विस्तरेण । एवमेतैर्विशेषणैर्नित्यमुक्तादीनां साधारणलक्षणोक्त्या स्वरूपगुणपरिमाणानि निरूपितानि ।

इदानीं बद्धानां विशेषमाह—शरीरसंयोगवियोगयोग्य-

मिति ॥ अत्र शरीरशब्दस्तत्कारणभूतानादिकर्मात्मकाविद्योपलक्षणार्थः। कार्य्यकारणयोरभेदात्। अनादिकर्मरूपाविद्यावच्छेदलक्षणबन्धार्हत्वे सति तन्निवृत्तिपूर्वकभगवद्भावापत्तिलक्षणमोक्षार्हमिति यावत्। तथाहि। अनादिकर्मात्मकाविद्यावच्छिन्नो देवतिर्य्यङ्मनुष्यादिदेहरूपं संसारचक्रमनुभवन् श्रीभगवन्निर्हेतुककृपाकटाक्षावलोकितः, आचार्य्यदेवो भूत्वा तन्मुखनिर्झरितसच्छास्त्रसुधाल्पावितसंशयादिरोगो, भगवत्स्वरूपादिविषयकध्यानसन्ततिपरिपाकलब्धसाक्षात्कारनिरस्तकर्म्मबन्धो भगवद्भावापत्तिलक्षणमोक्षभागी भवतीति वाक्यार्थः। "यमेवैष वृणुते तेन लभ्यः। तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्। भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे। यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इत्यादिश्रुतिभ्यः। मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् इत्यादिभगवदुक्तेश्च।

ननु श्रीपुरुषोत्तमानुग्रहः परिच्छिन्नो? विभुर्वा?। नाद्यः। जीवानुग्रहवदप्रयोजकतयाऽकिञ्चित्कारित्वात्। कालादिपरिच्छेदेनानित्यत्वाच्च। नापि द्वितीयः। सर्वत्र व्याप्त्या सर्वमोक्षप्रसङ्गात्। तत्साधनतत्प्रतिपादकशास्त्रस्य वैयर्थ्यापत्तेश्चेतिचेन्न। व्यापकस्यापि तस्य श्रवणादिसाधनसंपन्ने आचार्य्यदेवभक्तिसंपृक्ते एवाविर्भावो, नान्यत्र। यथा न्यायपक्षे व्यापकस्यापि गोत्वादेः सास्नादिमत्येव संबन्धो, नान्यत्र। यथाचौपनिषदानां सिद्धान्ते ब्रह्मस्वरूपस्य विश्वात्मनः, अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इति वचनात् सर्वत्र व्याप्त्यापि क्वचिदेव तदधिकारिविशेष आसन्नमोक्षके तत्साक्षात्कारो, नान्यत्र, तद्वत्।

एतेनैव सर्वेषामपि भगवदीयगुणानां स्वरूपवद् व्यापकत्वं मोक्षादिदानहेतुत्वं, स्वाभाविकत्वं चोक्तं भवति । अतो न सर्वमोक्षप्रसङ्गदोषोत्थानाऽवकाशः । नापि साधनादिवैयर्थ्यापत्तिः । स्वाभाविकी ज्ञानबलक्रिया चेत्यादिश्रुतेः । एतच्चाऽग्रे निपुणं वक्ष्यामः ॥

अथ संख्याविवादं निराकरोति—प्रतिदेहभिन्नमिति ॥ देहं देहं प्रति भिन्नमिति प्रतिदेहभिन्नम् । ब्रह्मादिस्थावरान्तेषु चतुर्विधेष्वपि देहेषु स्वरूपेणैव भिन्नमिति यावत् । अनेन परमात्मनो जीवानां च महद्वैलक्षण्यमुक्तम् । परमेश्वरस्य सर्वत्रैकत्वात् । अत एव प्रत्यगात्मनामपि मिथोभेदसिद्ध्या एकजीववादिपक्षो निरस्तः । अन्यथा एकस्मिन्नपि सुप्ते मूर्छिते मृते वा निखिलस्यापि प्रतीत्यापत्तेः । एतेनैव सुखादिगुणसांकर्य्यशङ्कापि दूरतो निरस्ता भवति । तथाच शास्त्रम्—"अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा, य आत्मनि तिष्ठन् आत्मानमन्तरो यमयति एष ते आत्माऽन्तर्याम्यऽमृतः, नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, धियो यो नः प्रचोदयात्, शारीरश्चोभयेऽपि हि भेदेनैनमधीयते, भेदव्यपदेशाच्चाऽन्यः, अधिकं तु भेदनिर्देशात्, न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः । न चैव न भविष्यामः सर्वे वयमतः परम् । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च । बहवो ज्ञानतपसा पूता मद्भावमागता" इत्यादि ॥

तथात्वेऽप्येकैकस्य जीवस्योक्तसाधनसंपत्त्या क्रमेण मोक्षाऽभ्युपगमे कदाचित् सर्वेषामेव मोक्षापत्तौ निःशेषकार्य्यकारणात्मकविश्वात्यन्ताभावप्रसङ्ग इत्याशङ्क्य समाधत्ते—यदनन्तमाहुरिति ॥ यद् यस्माज्जीवमनन्तमाहुस्तस्मान्नोक्तशङ्कावकाश

इत्यर्थः । अनन्तत्वं चात्र संख्यानिरूपितावसानशून्यत्वम् । असंख्याकमिति यावत् । आहुरित्यत्र वेदान्तवाक्यानि महर्षयश्चेति योज्यम् । तानि च पूर्वमेवोदाहृतानि । जीवमित्यत्रैकवचनोक्तिर्जीवत्वसामान्याभिप्रायिका । अन्यथा प्रतिदेहभिन्नमनन्तमित्यनयोर्विशेषणयोर्वैयर्थ्यापत्तेः । नचैकजीववादपक्षेऽपि उपाधिनैव तयोः संभव इति वाच्यम् । तथात्वेऽपि पूर्वोक्तदोषस्य तादवस्थ्यात् । तस्माज्जीवत्वजात्यभिप्रायकमेवात्रैकवचनमित्येव वरम् । आचार्य्यप्रोक्ता या जातिः, सा नित्या साऽजराऽमरेति उद्योगपर्वणि सनत्सुजातवचनात् ॥ १ ॥

एवं तावत् प्रत्यगात्मनः स्वरूपगुणपरिमाणसंख्याविशेषेषु प्रमाणपूर्वकं निरूपितेषु सत्सु तथाभूतप्रमाणसिद्धस्वरूपकं परमार्थसद्वस्तु चेत् कथं नानुभूयते इति शङ्कां परिहरन् विशिनष्टि—

अनादिमायापरियुक्तरूपं
त्वेनं विदुर्वै भगवत्प्रसादात् ॥
मुक्तं च बद्धं किल बद्धमुक्तं
प्रभेदबाहुल्यमथैषु बोध्यम् ॥ २ ॥

अनादिमायापरियुक्तरूपमिति ॥ अनाद्या अघटघटनापटीयस्या गुणमय्या मायया प्रकृत्या परियुक्तं परिवेष्टितं संकुचितं रूपं धर्मभूतज्ञानं यस्य तम् । श्रीभगवतः पुरुषोत्तमात् । पराङ्मुखतयाऽनादिकर्म्मात्मकाविद्यावच्छिन्नत्वाद् देहेन्द्रियादिलक्षणमायागुणाब्धितरङ्गताडितस्वरूपत्वेनात्यन्तसंकुचितज्ञानत्वान्नानुभूयते प्रत्यगात्मतत्त्वमित्यर्थः ।

ननु, एवं तर्हि, गौरनाद्यन्तवतीत्यादिश्रुतेर्मायागुणप्रवाहस्य अनाद्यनन्तत्वात् कदाचिदपि तज्ज्ञानं न स्यात् । तथात्वे च तितिक्षाविषयत्वमेव तद्विविदिषायाः, सुतरां वैयर्थ्यं च तत्प्रतिपादक-

शास्त्रस्यापीतिचेत् तत्राह–त्वेनं विदुर्वै भगवत्प्रसादादिति । वा इति निश्चयार्थः । तुशब्दः शङ्कानिरासपरः । एवं प्रमाणसिद्धमपि प्रत्यगात्मानं श्रीभगवतः पुरुषोत्तमस्यानुग्रहाद् विदुः। भगवदीयाऽनादिवैदिकसत्संप्रदायानुयायिन इति शेषः। तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मन इति श्रुतेः। एतदुक्तं भवति। मायाया अनाद्यनन्तत्वेऽपि तत्तत्क्षेत्रज्ञविशेषकर्म्मनिमित्तकबन्धमोक्षयोरीश्वरस्यैव प्रदातृत्वेन नियामकत्वात् । न माया, भावाभावयोः संसारबन्धस्थितिमोक्षहेतुरिति श्रुतेः । "बन्धको भवपाशेन भवपाशाच्च मोचकः । कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः । दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इत्यादिस्मृतेश्च । तस्मात् तद्विषयकज्ञानसंकोचलक्षणाज्ञाननिवृत्तौ तज्ज्ञानविकाशो भवत्येव, घटस्थदीपस्य तदात्मकप्रतिबन्धसंकुचितप्रभस्य घटात्मकप्रतिबन्धनिवृत्तौ तत्प्रभाप्रकाशवत् । तस्मात् तज्जिज्ञासायाः सार्थकत्वान्न तितिक्षाविषयना, नापि तद्विधायकशास्त्रवैयर्थ्यमिति ।

नन्वनुग्रहस्यान्योपायसापेक्षत्वं न वा । नाद्यः । अप्रधानतापत्तेः । अन्योन्याश्रयापत्तेश्च। नापि द्वितीयः। सर्वत्र व्याप्तिप्रसङ्गादिति चेन्न । तस्य निरपेक्षत्वेऽपि नैर्घृण्यादिदोषनिवृत्तये, उपायान्तरप्रतिपादकशास्त्रबाधानिवृत्तये च साधनान्तरस्य व्याजमात्रत्वाभ्युपगमान्नोक्तविकल्पावकाशः । इदमत्राकूतम् । यद्यपि, न तत्समश्चाभ्यधिकश्च दृश्यते, न तत्समश्चाभ्यधिकः कुतोऽन्य इति श्रुतिस्मृतिभ्यः श्रीपुरुषोत्तमस्य रमाकान्तस्यातिशयसाम्यशून्यस्य भगवतः स्वतन्त्र एव प्रसादो, निरङ्कुशैश्वर्य्यत्वात् । तथापि साधनान्तरप्रतिपादकशास्त्रस्यापि स्वसत्यप्रतिज्ञत्वापादकत्वाद् बाधा मा भूत्, तस्मिन् बाधिते सति स्वस्य प्रतिज्ञाहानिप्रसङ्गेनानि-

ष्टत्वात् । इतरथा, रामो द्विर्नाभिभाषत इत्यादिशास्त्रबाधात् साधनान्तरस्यापि व्याजीक्रियते । किञ्च । सर्वथा निर्व्याजत्वाभ्युपगमे, नैर्घृण्यादिप्रसङ्गः स्यात् । न हि व्याजमात्रस्य वस्तुनः स्वातन्त्र्यहानिकारकत्वे शक्तिः । तथात्वे च न कश्चिद्विरोधः । अन्यथा, यमेवैष वृणुते तेन लभ्यः, मत्प्रसादात् परां शान्ति स्थानं प्राप्स्यसि शाश्वतम्, मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययमित्यादिशास्त्रव्याकोपाद् उक्तसिद्धान्त एव वरीयान्, अलं विस्तरेणेति ।

एवमेतावता जीवात्मस्वरूपादिकं निरूप्य तज्ज्ञानाऽज्ञानकारणं च निर्णीतमिदानीं पूर्वमुपक्षिप्तं जीवविशेषं विविनक्ति—मुक्तञ्चेति । चकारो बद्धसमुच्चयार्थकः । बद्धं चेत्यर्थः । भक्तं भजनाऽर्हं मुमुक्षुमिति तत्सापेक्षनिरूप्यत्वाद् बुभुक्षुरपि उक्तो भवति। स्वाभाविक्यपरिच्छिन्नध्येयाकारेन्द्रियवृत्तिमत्तया भजनशीलत्वाद् भक्तशब्दो मुमुक्षुवाचकः। तद्भिन्नस्तद्भाववद्बुभुक्षुरिति यावत् । यद्यपि बद्धमुक्तभेदाद् द्वैविध्यमुक्तम्, अथापि बद्धमुक्तप्रभेदबाहुल्यं बोध्यमित्यन्वयः । एतदुक्तं भवति । जीवात्मानस्तावद् द्विविधाः । बद्धमुक्तभेदात् । तत्र बद्धो नामानादिकर्मवासनाकार्यभूतदेवतिर्य्यगाद्यनेकविधशरीरतत्संबन्धिषु आत्मत्वाऽऽत्मीयाभिमानदार्ढ्यवन्तो बद्धाः । तथाभूताश्च द्विविधाः । मुमुक्षुबुभुक्षुभेदात् । तत्र मुमुक्षव आध्यात्म्यादिविविधसांसारिकदुःखानुभवजातक्लेशवत्तया विरक्ताः सन्तः संसारान्मोक्षमिच्छव इति । तेऽपि द्विविधाः—भगवद्भावापत्तिलक्षणमुक्तिकामा, निजस्वरूपापत्तिकामाश्च। वैषयिकानन्दमिच्छवो बुभुक्षवः । तेऽपि द्विविधाः, भाविश्रेयस्का, नित्यसंसारिणश्चेति । मुक्ता अपि द्विविधाः, नित्यमुक्ता मुक्ताश्चेति। तत्राद्याश्च गर्भजन्मजरामरणादिप्रकृतितत्सं-

बन्धतत्कार्यदुःखविषयकानुभवशून्यत्वे सति नित्यभगवदीयदर्शनादिभजनानुभवानन्दैकरसाः। तेऽप्यानन्तर्य्यपार्षदभेदेन द्विविधाः। तत्रानन्तर्य्याः किरीटकटककुण्डलवंश्यादयः । पार्षदा विश्वक्सेनगरुडादयः । सदा पश्यन्ति सूरय इत्यादिवचनात् । मुक्ता नामाऽनादिकर्म्मात्मकाविद्यानिरूपितप्रकृतितत्कार्य्यसम्बन्धदुःखादिविनिर्मुक्ताः। तेऽपि द्विविधाः। "निरतिशयानन्दरूपभगवद्भावापत्तिलक्षणमुक्तिमन्त एके । "बहवो ज्ञानतपसा पूता मद्भावमागताः। इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इति भगवदुक्तेः। स्वस्वरूपानन्दापत्तिमात्रेण संतुष्टाश्चान्ये । तत्र भगवद्भावापन्नानां तदिच्छानुरूपनिजेच्छयानन्तविग्रहादिपरिग्रहोऽपि श्रुतिसिद्धो भगवदवतारादिवत् । स एकधा भवति द्विधा भवति त्रिधा भवति पञ्चधा भवति सहस्रधा भवत्यपरिमितो भवतीत्यादिवचनात् । अन्येऽपि भेदा आकरेषु द्रष्टव्याः । अलमतिविस्तरेण ॥ इति त्वम्पदार्थसंग्रहः ॥ २ ॥

अथाऽचेतनं निरूप्यते—

अप्राकृतं प्राकृतरूपकं च
कालस्वरूपं तदचेतनं मतम् ॥
मायाप्रधानादिपदप्रवाच्यं
शुक्लादिभेदाश्च समेऽपि तत्र ॥ ३ ॥

अप्राकृतमित्यादिना । अचेतनं त्रिविधं मतं श्रुतिभिरित्यन्वयः। अचेतनत्वं च चेतनविजातीयत्वम् । ज्ञातृत्वाद्यनधिकरणत्वञ्च । त्रैविध्यमेव विविच्यते—अप्राकृतं प्राकृतरूपकं च कालस्वरूपमिति। तत्र तावत् प्राकृतं विशिनष्टि—मायाप्रधानादिपदप्रवाच्यमिति । मायादिपदैरभिधीयमानं प्राकृतम् ।

आदिपदेन, तमोऽव्यक्तादिसंग्रहः । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्, प्रधानक्षेत्रज्ञपतिर्गुणेशः, अव्यक्तात् पुरुषः पर इति श्रुतिभ्यः । "अव्यक्तं कारणं यत्तत् प्रधानमृषिसत्तमैः । प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकम् । अक्षय्यं नान्यदाधारममेयमजरं ध्रुवम् । हेतुभूतमशेषस्य प्रकृतिः सा परा मुने । दैवी ह्येषा गुणमयी मम माया दुरत्यया" इत्यादिस्मृतिभ्यश्च । तदेव लक्षणमुखेन द्योतयति—शुक्लादिभेदाश्च समेऽपि तत्रेति । तत्र तस्मिन् प्राकृतपदार्थे, समेऽपि सर्वेऽपि शुक्लादिभेदाः सन्ति । आदिशब्देन लोहितादिग्रहः । शुक्लादिपदाभिधेयसत्त्वादिगुणत्रयाश्रयत्वं प्राकृतत्वमिति यावत् । अजामेकां लोहितशुक्लकृष्णामितिश्रुतेः । गुणाश्च सत्त्वरजस्तमांसि । तत्र ज्ञानादिकारणं गुणः सत्त्वम् । सत्त्वात् सञ्जायते ज्ञानमिति वचनात् । इदमेव रजस्तमसी अभीभूय उत्कृष्टं सन्मोक्षौपयिकमभिधीयते, श्रीभगवद्गीतोक्तशमदमादिसाधनकदम्बाऽऽचरणद्वारेण । लोभादिकारणं गुणविशेषो रजः । रजसो लोभ एव चेति वचनात् । इदमेव लोभादिवृद्धया क्षेत्रज्ञानां तत्त्वनिष्ठाभ्रंशहेतुः । प्रमादादिकारणं गुणविशेषस्तमः । प्रमादमोहौ तमसो भवतोऽज्ञानमेवचेति वचनात् । इदञ्च स्वपरस्वरूपावरणे प्रधानकारणम् । इदमेव गुणत्रयाश्रयभूतं द्रव्यं साम्यावस्थापन्नं सत् प्रधानादिशब्दवाच्यम् अनादिजीवादृष्टानुसारिण्या श्रीपुरुषोत्तमेच्छया विक्षिप्तं सद् गुणवैषम्यं भजते । स एव कार्य्यव्यक्तीभावकालः । "प्रधानं पुरुषं चैव प्रविश्यात्मेच्छया हरिः । क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययावि"ति स्मृतेः । सृष्टिक्रमश्च प्रलयावसाने सृष्टिसमये सृज्यमानप्रपञ्चवैचित्र्यकारणप्राणिकर्मसहकृताऽचिन्त्यशक्तिमतो भगवतः श्रीमाधवस्य प्रपञ्चोत्पादनाविषयिकाभिरा-

कलनचिकीर्षाकृतिभिः प्रकृतौ विक्षेप उत्पाद्यते। तथाऽत्र श्रुतयः—यः सर्वज्ञः सर्ववित्, यस्य ज्ञानमयं तपः, तदक्षैत बहु स्यां प्रजायेय, सोऽकामयत बहु स्यां, तन्मनोऽनुकुरुत इत्याद्याः। प्रकृतिपरिणाम एव व्यक्तकार्य्यादिशब्दैरभिधीयते। तच्चानेकविधम्। तथाहि—प्रथमं परमेश्वरेच्छातन्त्रप्रकृतिर्गुणवैषम्यात् कार्य्योन्मुखं प्राप्ता सती महत्तत्वं व्यञ्जयति। तदेवाध्यवसायहेतुः, सात्त्विकादिभेदात् त्रिविधश्चेति। ततोऽहंकारो जीवानां देहादावात्मबुद्ध्युत्पादनासाधारणहेतुः। सोऽपि सात्त्विकादिभेदात् त्रिविधो, वैकारिकतैजसभूतादिशब्दवाच्यश्च। तत्र वैकारिकादहंकारादिन्द्रियाधिष्ठात्र्यो देवता मनश्च। तदेव मनो वृत्तिभेदात् स्थानभेदाच्चान्तःकरणचतुष्टयसंज्ञां लभते। सात्त्विकाहंकारोपादानकद्रव्यत्वे सत्यन्तर्ज्ञानकरणत्वं तत्त्वम्। चतुष्टयं च मनोबुद्धिचित्ताऽहंकारभेदाद् बोध्यम्। तत्र मननादिहेतुत्वं मनस्त्वम्। इदमेव मनः शब्दादिसंबन्धं सद् बन्धहेतुः। तत्परित्यागपूर्वकं सपरिकरभगवद्विषयप्रावण्ये सति मोक्षहेतुः। "मन एव मनुष्याणां कारणं बन्धमोक्षयोः। बन्धाय विषयासक्तं मुक्तं निर्विषयं स्मृतम्। मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च। अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम्" इतिवचनात्। बोधनकरणत्वं बुद्धित्वम्। देहादावहंकरणहेतुत्वम् अहंकारत्वम्। चिन्तनहेतुत्वं चित्तत्वम्।

तेषां चन्द्रब्रह्मरुद्रक्षेत्रज्ञा अधिष्ठात्र्यो देवताः। तथाच सुबालोपनिषच्छ्रुतयः—मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रस्तत्राधिदैवतं, बुद्धिरध्यात्मं बोधयितव्यमधिभूतं ब्रह्मा तत्राधिदैवतम्, अहंकारोऽध्यात्मम् अहंकर्तव्यमधिभूतं रुद्रस्तत्राधिदैवतम्, चित्तमध्यात्मं चेतयितव्यमधिभूतं क्षेत्रज्ञस्तत्राधिदैवतमित्याद्याः। क्वचिच्चैषामधिष्ठातृत्वेन वासुदेवादयश्चतुर्व्यूहदेवा अप्युच्यन्ते। तेषां मन-

आदिषूपास्यत्वेन प्रतिपादनाभिप्रायत्वान्नोक्तसिद्धान्तविरोधः । चन्द्रादीनां तत्प्रवर्तकत्वं, व्यूहदेवानां तदन्तर्यामितया तत्रोपास्यत्वमुभयमपि घटत एवेत्यर्थः । मनसः स्थानं गलान्तरं, बुद्धेर्वदनम्, अहंकारस्य हृदयं, चित्तस्य नाभिरिति शारीरकोपनिषत्पाठादेषां स्थानक्रमोऽपि ज्ञेयः । तैजसाहंकाराद् बाह्येन्द्रियाणि दशसंख्याकानि जायन्ते । शब्दादिविषयबाह्यज्ञानकर्मैकतरकरणत्वे सति तैजसाहंकारोपादानकद्रव्यत्वं बाह्येन्द्रियत्वम् । तद् द्विविधम् । ज्ञानेन्द्रियं कर्मेन्द्रियं चेति । तत्र शब्दादिविषयकबाह्यज्ञानासाधारणकारणत्वं ज्ञानेन्द्रियत्वम् । तच्च पञ्चधा, श्रोत्रत्वक्चक्षूरसनघ्राणभेदात् । शब्दमात्रग्राहकमिन्द्रियं श्रोत्रम् । मनुष्याणां कर्णशष्कुल्यवच्छिन्नदेशवर्ति, पादोदराणां नयनवृत्ति । रूपमात्रग्राहकमिन्द्रियं चक्षुः । नयनवृत्ति । स्पर्शमात्रग्राहकमिन्द्रियं त्वक् । सर्वशरीरवृत्ति । नखदन्तकेशादिषु प्राणमान्द्यतारतम्यात् स्पर्शाऽनुपलम्भः । रसमात्रग्राहकमिन्द्रियं रसनं, जिह्वाग्रवर्ति । गन्धमात्रग्राहकमिन्द्रियं घ्राणम् । नासाग्रवृत्ति । तेषां दिग्वातार्कवरुणाऽश्विनोऽधिष्ठात्र्यो देवताः । शब्दस्पर्शरूपरसगन्धा विषयाश्च । स्थानादि स्थानिभ्यो नेयन्त इत्युपक्रम्य, चक्षुरध्यात्मं द्रष्टव्यमधिभूतमादित्यस्तत्राधिदैवतम् । १ । श्रोत्रमध्यात्मं श्रोतव्यमधिभूतं दिशस्तत्राधिदैवतम् । २ । नासाऽध्यात्मं घ्रातव्यमधिभूतं पृथिवी तत्राधिदैवतम् । ३ । जिह्वाध्यात्मं रसयितव्यमधिभूतं वरुणस्तत्राधिदैवतम् । ४ । त्वगध्यात्मं स्पर्शयितव्यमधिभूतं वायुस्तत्राधिदैवतम् । ५ । इत्यादिश्रुतेः । पृथ्वीशब्देनाश्विनौ लक्ष्येते । अन्यथा वाक्यान्तरविरोधात् । एतेषां पञ्चमहाभूताप्यायकत्वेन भौतिकत्वमप्युपचर्यते । वचनादानाद्यसाधारणकारणमिन्द्रियम् । कर्मेन्द्रियं वाक्पाणिपादपायूपस्थसंज्ञाभेदात् पञ्चविधम् । तत्र

वर्णोच्चारणासाधारणकारणेन्द्रियं वाक्, कण्ठादिस्थानवृत्तिः । "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च" इत्यादि वेदभाष्ये । पश्वादीनां तत्संस्कारशून्यत्वात् तदभावः । शिल्पादानाद्यऽसाधारणकारणमिन्द्रियं पाणिः । मनुष्यादीनां कराङ्गुल्यादिवृत्तिः । हस्त्यादीनां नासाग्रादिवृत्तिः । विहरणक्रियाऽसाधारणकारणमिन्द्रियं पादः । मनुष्यादीनामङ्घ्रिवृत्तिः । भुजगपक्ष्यादीनामुरःपक्षादिवृत्तिः । मलविसर्गकारणमिन्द्रियं पायुस्तदवयववृत्तिः । आनन्दविशेषकारणमिन्द्रियमुपस्थं मेहनादिवृत्ति । तेषां वह्नीन्द्रोपेन्द्रमृत्युप्रजापतयोऽधिष्ठात्र्यो देवताः । वचनादानविहरणोत्सर्गानन्दाः पञ्च कर्माणि । तथाच श्रुतयः—वागध्यात्मं, वक्तव्यमधिभूतम्, अग्निस्तत्राधिदैवतम् । हस्तावध्यात्मम्, आदातव्यमधिभूतम्, इन्द्रस्तत्राधिदैवतम् । पादावध्यात्मं, गन्तव्यमधिभूतं, विष्णुस्तत्राधिदैवतम् । पायुरध्यात्मं, विसर्गयितव्यमधिभूतं, मृत्युस्तत्राधिदैवतम् । उपस्थोऽध्यात्मम्, आनन्दयितव्यमधिभूतं, प्रजापतिस्तत्राधिदैवतमित्याद्याः सुबालोपनिषत्पठिताः ।

तानि चाणूनि प्रतिशरीरं भिन्नानीनि यावदत्यन्तप्रलयमवस्थातिस्वभावकानि । भूतादिलक्षणतामसाहङ्काराच्छब्दादिपञ्च, तन्मात्राणि, आकाशादिपञ्च महाभूतानि चोत्पद्यन्ते । तामसाहंकारस्य भूतानां चान्तरालिको व्यवहितसूक्ष्मपरिणामात्मकं द्रव्यं तन्मात्रशब्दाभिधेयम् । दुग्धदध्नोरान्तरालिककलिलादिपरिणामवत् । तदेव स्थूलावस्थापन्नं भूतशब्दवाच्यं भवति । एवञ्च भूतादिसंज्ञकाहङ्काराच्छब्दतन्मात्रम् । शब्दतन्मात्रादाकाशः । आकाशात् स्पर्शतन्मात्रम् । स्पर्शतन्मात्राद्वायुः । वायो रूपतन्मात्रम् । तस्मात् तेजः । तेजसो रसतन्मात्रम् । तस्मादापः ।

अद्भ्यो गन्धतन्मात्रम् । तस्मात् पृथिवीत्युत्पत्तिक्रमः ।

तेषां गुणाश्च शब्दस्पर्शरूपरसगन्धाः पञ्चैव । तत्र सर्वेऽपि पृथिव्या गुणाः। अपां गुणाश्चत्वारो रसपर्यन्ताः । तेजोगुणस्त्रयो रूपाऽवसानाः। वायोः शब्दस्पर्शौ । नभसः शब्दमात्रम् । तत्र श्रुतयः—शब्दस्पर्शरूपरसगन्धाः पृथिव्यागुणाः । तेषु गन्धहीनाश्चत्वारोऽपां गुणाः । तेषु गन्धरसहीनास्त्रयो गुणा अग्नेः। शब्दस्पर्शाविति वायोः। शब्द एक आकाशस्येति लौकिकोपनिषदि पठ्यमानाः । "आकाशवायुतेजांसि सलिलं पृथिवी तथा । शब्दादिभिर्गुणैर्ब्रह्मन् संयुक्तान्युत्तरोत्तरैरिति" वैष्णवपुराणवचनं च। एतेन तेषां लक्षणमप्युक्तं भवति । तथाहि—स्पर्शाद्यनाधारत्वे सति विशिष्टशब्दाश्रयत्वमाकाशत्वम्। विशिष्टशब्दाधारत्वे सति अवकाशहेतुत्वं च। विशिष्टस्पर्शाश्रयत्वे सति रूपशून्यत्वम्, अनुष्णाशीतस्पर्शवत्त्वे सति गन्धशून्यत्वं वायुत्वम् । तत्र शरीरधारणादिहेतुर्वायुविशेषः प्राणः । स च पञ्चविधः—प्राणापानव्यानोदानसमानभेदात् । ऊर्ध्वगतिमान् नासादिस्थानवृत्तिः प्राणः। अधोगतिः पाय्वादिस्थानवृत्तिरपानः । विश्वगतिरखिलशरीरवृत्तिर्व्यानः। पीताऽशितपानाद्युद्गारक्रियाहेतुः कण्ठस्थानवृत्तिरुदानः । अशितपीताऽऽदिसमीकरणहेतुः समानः, सर्वाङ्गवृत्तिः । अन्यथा सर्वत्र समीकरणानुपपत्तेः । तथा च श्रुतयः—अथ योऽयमूर्ध्वमुत्क्रामत्येष वा वं स प्राणः । अथ योऽयमवागुत्क्रामत्येष वा व सोऽपानः । येनैताः शिरा अनुव्याप्ता एष वा व स व्यानः । अथ योऽयं पीतमशितमुद्गिरत्येष वा व स उदानः । अथ योऽयं स्थविष्ठमन्नं पातयितुमपाने स्थापयति, अणिष्ठं चाङ्गे समानयति एष वा व स समान इत्याद्या मैत्रेयोपनिषत्पठिताः ।

केचित्तु, नागकूर्म्मकृकलदेवदत्तधनञ्जयाख्याः पञ्चान्ये वायवः। तत्र नाग उद्गिरणकरः, कूर्म्म उन्मीलनकरः, कृकलः, क्षुधाकरो, देवदत्तो जृम्भणकरो, धनञ्जयः पोषणकर इति वदन्ति तच्चिन्त्यम्। एषां प्राणादिष्वेवान्तर्भावान्न पृथग्ग्रहः।

उष्णस्पर्शवत्त्वे सति भास्वररूपाधारत्वं, विशिष्टरूपाश्रयत्वे सति गन्धशून्यत्वं च तेजस्त्वम्। शीतस्पर्शवत्त्वं, गन्धाभावत्त्वे सति विशिष्टरसवत्त्वम् अपां लक्षणम्। विशिष्टगन्धाश्रयत्वम्, अनुष्णाशीतस्पर्शत्वे सति रूपाद्याश्रयत्वं च, शब्दाश्रयत्वे सति स्पर्शादिमत्त्वं, रसवत्त्वे सति गन्धादिमत्त्वं च पृथिवीलक्षणमिति बोध्यम्।

इत्थं प्रकृतिमहदहंकाराः,मनो,दशेन्द्रियाणि,तन्मात्रापञ्चकं, भूतपञ्चकं चेति चतुर्विंशतितत्त्वानि।

अत्र केचिन्महाभूतोत्पत्तिक्रमं वर्णयन्ति। अन्ये च भूतादेः पञ्चतन्मात्राणि, तेभ्यः क्रमात् पञ्चमहाभूतोत्पत्तिमाहुः।

इतरे तु भूतादेः शब्दतन्मात्रं, तत आकाशः स्पर्शतन्मात्रं च जायते। स्पर्शतन्मात्राद् वायुः, रूपतन्मात्रं च जायते इत्यादिक्रमेण सृष्टिमाहुः। तच्चिन्त्यम्। प्रलयक्रमविरोधात्। नचैवं सृष्टिश्रुतीनां परस्परविरुद्धक्रमपरत्वेनैकतमस्य क्रमस्यापि प्रामाण्यं न स्यात्। सर्वासामपि श्रुतित्वेन तुल्यप्रामाण्यादिति वाच्यम्। गुणोपसंहारन्यायेन सर्वस्यापि वाक्यजातस्य सामञ्जस्यमेव। तस्मादुक्तक्रमस्य वरीयस्त्वम्। स्मृत्युपबृंहितश्रुतिविषयत्वात्। तथाच श्रुतिः—स होवाच तं हि वै पूर्वं ह्येकमेवाद्वितीयं ब्रह्मासीत्, तस्मादव्यक्तमेवाक्षरं, तस्मादक्षरान्महत्तत्त्वं, महतो वै अहङ्कारस्तस्मादेवाहङ्कारात् पञ्च तन्मात्राणि, तेभ्यो भूतानीति गोपालोपनिषत्पठिता। व्याख्याता चैषा श्रीपराशरेण "प्रधानं पुरुषं चैव

प्रविश्यात्मेच्छया हरिः । क्षोभयामास संप्राप्ते सर्गकाले व्यया-ऽव्ययौ । स एव क्षोभको ब्रह्मन् क्षोभ्यश्च परमेश्वरः । स संकोचविकाशाभ्यां प्रधानत्वेऽपि च स्थितः । गुणसाम्यात् ततस्तस्मात् क्षेत्रज्ञाधिष्ठितान्मुने । गुणव्यञ्जनसंभूतः सर्गकाले द्विजोत्तम । सात्त्विको राजसश्चैव तामसश्च त्रिधा महान् । प्रधानतत्त्वेन समं त्वचा बीजमिवावृतम् । वैकारिकस्तैजसश्च भूतादिश्चैष तामसः । त्रिविधोऽयमहङ्कारो महत्तत्त्वादजायत । भूतादिस्तु विकुर्वाणः शब्दतन्मात्रकं ततः । ससर्ज शब्दतन्मात्रादाकाशं शब्दलक्षणम् । आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह । बलवानभवद् वायुस्तस्य स्पर्शो गुणो मतः । ततो वायुर्विकुर्वाणो रूपमात्रं ससर्ज ह । ज्योतिरुत्पद्यते वायोस्तद्रूपं गुणमुच्यते । ज्योतिश्चापि विकुर्वाणो रसमात्रं ससर्ज ह । संभवन्ति ततोऽम्भांसि रसाधाराणि तानि च । विकुर्वाणानि चाम्भांसि गन्धमात्रं ससर्जिरे । संघातो जायते तस्मात्तस्य गन्धो गुणो मतः । भूततन्मात्रसर्गोऽयमहङ्कारात्तु तामसात् । तैजसादिन्द्रियाण्याहुर्देवा वैकारिका दश । एकादशं मनश्चात्र देवा वैकारिकाः स्मृता" इत्यादिना । इह च तन्मात्राणां विषयाणां च समानसंज्ञास्मरणादभेदशङ्का न कार्य्या । पूर्वेषां भूतकारणत्वेन द्रव्यत्वम्, उत्तरेषां च तदाश्रितत्वेन तद्गुणत्वमिति विवेकः । अन्यथा तेषामेव भूतोपादानत्वं तद्गुणत्वं च महद्विरुद्धमेव । तत्र प्रकृतिमहदहङ्काराः, पञ्च भूतानि च स्थूलदेहस्योपादानकारणानि । इन्द्रियाणि भूषणे रत्नानीव तदाक्रम्य स्थितानि । पञ्चतन्मात्राणि, मनो, दशेन्द्रियाणि, प्राणश्च सूक्ष्मदेहस्योपादानानि । तत्र प्राणस्य स्पर्शतन्मात्रकार्य्यत्वात् तेनैकीकृत्य श्रुतौ षोडशसंख्यात्वव्यपदेशः । इमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्तीत्यादि । शरीरलक्षणं च, चेतननियताधेयत्वे

सति तद्भोगायतनत्वं, चेतननियताश्रयत्वे सति तदपृथक्सिद्धत्वं चेतननियतशेषत्वं च। शरीरं द्विविधं—नित्यानित्यभेदात्। तत्र नित्यं सर्वमङ्गलाश्रयं ध्यानविषयं ध्यातॄणां सर्वपुरुषार्थकारणं श्रीरमाकान्तस्य विग्रहम्। नित्यमुक्तानां विष्वक्सेननन्दसुनन्दनादि पार्षदानां स्वाभाविकं गरुडाद्याकारं च तच्चोपरिष्टान्निरूपयिष्यामः। अनित्यं द्विविधम्-अकर्मजं तज्जं चेति। आद्यमीश्वरस्य विराडादिरूपं, गरुडादीनां मुक्तानामीश्वरेच्छातन्त्रस्वेच्छात्तं तत्तदाकारं च। कर्म्मजन्यं च कर्मतारतम्यादनेकविधम्। स्थावरजङ्गमादिभेदात्। स्थावरं भूधरवृक्षादिरूपम्। जङ्गमं देवतिर्य्यङ्मनुष्यनारक्यादिरूपम्। तदेव सामान्यतो ज़रायुजाण्डजोद्भिज्जादिभेदभिन्नं च बोद्धव्यम्। किञ्च महदादिशरीरान्तं सर्वमपि तत्तदवस्थापन्नं तदभिन्नमेव। तत्कार्य्यत्वात्। यथा मृत्पिण्डजन्यं मृण्मयं घटाद्यवस्थापन्नमपि मृदभिन्नमेव तद्वत्। अवस्थान्तरभाक्त्वेनैव नामरूपसंख्याव्यवहारादिभेदसिद्धिः। कार्य्यकारणयोरभेदात्, तदनन्यत्वमारम्भणशब्दादिभ्य इति न्यायात्। कारणद्रव्यमेवावस्थान्तरमापन्नं सद्रूपं च कार्य्यत्वेनाभिधीयते। सदेव सौम्येदमग्र आसीदित्यादिसत्कार्य्यवादिनी श्रुतिः। अन्यथा कार्योत्पत्तिरेव न स्यात्। नहि गगनकुसुमादेरुत्पत्तिः क्वापि केनचिद् दृष्टा श्रुता वा। "नासतो विद्यते भावः। असतः सम्भवः कुतः" इत्यादिस्मृतेः। तस्मात् सदेव कार्य्यमुत्पद्यते कारणात्मकं चेति सिद्धान्तः। प्रकृत्यादीनि च जीवानां भोग्यभोगोपकरणभोगस्थानानि। तत्र भोग्यं शब्दादिकं तत्तद्विशिष्टद्रव्यमन्नपानादिकं च। भोगोपकरणं शरीरेन्द्रियमनोबुद्ध्यादि। भोगस्थानानि ब्रह्माण्डान्तर्गतचतुर्दशभुवनानि। तान्येव प्रकृत्यादीनि श्रीपुरुषोत्तमस्य क्रीडातदुपकरणतत्स्थानानि चेति विवेकः।

ब्रह्माण्डं च कपित्थफलाकारं पञ्चीकृतपञ्चमहाभूतारब्धं चतुर्दशलोकगर्भकं प्राकृतं द्रव्यं मुमुक्षुहेयं च । तथाच संन्यासप्रकरणपठिताऽऽरण्यश्रुतिः— भूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनलोकतपोलोकसत्यलोकं चातलपातालवितलसुतलतलातलरसातलमहातलं ब्रह्माण्डं च विसर्जयेदिति । तस्य वैचित्र्यसंस्थानप्रकारस्तु वैष्णवे श्रीपराशरेण पठितः । तथाहि—

"जम्बूद्वीपः समस्तानामेतेषां मध्यमस्थितः । तस्यापि मेरुर्मैत्रेय मध्ये कनकपर्वतः । भूपद्मस्य स शैलोऽसौ कर्णिका इव संस्थितः । जम्बूद्वीपं समावृत्य लक्षयोजनविस्तरः । मैत्रेय वलयाकारः स्थितः क्षारोदधिर्बहिः ॥ १ ॥ संवेष्ट्य क्षारमुदधिं प्लक्षद्वीपं तथा स्मृतः । तथैवेक्षुरसोदेन परिवेषानुकारिणा ॥ २ ॥ शाल्मलेन समुद्रोऽसौ द्वीपेनेक्षुरसोदकः । विस्ताराद्द्विगुणेनाऽथ सर्वतः संवृतः स्थितः । एष द्वीपः समुद्रेण सुरोदेन समावृतः । विस्तारः शाल्मलस्यैव समेन तु समन्ततः ॥ ३ ॥ सुरोदकः परिवृतः कुशद्वीपेन सर्वतः । शाल्मलस्य च विस्ताराद् द्विगुणेन समन्ततः । तत्प्रमाणेन स द्वीपो घृतोदेन समावृतः ॥ ४ ॥ घृतोदश्च समुद्रो वै क्रौञ्चद्वीपेन संवृतः । कुशद्वीपस्य विस्ताराद् द्विगुणो यस्य विस्तरः । क्रौञ्चद्वीपः समुद्रेण दधिमण्डोदकेन च । आवृतः सर्वतः क्रौञ्चद्वीपतुल्येन मानतः ॥ ५ ॥ दधिमण्डोदकश्चापि शाकद्वीपेन संवृतः । क्रौञ्चद्वीपस्य विस्ताराद् द्विगुणेन महामुने । शाकद्वीपस्तु मैत्रेय क्षीरोदेन समावृतः । शाकद्वीपप्रमाणेन वलयेनेव वेष्टितः ॥ ६ ॥ क्षीराब्धिः सर्वतो ब्रह्मन् पुष्कराख्येन वेष्टितः । द्वीपेन शाकद्वीपात् तु द्विगुणेन समन्ततः । स्वादूदकेनोदधिना पुष्करः परिवेष्टितः । समेन पुष्करस्यैव विस्तारान्मण्डलं तथा ॥ ७ ॥ स्वादूदकस्य परितो दृश्यते लोकसंस्थितिः ।

द्विगुणा काञ्चनी भूमिः सर्वजन्तुविवर्ज्जिता । लोकालोकस्ततः शैलो योजनायुतविस्तरः । ततस्तमः समावृत्य तं शैलं सर्वतः स्थितम् । तमश्चाण्डकटाहेन समन्तात् परिवेष्टितः । पञ्चाशत्कोटिविस्तारा सेयमुर्वी महामुने । दशसाहस्रमेकैकं पातालं चापि सत्तम । अतलं वितलं चैव तितलं च गभस्तिमत् । महाख्यं सुतलं चापि पातालं चापि सप्तमम् । ततश्च नरका विप्र भुवोऽधः सलिलस्य च । पापिनो येषु पात्यन्ते ताञ्छृणुष्व महामुने । अधःशिरोभिर्दृश्यन्ते नारकैर्दिवि देवताः । देवाश्चाधोमुखान् सर्वानधः पश्यन्ति नारकान् । रविचन्द्रमसोर्यावन्मयूखैरवभास्यते । सप्तसमुद्रसरिच्छैला तावती पृथिवी स्मृता । यावत्प्रमाणं पृथिवीविस्तारपरिमण्डलात् । नभस्तावत्प्रमाणं वै व्यासमण्डलतो द्विज । भूमेर्योजनलक्षे तु सौरं मैत्रेय मण्डलम् । लक्षाद् दिवाकरस्यापि मण्डलं शशिनः स्थितम् । पूर्णे दशसहस्रे तु योजनानां निशाकरात् । नक्षत्रमण्डलं कृत्स्नमुपरिष्टात् प्रकाशते । द्वे लक्षे चोत्तरे ब्रह्मन् बुधो नक्षत्रमण्डलात् । तावत्प्रमाणभागे तु बुधस्याप्युशना स्थितः । अङ्गारकोऽपि शुक्रस्य तत्प्रमाणे व्यवस्थितः । लक्षद्वये तु भौमस्य स्थितो देवपुरोहितः । सौरिर्बृहस्पतेश्चोर्ध्वं द्विलक्षे सम्यगास्थितः । सप्तर्षिमण्डलं तस्माल्लक्षमेकं द्विजोत्तम । ऋषिभ्यस्तु सहस्राणां शतादूर्द्ध्वं व्यवस्थितः । मेढीभूतः समस्तस्य ज्योतिश्चक्रस्य वै ध्रुवः । ध्रुवादूर्द्ध्वं महर्लोको यत्र ते कल्पवासिनः । एकयोजनकोटिस्तु यत्र ते कल्पवासिनः । द्वे कोटी तु जनो लोको यत्र ते ब्रह्मणः सुताः । सनन्दनाद्याः कथिता मैत्रेयाऽमलचेतसः । चतुर्गुणोत्तरे चोर्द्ध्वं जनलोकात् तपः स्मृतम् । षड्गुणेन तपोलोकात् सत्यलोको विराजते । पादगम्यं तु यत्किञ्चिद्वस्त्वपि पृथिवीमयम् । स भूर्लोकः समाख्यातो विस्तरोऽस्य मयोदितः । भूमिसूर्यान्तरं यत्तु

५

सिद्धादिमुनिसेवितम्। भुवर्लोकस्तु सोऽप्युक्तो द्वितीयो मुनिसत्तम। ध्रुवसूर्य्यान्तरं यच्च नियुतानि चतुर्दश। स्वर्लोकः सोऽपि गदितो लोकसंस्थानचिन्तकैः। त्रैलोक्यमेतत्कृतकं मैत्रेय परिपठ्यते। जनस्तपस्तथा सत्यमिति चाकृतकं त्रिकम्। कृतकाकृतकयोर्मध्ये महर्लोक इति स्मृतः। शून्यो भवति कल्पान्ते योऽत्यन्तं न विनश्यति। एते सप्त मया लोका मैत्रेय कथितास्तव। पातालानि च सप्तैव ब्रह्माण्डस्यैव विस्तरः। एतदण्डकटाहेन तिर्य्यक् चोर्द्ध्वमधस्तथा। कपित्थस्य यथा बीजं सर्वतो वै समावृतम्। दशोत्तरेण पयसा मैत्रेयाण्डं च तद्वृतम्। स चाम्बुपरिधानोऽसौ वह्निना वेष्टितो बहिः। वह्निश्च वायुना वायुर्मैत्रेय नभसाऽऽवृतः। भूतादिना नभः सोऽपि महता परिवेष्टितः। दशोत्तराण्यशेषाणि मैत्रेयैतानि सप्त वै। महान्तं च समावृत्य प्रधानं समवस्थितम्। अनन्तस्य न तस्यान्तः संख्यानं चापि विद्यते। तदनन्तमसंख्यातं प्रमाणं चापि वै यतः। हेतुभूतमशेषस्य प्रकृतिः सा महामुने। अण्डानां तु सहस्राणां सहस्राण्ययुतानि च। ईदृशानां तथा तत्र कोटिकोटिशतानि च" इति॥

अस्यायमर्थः। पद्माकारा पञ्चाशत्कोटियोजनपरिमाणिका भूः। तत्र लक्षयोजनपरिमाणको जम्बूद्वीपः। तन्मध्ये कर्णिकाकारो मेरुः। स परितो नवभिर्वर्षैरावृतः। तस्य दक्षिणतो भारतादीनि त्रीणि वर्षाणि। उत्तरतो रम्यकादीनि त्रीणि पूर्वतो भद्राश्वम्। पश्चिमतः केतुमालम्। मध्ये चेलावृतवर्षम्। एतन्नववर्षात्मको लक्षयोजनपरिमाणकोऽयं जम्बूद्वीपस्तत्परिमाणकेन क्षारोदकार्णवेन वृतः॥ १॥ सोऽर्णवो द्विगुणेन सप्तवर्षात्मकेन प्लक्षद्वीपेन। सोऽपि तत्परिमाणकेनेक्षुरसार्णवेन॥ २॥ सोऽर्णवो द्विगुणेन सप्तवर्षात्मकेन शाल्मलद्वीपेन। स च तत्प-

रिमाणकेन सुरार्णवेन ॥ ३ ॥ सोऽर्णवस्तद्द्विगुणेन सप्तवर्षात्मकेन कुशद्वीपेन। सोऽपि तत्परिमाणकेन घृतार्णवेन ॥ ४ ॥ सोऽपि द्विगुणेन सप्तवर्षात्मकेन क्रौञ्चद्वीपेन। सोऽपि तत्परिमाणकेन दधिमण्डोदार्णवेन ॥ ५ ॥ सोऽर्णवो द्विगुणेन सप्तवर्षात्मकेन शाकद्वीपेन। सोऽपि तत्परिमाणकेन क्षीरार्णवेन ॥६॥ क्षीराब्धिश्च तद्द्विगुणेन द्विवर्षात्मकेन पुष्करद्वीपेन। स च तत्परिमाणकेन मधुरजलार्णवेन वेष्टितः ॥ ७ ॥ सप्तद्वीपात्मकोऽयं भूभागः। सार्णवः स्वस्माद् द्विगुणीकृतया काञ्चनभूम्या वृतः। सा च लोकालोकेन भूधरेण। स चान्धेन तमसा। तत्तमो गर्भोदकेन। तदुदकं चाण्डकटाहेनेति तिर्य्यक्संस्थानप्रकारः। तस्या अधस्तात् पूर्वोक्ता अतलादयः सप्तलोकास्तेषां मध्ये रौरवादय एकविंशतिर्नरकाः पापात्मककर्मफलभोगभूमयस्ततोऽधोऽन्धंतमस्ततो गर्भोदकं, ततोऽण्डकटाह इत्यधःसंस्थानप्रकारः ॥

अथ पादगम्यपृथिवीमयः प्रदेशो भूर्लोकः ॥ १ ॥ तदुपरि लक्षयोजनात् सूर्य्यमण्डलम्। तावत्पर्यन्तप्रदेशः सिद्धादिमुनिसेवितो भुवर्लोकः ॥ २ ॥ तदुपर्य्युपरि चन्द्रनक्षत्रबुधशुक्रभौमबृहस्पतिसप्तर्षिमण्डलानि। तदुपरि ध्रुवो ज्योतिश्चक्रस्य मेढीभूतः सूर्य्यमण्डलाद् ध्रुवपर्य्यन्तो देशश्चतुर्दशलक्षयोजनविस्तीर्णः स्वर्लोकः ॥ ३ ॥ तत उपरि कोटियोजनोच्छ्रायो महर्लोकः ॥ ४ ॥ तदुपरि द्विगुणोच्छ्रायो जनलोकः ॥ ५ ॥ तदुपरि तच्चतुर्गुणस्तपोलोकः ॥ ६ ॥ तदुपरि द्वादशकोट्युच्छ्रायः सत्यलोकः ॥ ७ ॥ ततस्तमस्ततो गर्भोदकं ततोऽण्डकटाहः। "सप्तसागरमानस्तु गर्भोदस्तदनन्तरम्। कोटियोजनमानस्तु कटाहः संव्यवस्थितः" इत्यादिवचनात् कोटियोजनोच्छ्रायोऽण्डकटाहः। तच्च ब्रह्माण्डं दशगुणोत्तरोत्तरावरणैः सप्तभिरा-

ष्टतम् । इत्थं ह्येकाण्डसन्निवेश उक्तः । ईदृशान्यनन्तकोटिब्रह्माण्डानि ईश्वरविभूत्यात्मके प्रधानेऽर्णवोदके जलबुद्बुदानीव भ्रमन्ति । अत एव तस्याप्यनन्तत्वम् । तत्र चतुर्मुखावसाना सृष्टिः साक्षादीश्वरकृता तदुत्तरा च चतुर्मुखादिपरम्परयेति विवेकः । महदादि पृथिव्यन्तं समष्टिशब्दाभिधेयम् । यथा सेनावनराश्यादिव्यवहारः तेष्वेकैकदेशमादाय क्रियमाणं कार्य्यमस्मद्बुद्धीन्द्रियशरीरादि व्यष्टिशब्दवाच्यम् । यथा वृक्षधान्यादिव्यवहारः॥

पञ्चीकरणप्रक्रिया च भगवान् श्रीपुरुषोत्तमः पृथिव्यादिपञ्चभूतानि सृष्ट्वा एकैकं महाभूतं द्विधा विभज्य द्वयोर्भागयोः स्वभागमेकं पृथङ्निधाय द्वितीयं भागं पुनश्चतुःकृत्य तांश्च भूतान्तरेषु चतुर्षु संयोजयति । एवं चिकीर्षितेषु पञ्चस्वपि भूतेष्वेकैकस्य भूतस्यार्द्धं स्वभागो, द्वितयार्द्धं चतुर्णां भूतानां भागेषु योजनमिति । तदुक्तं—विभज्य द्विधा पञ्चभूतानि देवस्तदर्धानि पश्चाद् विभागानि कृत्वा तदन्येषु मुख्येषु भागेषु तत्तन्नियुञ्जन् स पञ्चीकृतं पश्यति स्मेति । तथा च स्वभागस्य भूयस्त्वेनान्यभागानामल्पत्वेन पृथिव्यादिपृथग्व्यवहारोऽपि समञ्जसः । त्रिवृत्करणश्रुतिश्च पञ्चीकरणस्याप्युपलक्षणत्वादत्रापि मानम् । पञ्चीकरणत्वादेव शब्दादीनां सर्वत्रोपलम्भः सूपपन्नः । महदादिशरीरपर्य्यन्तेषु मध्ये, शरीरम् अन्नविकारत्वादन्नमयः पुरुष उच्यते । मन एव कर्मेन्द्रियैः सहितं सन्मनोमयः पुरुषः । प्राणादिपञ्चकं कर्मेन्द्रियसहितं सत् प्राणमयः पुरुषः । विज्ञानमयः पुरुषो जीवात्मा । आनन्दमयश्च पुरुषः परमात्मा परं ब्रह्मेति । तद्विस्तरश्चानन्दमयाधिकरणे श्रीनिवासाचार्य्यचरणैर्निपुणं प्रतिपादितः । स वा एष पुरुषोऽन्नरसमय इत्यादिश्रुतयस्तैत्तिरीयके आम्नाताः ॥

अथ सृष्ट्युत्क्रमेण लयो, न तु कारणनाशक्रमेण । कारणनाशानन्तरमाश्रयाभावेन कार्य्यावस्थितेरसंभवात् । क्रमश्च पृथिवी गन्धतन्मात्रद्वारेणाऽप्सु लीयते । आपो रसतन्मात्रद्वारा तेजसि तेजो रूपतन्मात्रद्वारा वायौ । स च स्पर्शतन्मात्रद्वारा व्योम्नि । तच्च शब्दतन्मात्रलयपूर्वकं भूतादितामसाहंकारे । इन्द्रियाणि राजसाहंकारे । मनो देवाश्च वैकारिके । त्रिविधोऽप्यहंकारो महति । स चाव्यक्ते । सोऽपि पुरुषे । स च ब्रह्मणि पुरुषोत्तमाख्ये इति । तथैव सुबालोपनिषद्याम्नायते, पृथिव्यप्सु लीयते, आपस्तेजसि, तेजो वायौ प्रलीयते, वायुराकाशे प्रलीयते, आकाश इन्द्रियेषु, इन्द्रियाणि तन्मात्रेषु, तन्मात्राणि भूतादौ लीयन्ते, भूतादिर्महति, महानव्यक्ते, अव्यक्तमक्षरे, अक्षरं तमसि, तमः परे देव एकीभवतीति । वैष्णवे च—" जगत्प्रतिष्ठा देवर्षे प्रथिव्यप्सु प्रलीयते । तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते । वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते " इति ॥ " प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्च उभावेतौ लीयेते परमात्मनि ॥ परमात्मा च सर्वेषामाधारः परमेश्वरः । विष्णुनामा स देवेषु वेदान्तेषु च गीयते " इत्यादि ॥ इत्थं त्रिविधेष्वऽचेतनेषु प्राकृतं निरूपितम् ॥

अथ द्वितीयमाह—कालस्वरूपमिति ॥ प्राकृताप्राकृतोभयभिन्नत्वे सत्यचेतनद्रव्यविशेषः कालशब्दवाच्यः । स च नित्यो विभुश्च । अथ हं वा नित्यानि पुरुषः प्रकृतिः काल इति श्रुतेः । सदेव सोम्येदमग्र आसीदित्यादिषु सृष्टेः प्राक् प्रलयसमयेऽपि कालस्य सत्त्वाभ्युपगमात् । अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते इति वैष्णववचनात् । न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते इत्यादेश्च ॥ स च भूतभ-

विष्यद्-वर्त्तमान-युगपच्चिर क्षिप्राऽऽदिव्यवहारहेतुः, सर्गप्रलययो-र्निमित्तं च, परमाण्वादिपरार्द्धावसानव्यवहारासाधारणकारणं च। तत्र यावता दिवाकरः परमाणुपरिमाणकं देशमाक्रामति स कालः परमाणुशब्दाभिधेयः । द्वौ परमाणू द्व्यणुकस्त्रयो द्व्यणुकास्त्रसरेणुः । त्रसरेणुत्रयं त्रुटिः । त्रुटिशतं वेधः । त्रिभिर्वेधै-र्लवः । तैस्त्रिभिर्निमेषः । पञ्चदशनिमेषाः काष्ठा । त्रिंशत्काष्ठाः कला । कलास्त्रिंशन्मुहूर्तः । मुहूर्तैस्त्रिंशद्भिर्मानुषमहोरात्रम् । तैः पञ्चदशभिः पक्षः । द्वौ पक्षौ मासः । द्वौ मासावृतुः । षड्भिर्मासै-रयनम् । द्वे अयने वर्षम् । तत्र दक्षिणायनं देवानां रात्रिरुत्त-रायणं च दिनम् । दिव्यैर्वर्षसहस्रैर्द्वादशभिः कृतादियुगचतुष्ट-यम् । तत्राष्टशतोत्तरचतुःसहस्रवर्षपरिमितं कृतयुगं ससन्ध्यम् । षट्शतोत्तरत्रिसहस्रपरिमितं ससन्ध्यं त्रेतायुगम् । चतुःशतोत्तर-द्विसहस्रवर्षपरिमितं द्वापरयुगं ससन्ध्यम् । शतद्वयोत्तरसहस्र-वर्षपरिमितं कलियुगं ससन्ध्यं च भवति । चतुर्युगसहस्रपरिमितं चतुर्मुखस्य दिवसम् । तत्रैकस्मिन् दिवसे मनवश्चतुर्दश जाय-न्ते । तथैव सप्तर्षयो महेन्द्रादयश्च । चतुर्युगाणां साधिका-न्येकसप्तति मन्वन्तरं मनोः काल उच्यते । तस्य चतुर्दशगुणं ब्राह्ममहस्तत्परिमाणिका च रात्रिः । ईदृशाहोरात्राणां मानेन वर्षशतं चतुर्मुखायुः । तदर्द्धं परार्द्धम् । तत्रैकं व्यतीतम् । द्विती-यपरार्द्धस्य वर्तमानस्य प्रथमोऽयं कल्पो वाराहसंज्ञकः । सर्व-मपि प्राकृतं कालाधीनम् । कालस्य एतत्सर्वनियामकत्वेऽपि परमेश्वरनियम्यत्वमेव । ज्ञः कालकालो गुणिसर्वविद्य इति श्रुतेः। लीलाविभूतौ तु परमेश्वरस्य कालपारतन्त्र्यानुकरणमात्रमेव । नित्यविभूतौ तु न तत्प्रभावशङ्काऽपि । कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुरित्यादिवचनात्। स च कालो-

ऽखण्डत्वात्। स्वरूपेण नित्यः। कार्य्यरूपेणानित्यः। तत्कार्यमौपाधिकम्। उपाधिश्च सूर्य्यपरिभ्रमणरूपा क्रियैवेति विवेकः॥

अथाऽप्राकृतं निरूप्यते—अप्राकृतमिति। तत्त्वं नाम, त्रिगुणाश्रयप्रधानकालविलक्षणं प्रकाशात्मकमनावरकस्वभावमऽचेतनद्रव्यत्वम्। आदित्यवर्णं तमसः परस्ताद् इत्यादिश्रुतेः। तमःशब्दाभिधेयाभ्यां प्रधानकालाभ्यां परं विलक्षणम्, आदित्यवत् प्रकाशरूपमित्यर्थः। एतेन त्रिगुणात्मकद्रव्यभिन्नमपि शुद्धमायाकार्य्यमिति मतनिरासः। तत्र च प्रकृतिमण्डलाद्भिन्नदेशीयमपरिच्छिन्नं, प्राकृतदेशीयं तु परिच्छिन्नमिव दृश्यमानमप्यपरिच्छिन्नमेव। तच्चैकादशाध्याये विश्वरूपदर्शने स्वयमेव श्रीभगवता गीतं, दर्शितं चार्ज्जुनाय। आनन्दाभिव्यञ्जकत्वादानन्दसंज्ञकम्। नित्यविभूतिपरमात्मलोकपरमव्योमविष्णुपदपरमपदादिशब्दाभिधेयं च। योऽस्याऽध्यक्षः परमे व्योमन् तिष्ठति तद्विष्णोः परमं पदम्, एते वै निरयास्तात लोकस्य परमात्मन इत्यादिवचनेभ्यः। तच्च भगवदीयानादिसंकल्पात् तस्य तदीयानां नित्यमुक्तानां च भोग्यादिरूपेणानेकरूपम्। तत्र भोग्यं भगवद्विग्रहादिभोगोपकरणं च भूषणाऽऽयुधयानाऽऽसनालंकारकुसुमपत्रफलादिस्थानं च। गोपुरचत्वरप्राकारमणिमण्डपवनोपवनसरोवरादिकम्। तत्रेश्वरस्य नित्यमुक्तानां च विग्रहसंस्थानं, तदीयानाद्यनन्तेच्छासिद्धं स्वाभाविकमेव। बद्धमुक्तानां तु विग्रहं भगवत्प्रसादनिवृत्तप्रकृतिसंबन्धानाम् अनादिसिद्धैरेव विग्रहादिभिर्योगः। न तत्र जन्यत्वादिविकारशङ्काऽपि। निर्विकारत्वात्। यथोत्सवादिसमये प्राक्सिद्धा वस्त्रभूषणालङ्कारादयो राजभिः स्वभृत्येभ्यो दीयन्ते, तथैव प्रकृतिवियोगसमये पूर्वसिद्धा नित्याः सर्वविकारशून्या विग्रहादयस्तत्सेवोपकरणरूपाः श्रीपुरुषोत्तमेन

भ्रूसेभ्यो दीयन्ते इति । तन्मङ्गलविग्रहश्च स्वरूपवदनन्तकल्याणगुणाश्रयो, गुणाश्च निरतिशयसौन्दर्य्यमार्दवलावण्यसौगन्ध्यसौकुमार्यादयोऽपरिमिता अनन्ताश्च । सर्वगन्धः सर्वरसः, आप्रणखात् सुवर्ण इत्यादिश्रुतिभ्यः श्रीभगवतः सर्वदर्शनस्पर्शनगमनादिशक्तिमत्त्वान्न तत्रेन्द्रियादिविभागकल्पनापेक्षा । गौरवात् । तथाच श्रुतिः—अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । यस्मादन्तीन्द्रियोऽपि सर्वतः पश्यति सर्वतः शृणोति सर्वतो गच्छति सर्वत आदत्ते इत्यादि । तत्साम्यं भजतामपि तथैव व्यवहारः । निरञ्जनः परमं साम्यमुपैतीति श्रुतेः, मम साधर्म्यमागता इति स्मृतेश्च । कालातीतवस्तुत्वान्न तत्र कालप्रभावः । कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुरिति चतुर्थांशे ब्रह्मवचनादिति त्रिविधाचेतनसंग्रहः ॥ ३ ॥

अथ परमात्मतत्त्वं निरूपयति—

स्वभावतोऽपास्तसमस्तदोष-
मशेषकल्याणगुणैकराशिम् ॥
व्यूहाङ्गिनं ब्रह्म परं वरेण्यं
ध्यायेम कृष्णं कमलेक्षणं हरिम् ॥ ४ ॥

स्वभावत इत्यादिना ॥ तत्राऽथाऽतो ब्रह्मजिज्ञासा इत्युपक्रमसूत्रार्थमाह—वयं ब्रह्म ध्यायेमेति योजना । ब्रह्मशब्दस्य चतुर्मुखवेदादावपि वृत्तित्वात् तत्रातिप्रसङ्गं वारयन्नाह—परमिति । ब्रह्मपदार्थमाह—कृष्णमिति । परत्वं च क्षराक्षराभ्यामुत्कृष्टत्वम् । तस्याश्रयो भगवान् श्रीकृष्ण एव । तथाच स्वयमेव गीतः । "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः । यो मामेवमसंमूढो जानाति पुरुषोत्तमम् । स सर्वविद् भजति मां सर्वभावेन भारत"

इति श्रीकृष्णं पुरुषोत्तमत्वेन जानतः सर्वविच्त्वं प्रतिपादितम्। तस्मात् स एवात्र परब्रह्मशब्दाभिधेय इति सिद्धम्॥

ध्यायेमेत्यत्र विध्यर्थकप्रथमपुरुषे प्रयोक्तव्येऽपि स्वेषां स्वाभाविकदास्यत्वेन तद्ध्यानाश्रयत्वनिश्चयादुत्तमपुरुषप्रयोगः—प्रधानक्षेत्रज्ञपतिः, पतिं पतीनामित्यादिश्रुतेः—तस्य तत्स्वामित्वे प्रमाणम्। बहुवचनाद्ध्येकजीववादिमतनिरासः। स च पूर्वमेव व्याख्यातः। "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। अंशो नानाव्यपदेशात्। न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः। नचैव न भविष्यामः सर्वे वयमतः परम्"इत्यादिभ्यस्त्रैकालिकबहुत्वप्रतिपादकवचनेभ्यः। ध्यैधातुप्रयोगाद्दुक्तसूत्रे इष्यमाणज्ञानस्य ध्यानात्मकत्वं सूत्रकृताऽभिप्रेतमिति निश्चीयते। आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति विषयवाक्ये ध्यानस्यैव विधेयत्वश्रवणात्। अत्र दर्शनमुद्दिश्य निदिध्यासनं विधीयते। एवं विधीयमानं निदिध्यासनमेव ज्ञानापरपर्यायभूतं ज्ञानशब्देन सूत्रयामास भगवान् बादरायण इत्यर्थः। सूत्रविषयवाक्ययोरेकार्थत्वनियमात्। तत्रापि विषयवाक्यस्य मूलरूपत्वेन स्वतःप्रामाण्येन बलीयस्त्वात् तदनुसारेणैव सूत्रार्थोऽप्यवश्यं नेय इति सर्ववादिसाधारणन्यायात्। अन्यथा सूत्रविषयवाक्ययोर्विरुद्धार्थपरत्वाभ्युपगमे विषयविषयिभावानुपपत्तेः। एतत्सर्वमभिप्रेत्य, ध्यानप्रयोगोक्तिः॥

किंविषयकध्यानमत्र विधेयमित्यपेक्षायामाह—कृष्णमिति कृष्णविषयकमित्यर्थः॥

प्रसङ्गाद् विधिर्मीमांस्यते। प्रयोजनत्वावच्छिन्नवदर्थविधायकत्वेनार्थवान् शब्दो विधिः। यथा स्वर्गकामो यजेदित्यत्र स्व-

र्गात्मकप्रयोजनवतोऽर्थस्य यजधात्वर्थस्य यजनस्य विधायको लिङ्प्रत्ययः। तेन यजनस्य प्रयोजनवत्तया विधीयमानत्वात् तद्विधायकशब्दस्य विधित्वमिति लक्षणसमन्वयः। स च त्रिविधः—अपूर्व-नियम-परिसंख्याभेदात् । तत्रात्यन्ताप्राप्तार्थ-विधायकत्वमपूर्वविधित्वम् । यथा, व्रीहीन् प्रोक्षतीति। प्रोक्षणात्मकसंस्कारकर्मणो विधिमन्तरेण मानान्तरेणात्यन्ताप्राप्तत्वात् । तत्फलकोऽयं प्रोक्षणविधिरित्यर्थः ॥१॥ पक्षे प्राप्तस्याप्राप्तांशपूरको नियमः। यथा—व्रीहिनवहन्तीति । अत्र विध्यभावेऽपि पुरोडाशीयद्रव्यात्मकानां व्रीहीणां तण्डुलनिष्पत्त्याक्षेपादेवावहननप्राप्तिर्भविष्यतीति न तत्फलकोऽयं विधिः, किन्त्वाक्षेपादेव लोकावगतकारणत्वसाम्यान्नखविदलनादिरपि प्राप्नुयादित्यवहननांशस्याप्राप्तिस्तदंशपरिपूर्तिफलकोऽयं विधिः। अवहन्यादेव, न तु प्रकारान्तरेण वैतुष्यमात्रं कुर्य्यादित्यर्थः ॥२॥ उभयप्राप्ताावितरव्यावृत्तिफलकः परिसंख्याविधिः। यथा, इमामगृभ्णन् रशनाम् ऋतस्येत्यश्वाभिधानीमादत्ते इति । अत्राऽश्वरशनाग्रहणं गर्दभरशनाग्रहणं चानुष्ठेयम्। तत्रेमामगृभ्णन्निति मन्त्रो रशनाग्रहणप्रकाशनात्मकसामर्थ्यरूपाल्लिङ्गादेव गर्दभरशनाग्रहणवदश्वरशनाग्रहणेऽपि प्राप्त एवेति न तत्प्राप्तिफलकोऽयं विधिः। प्राप्तस्य प्राप्ते पिष्टपेषणवन्निष्फलत्वाद् वैयर्थ्यापत्तेः। अपि तु लिङ्गाविशेषाद् अश्वरशनाग्रहणवद् गर्दभरशनाग्रहणेऽपि मन्त्रः प्राप्नुयादिति तन्निवृत्तिफलकोऽयं विधिरित्यर्थः ॥ ३ ॥ स च दूषणत्रयवत्त्वाद् दुष्टः। दूषणानि च स्वार्थत्यागः, परार्थकल्पना प्राप्तबाधश्च । अत्र स्वार्थोऽश्वरशनाग्रहस्तस्य त्यागः। परार्थो गर्दभरशनाग्रहनिषेधस्तस्य कल्पनं, प्राप्तश्चाऽत्र स्वार्थरूपोऽश्वरशनाग्रहस्तस्य बाधश्चेति विवेकः। "विधिरत्यन्तमप्राप्तौ नियमः

पाक्षिके सति । तत्र त्वन्यत्र च प्राप्तौ परिसंख्येति गीयते" इति वचनात् । तत्र वेदान्तवाक्यानां भगवत्स्वरूपगुणादिप्रतिपादनपरत्वं निश्चित्य तत्प्रतिपाद्यं ध्येयस्वरूपादिकं साक्षात् पश्यत आचार्य्यस्य मुखात् तदनुभूतवाक्यार्थस्य ग्रहणं श्रवणम् । श्रुतस्य चोपदिष्टार्थस्य स्वानुभवविषयीकरणाय शास्त्रानुकूलयुक्तिभिर्विचारविशेषो मननम् । मननविषयस्यार्थस्य साक्षात्कारकारणभूतमनवरतध्यानं निदिध्यासनम् । उक्तलक्षणस्याऽस्य श्रवणादेरत्यन्ताप्राप्तत्वादपूर्वविधिरेवायमिति ज्ञातव्यम् । तत्र निदिध्यासनस्य साक्षाद्दर्शनान्तरङ्गत्वाद्विधेयत्वम् । श्रवणमननयोश्च तदपेक्षया बहिरङ्गत्वात् परम्परया ध्यानसाधनत्वमिति सिद्धान्तः ॥

इदानीं लक्षणसूत्रादीन्यन्यान्यपि व्याचक्षाणो भगवत्पदार्थाऽभिन्नपदार्थमाह निर्वचनमुखेन—स्वभावत इति । स्वभावेनैवानादिप्रकृत्यैवापास्ता निरस्ताः समस्ता दोषा यस्मात् तं दोषाश्चाविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः पञ्च । अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशा इति पातञ्जलसूत्रात् । ते एव तमो—मोह—महामोह—तामिस्राऽन्धतामिस्रसंज्ञकाः । तत्र स्वरूपावरकं तमः ॥ १ ॥ देहादावहम्बुद्धिर्मोहः ॥ २ ॥ भोगेच्छा महामोहः ॥ ३ ॥ तामिस्रः क्रोधः ॥ ४ ॥ अतन्नाशे स्वनाशबुद्धिरन्धतामिस्रः ॥ ५॥ "तमोऽविवेको मोहः स्यादन्तःकरणविभ्रमः । महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा । मरणं ह्यन्धतामिस्रस्तामिस्रः क्रोध उच्यते । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः" इति वैष्णवपुराणवचनात् । जन्मास्तित्ववृद्धिपरिणामापक्षयमरणात्मका विकाराः षड्विधाः, सत्त्वरजस्तमांसि प्राकृतगुणास्तत्कार्य्यभूताश्चानन्ता बद्धक्षेत्रज्ञधर्माः । तदसन्ता-

ऽभावाश्रयम् । अशेषदोषासन्ताभावश्च सार्वज्ञादिवद् भावरूपो धर्मविशेषः । तथाच श्रुतिः—य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः, "कर्मक्लेशविपाकाद्यैरस्पृष्टस्याखिलेशितुः । ज्ञानादिषाड्गुण्यनिधेरचिन्त्यविभवस्य ताः । परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे" इति पराशरोक्तिश्च । अनेन निर्गुणं निष्कलं शान्तं निरवद्यं निरञ्जनमित्यादिनिर्गुणवाक्यानि व्याख्यातानि भवन्ति । तेषां हेयगुणादिनिषेधपरत्वात् ॥

नन्वेवं तर्हि गुणदोषवत्त्वाभावान्निर्विशेषत्वसिद्धिः, सा चास्मत्संमतत्वादिष्टैवेतिचेत् तत्राह—अशेषकल्याणगुणैकराशिमिति । अशेषाणां कल्याणात्मकानां गुणानाम् एको मुख्यो यो राशिः पुञ्जभूतस्तम्, अशेषकल्याणगुणानामेके मुख्या राशयो यस्मिंस्तमिति वा, सर्वकल्याणानां मोक्षप्रदातृत्वादीनामनन्ताचिन्त्यस्वाभाविकगुणानां ज्ञानादीनां चैको मुख्यो राशिः समुदायभूतस्तस्याधारस्तमिति वा । गुणाश्च ज्ञानशक्तिबलैश्वर्य्यतेजोवीर्यासौशील्यवात्सल्यार्जवसौहार्दसर्वशरण्यत्वसौम्यकरुणास्थिरत्वधैर्य्यदयामाधुर्य्यमार्दवादयः । तत्र ज्ञानं सर्वदेशकालवस्तुविषयकमप्रत्यक्षानुभवरूपम् । शक्तिश्च अघटघटनापटीयस्त्वरूपसामर्थ्यम् । बलं विश्वधारणादिशक्तिः । ऐश्वर्य्यं नियमनशक्तिः । श्रमहेतोरपरिमितत्वेऽपि श्रमशून्यत्वं तेजः । वीर्य्यं परैरनभिभूयमानत्वे सति पराभिभवनसामर्थ्यम् । एते जगत्सृष्ट्याद्युपकारकाः षड् भगवच्छब्दवाच्यपरब्रह्माश्रिताः ।

जात्यादिमहत्त्वमनपेक्ष्यातिमन्दैरप्यमायया संश्लेषभाक्त्वं सुशीलत्वम् । भृत्यदोषाननुसंधानं वात्सल्यम् । आश्रितदुःखासहिष्णुत्वं मार्दवम् । मनोवाक्कायैः समत्वमार्जवम् । आत्मशक्तिमति-

क्रम्य पररक्षणोद्यमः सौहार्दम्। ब्रह्मादिस्थावरान्तैः साधारणोपायत्वं सर्वशरण्यत्वं, तदेव सौम्यशब्दाभिधेयम्। परदोषक्षपणस्वभावः कारुण्यम्। युद्धादावचलत्वं स्थिरत्वम्। प्रतिज्ञापालनत्वं धैर्य्यत्वम्। निर्हेतुकपरदुःखादुःखित्वे सति तन्निराचिकीर्षा दया। अमृतपानवत् स्वादुदर्शित्वं माधुर्य्यमित्यादयः स्वाभाविका अनन्ताश्च। एते सौशील्यादयस्तु भगवदाश्रयणे आश्रितरक्षणे चोपयोगिन इति विवेकः। सूत्रिताश्चैते भगवता श्रीबादरायणेन—विवक्षितगुणोपपत्तेश्चेति। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति, सत्यकामः सत्यसंकल्पः सर्वांल्लोकानीशत ईशनीभिः, सर्वस्य शरणं सुहृत्, विष्णोर्नु कं वीर्य्याणि प्रावोचत् यः पार्थिवानि विममे रजांसि, न ते विष्णोर्जायमानो न जातो देवस्य महिम्नः परमं तमाप, सहस्रधा महिमानः सहस्र इत्यादिना श्रूयन्ते च। "ज्ञानशक्तिबलैश्वर्य्यतेजोवीर्य्याण्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः॥ स सर्वभूतप्रकृतिं विकारान् गुणाँश्च दोषाँश्च मुने व्यतीतः। अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले। समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशावृतभूतसर्गः। इच्छागृहीताऽभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ। तेजोबलैश्वर्य्यमहाऽवबोधस्ववीर्य्यशक्त्यादिगुणैकराशिः। परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे। स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः। सर्वेश्वरः सर्वगः सर्ववेत्ता समस्तशक्तिः परमेश्वराख्य" इत्यादिस्मरणं च। कल्याणधर्माश्च जगज्जन्मादिकारणत्व–शास्त्रयोनित्व–मोक्षप्रदत्व—सर्वकर्मफलप्रदत्व–विश्वाधारत्व–सर्वव्यापित्व–सर्वनियन्तृत्व–निरतिशयसूक्ष्मत्व–निरतिशयमहत्त्वेश्वरेश्वरत्व–सर्वानतिक्रमणीयत्वादयो ह्यसं-

ख्याताः । जन्माद्यस्य यतः शास्त्रयोनित्वात् । तन्निष्ठस्य मोक्षव्यपदेशात् । अन्तस्तद्धर्मोपदेशात् । आकाशस्तल्लिङ्गात् । फलमत उपपत्तेरित्यादिसूत्रेभ्यः । यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति । यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः । स कारणं करणाधिपाधिपः । सर्वे वेदा यत्पदमामनन्ति । तं त्वौपनिषदं पुरुषं पृच्छामि । तद्वेदगुह्योपनिषत्सुगूढः संसारबन्धस्थितिमोक्षहेतुः । कर्म्माध्यक्षः सर्वभूताधिवासः । तस्मिँल्लोकाः श्रिताः सर्वे सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् । यो देवोऽग्नौ योऽप्सु यो विश्वं भुवनमाविवेश ओषधिषु वनस्पतिषु तस्मै देवाय नमो नमः । एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूताऽन्तरात्मा सर्वाँल्लोकानीशत ईशनीभिः । सर्वस्य प्रभुमीशानं तमीशानं वरदं भूतमीड्यम् । सूक्ष्माच्च सूक्ष्मतरं विभाति यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । अणोरणीयान्महतो महीयान् । तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् । तद्धु नात्येति कश्चनेत्यादिश्रुतिभ्यः । अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृत् । नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती । वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते च मध्ये च हरिः सर्वत्र गीयते । बन्धको भवपाशेन भवपाशाच्च मोचकः । कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः । मोक्षयिष्यामि मा शुचः । यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया । मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव । बुद्धिर्मनो महद्वायुस्तेजो-

ऽम्भः खं मही च या । चतुर्विधं च यद् भूतं सर्वं कृष्णे प्रति-ष्ठितम् इत्यादिस्मृतिभ्यः । एतेन स्वरूपेण बृहद्गुणयोगाच्च यद् बृहत्तमं वस्तु तद् ब्रह्मशब्दवाच्यमिति निर्वचनसिद्धिः । बृंहति बृंहयति तस्मादुच्यते परं ब्रह्मेति श्रुतेः । एष प्रकृतिरव्यक्तः कर्ता चैव सनातनः। परं च सर्वभूतेभ्यस्तस्माद् वृद्धतमोऽच्युतः। बृहत्त्वाद् बृंहणत्वाच्च ब्रह्मेत्यादिस्मृतेश्च। तथाहि, बृहि बृंहि वृद्धा-वित्यस्माद्धातोरौणादिकगणपठितेन मन्प्रत्ययेन ब्रह्मशब्दो व्यु-त्पन्नः । योगवृत्त्या ब्रह्मपदस्य निरतिशयबृहत्त्वपरत्वे सिद्धे तस्यासंकोचेन देशकालवस्तुपरिच्छेदशून्ये वस्तुनि पर्य्यवसानं निश्चीयते । तथाभूतश्च भगवच्छब्दवाच्यः पुरुषोत्तमो रमा-कान्तः श्रीकृष्ण एवेति फलितम् ।

परत्वादेव—व्यूहाङ्गिनमिति । उपलक्षणार्थोऽयं व्यूहश-ब्दोऽन्यावतारमूर्तीनाम् । तथाच व्यूहा अवताराश्चाङ्गानि ता-न्येव विद्यन्ते यस्य तम् अनन्तमूर्तिकम् । सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्मः सर्वरूप इति श्रुतेः । उभयविभूतिपतिमिति यावत् । अवतारावस्थायाम् अव्यक्तश-क्तित्वेऽपि अजहद्गुणशक्तिकत्वादतिशयसाम्यशून्यत्वात् परि-पूर्णमेव । तस्मात् कृष्ण एव परो देवस्तं ध्यायेदित्यादिश्रुतेः मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवेति गीयमानाच्च । तत्र व्यूहो नाम श्री-पुरुषोत्तमो विश्वसृष्ट्याद्यर्थं तथाविधोपासनार्थं च व्यूहात्मनाऽव-स्थितो भवति, वासुदेव—संकर्षण—प्रद्युम्नाऽनिरुद्धभेदेन चतु-र्विधः । " व्यूहात्मानं चतुर्धा वै वासुदेवादिमूर्तिभिः । सृष्ट्या-दीनि करोत्येष विश्रुतात्मा जनार्दन " इत्यादिवचनात् । केशवा-ऽऽदयोऽपि द्वादशव्यूहमूर्तय, ऊदूर्ध्वपुण्ड्रविधायकमन्त्रदेवता-

स्तत्र तत्र ध्येयाः । अवतारो नाम—स्वेच्छया धर्मसंस्थापनार्थम्, अधर्मोपशमनार्थं, स्वीयानां वाञ्छापूर्त्यर्थं च विविधविग्रहैराविर्भावविशेषः ।

अवताराखिविधाः—गुणावताराः, पुरुषावताराः, लीलाऽवताराश्च । गुणनियन्तृत्वेन तदभिमानिदेवकालादिभिः सृष्ट्यादिकर्ता गुणावतारः । तत्र रजोगुणनियामको रजोमात्रोपाधिकः तद्गुणाभिमानिचतुर्मुखकालदक्षादिद्वारेण जगत्स्रष्टा, सत्त्वनियन्ता च, स्वयमेव स्वात्मना सत्त्वमात्रोपहितेन कालमन्वादिद्वारेण पालको रक्षिता च । तमोगुणनियामकश्च तदभिमानिरुद्रकालादिद्वारेण संहर्ता चेति । पुरुषावताराश्च महत्स्रष्टृप्रकृतिनियन्ता कारणार्णवशायी प्रथमः । अथ गर्भोदशायी समष्ट्यन्तर्यामी द्वितीयः । क्षीरोदशायी व्यष्ट्यन्तर्यामी तृतीयः पुरुषः । " प्रथमं तु महत्स्रष्टृ द्वितीयं त्वण्डसंस्थितम् । तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते " इति वचनात् । उपाधिभेदात् तत्तदवस्थापन्नस्तत्तत्संज्ञां भजत इत्यर्थः ॥

अथ लीलावताराः । तेऽपि द्विविधाः । आवेशावताराः स्वरूपावताराश्च । आवेशोऽपि द्विविधः, स्वांशावेशः शक्त्यंशाऽवेशश्च । स्वांशावेशो नाम जीवव्यवधानाभावेन साक्षात्स्वांशेन प्राकृतविग्रहादावावेशः । यथा नरनारायणादिरूपः । शक्त्यंशमात्रेणाविश्य जीवादिव्यवहितस्तत्कार्यसाधकः शक्त्यंशावेशः । स च तारतम्यभेदात् प्रभवविभवसंज्ञको भवति । तत्राद्यो धन्वन्तरिपरशुरामादयः । द्वितीयः कपिलऋषभचतुःसननारदव्यासादिरूपः ।

अथ स्वरूपावतारः । स्वरूपेण सच्चिदानन्दात्मकेनाविर्भावः । स्वरूपावतारश्च दीपाद् दीपान्तरवदभिन्नस्वरूपगुणशक्तिकः ।

सोऽपि द्विविधोंऽशरूपः पूर्णरूपश्च । तत्र पूर्णोऽपि अल्पगुणशक्त्याविष्करणाद् अंश इत्युच्यते मत्स्यकूर्मवराहवामनहयग्रीवहंसादिरूपः । पूर्णशक्त्यादिव्यक्तीकरणात् पूर्णः श्रीनृसिंहो दाशरथी रामः श्रीकृष्णश्चेति विवेकः ।

एवं पूर्णत्वमुक्त्वा सर्वोपास्यत्वमाह—वरेण्यमिति ॥ स्वरूपेण तद्गुणैर्दिव्यमङ्गलविग्रहेण विग्रहगुणैश्च सौन्दर्य्यसौकुमार्य्यमाधुर्य्यलावण्यादिभिः साधारणत्वेन ब्रह्मादिश्वपाकान्तैर्वरणीयमित्यर्थः । एष एवाऽचिन्त्यः परः परमो हरिरादिरनादिरनन्तोऽनन्तशीर्षोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणोऽनन्तरूप इत्यादिश्रुतेः ।

सौन्दर्य्यं व्यनक्ति—कमलेक्षणमिति । कमलोपमे ईक्षणे यस्य तम् । "सत्पुण्डरीकनयनं मेघाभं वैद्युताऽम्बरम् । नमः कमलनेत्राय नमः कमलमालिने" इति मन्त्रवर्णात् । उपलक्षणं चैतत्तदन्येषामङ्गानाम् । एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यकेशः हिरण्यश्मश्रुः । आप्रणखात् सुवर्णः । आनन्दरूपममृतं यद् विभाति । यदात्मको भगवांस्तदात्मिका व्यक्तिः, किमात्मको भगवान्, ज्ञानात्मक ऐश्वर्य्यात्मको, विश्वतश्चक्षुरुत विश्वतोमुख इत्यादिश्रुतेः । यद्वा कमलया लक्ष्म्या ईक्ष्यते इति कमलेक्षणस्तं सौन्दर्यसीमानमित्यर्थः । रमामानसहंसाय गोविन्दाय नमो नम इति मन्त्रवर्णात् । अत एव हरिं ध्यातॄणां मनोहरं, तेषामेव पापं हरतीति वा "हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः" इति वचनात् । ब्रह्मादीनामपि हरणहेतुत्वाद्वा । "ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च । प्रसह्य हरते यस्मात् तस्माद्धरिरितीर्यत" इति वचनात् ॥

किञ्च वेदमातृव्याख्यारूपोऽप्ययं श्लोकः । तथाहि—यो नो धियः प्रचोदयात् तत्सवितुर्देवस्य वरेण्यं भर्गो धीमहि इत्यन्वयः । तत्र यो नो धियः प्रचोदयादित्यस्यार्थः—कमलेक्षणमित्यनेन संगृह्यते हृत्कमले ईक्ष्यते योगिभिरिति कमलेक्षणस्तं सर्वधीनियन्तारम् । "अष्टपत्रं विकसितं हृत्पद्मं यत्र संस्थितम् । अन्तः प्रविष्टः शास्ता जनानाम् । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया" इति शास्त्रात् । देवपदार्थमाह—ब्रह्मेति । स्वरूपगुणादिभिर्निरतिशयबृहद्वस्तु ब्रह्मशब्दाभिधेयमित्युक्तं पुरस्तात् । तदेव देवपदेन अभिधीयते । तथाहि । दीव्यति क्रीडति विश्वसर्गादिभिरिति देवः । ॐ नमो विश्वरूपाय विश्वस्थित्यन्तहेतवे इति मन्त्रवर्णात् । अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते इति भगवद्वचनाच्च । विजिगीषतेऽसुरानिति देवः । कंसवंशविनाशाय केशिचाणूरघातिने । संरक्षणाय साधूनां विनाशाय च दुष्कृतामिति । सर्वभूतेष्वन्तर्यामितया व्यवहरतीति देवः । य आत्मानमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः । सर्वस्य चाहं हृदि संन्निविष्ट इति । द्योतत इति देवः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति । येन सूर्य्यस्तपति तेजसेद्धः । यदादित्यगतं तेजो जगद् भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाऽग्नौ तत्तेजो विद्धि मामकमिति । स्तूयते ब्रह्मादिभिरिति देवः । तमेकं गोविन्दं सच्चिदानन्दविग्रहं वृन्दावनसुरभूरुहतलासीनं परमया स्तुत्या स्तोषयामि, स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिरिति । सर्वत्र गच्छतीति देवः । यः सर्वज्ञः सर्ववित् । वेदाहं समतीतानि वर्तमानानि चार्ज्जुन । भविष्याणि च भूतानि मां तु वेद न कश्चनेति । अनेजदेकं मनसो जवीयः । मया ततमिदं सर्वं जगदव्यक्तमूर्तिना

इति । एको वशी सर्वगः कृष्ण ईड्यः । मोदते वेति देवः । एष आनन्दयातीत्यादिनिर्वचनेभ्यो देवशब्दो ब्रह्मवाचक इति भावः । एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मेति श्रुतेः । सूत्रितं चैतद् भगवता बादरायणेन जिज्ञासाविषयतया देवपदार्थस्य ब्रह्मत्वेन । एवं व्युत्पत्तिमुखेन व्याख्यातो देवशब्दः । इदानीं लक्षणमुखेनाप्याह । तत्सवितुरिति तच्छब्दो गायत्रीविषयभूतध्येयमन्तर्यामिणमाह । योऽस्माकं बुद्धिप्रेरकः स चासौ सविता च तस्येति यत्तदोर्नित्यसंबन्धात् । जगत् सूयते यस्मादिति सविता । प्रजानां च प्रसवनात् सवितेत्यभिधीयते इति विष्णुधर्म्मोत्तरवचनात् । उपलक्षणं चैतत् स्थितिप्रलयोः । तथाच विश्वस्य जन्मस्थितिलयकारणमिति सिद्धम् । ब्रह्मलक्षणं, यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद् ब्रह्म तद्विजिज्ञासस्वेति श्रुतेः । यतः सर्वाणि भूतानि प्रभवन्ति युगागमे । यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये । अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते इत्यादिस्मृतेः । जन्माद्यस्य यत इति न्यायाच्च । एवमुदाहृतेभ्यः प्रमाणवाक्येभ्य उक्तानां निर्वचनानां लक्षणस्य च विषयः, समन्वयाधिकरणं च श्रीभगवान् वासुदेव एवेति निश्चित्य भर्गःपदं व्याचष्टे—कृष्णमिति भर्गमिति भर्जयति ध्यातॄणां कर्माणि इति भर्गो दिव्यमङ्गलवपुर्वाचकः सकारान्तो द्वितीयैकवचनोऽयं भर्गःशब्दः । यदा पश्यः पश्यते रुक्मवर्णमित्यारभ्य, तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति, भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे इत्यादिश्रुतिभ्यो दिव्यमङ्गलविग्रहः कृष्ण एव भर्गःशब्दाभिधेयः । तमेकं गोविन्दं सच्चिदानन्दविग्रहमिति मंन्त्रवर्णात् । किञ्च । तदु होचुः कः

कृष्ण इति प्रश्ने, पापकर्षकमिति उत्तरवचनात् पापं कर्षयति निर्मूलयतीति कृष्ण इति निरुक्तिरुक्ता । पापशब्दः पुण्यस्याऽप्युलक्षणार्थः । तथाच ध्यातॄणां पापपुण्यात्मककर्मकर्षकत्वात् कृष्णो भर्गःशब्दवाच्य इति भावः । यद्वा, भरणगमनयोगाद् अकारान्तोऽयं भर्गशब्दो विश्वभर्तृसर्वव्यापिविश्वाऽन्तर्यामिसर्वकारणब्रह्मवाचकः । तथाच यो भर्ग इति यच्छब्देनान्वेति यः सर्वभर्ता सर्वगो देव इत्यर्थः । एतेन शास्त्रयोनित्वं सर्ववेदसमन्वितत्वं मोक्षप्रदातृत्वं चोक्तं भवति । तथाहि । यज्जगत्कारणं तदेव वेदान्तशास्त्रविषयभूतं वस्तु । तत्रैव सर्वशास्त्रसमन्वयान्मोक्षकारणमिति सूत्रकृतामभिप्रायः । अथातो ब्रह्मजिज्ञासा इत्यारभ्य, अनावृत्तिः शब्दादित्यन्तेनाध्यायचतुष्टयात्मकेन शास्त्रेण निर्णीतः ।

मोक्षप्रदत्वात्सर्वोपास्यत्वमाह—वरेण्यमिति । मुमुक्षुभिरनन्यतया वरणीयमित्यर्थः । मुनयो ह वै ब्रह्माणमूचुः कः परमो देवः कुतो मृत्युर्बिभेति इत्युपक्रमे प्रश्नः । तस्मात् कृष्ण एव परो देवस्तं ध्यायेदित्युत्तरोपसंहारवाक्याद् यो गायत्रीप्रतिपाद्यो देवः स एव कृष्णस्तं ध्यायेदित्यर्थः । तदेवाह—ध्यायेमेति । धीमहीत्यस्यापरपर्यायः । आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । सोऽन्वेष्टव्यः स विजिज्ञासितव्य इत्यादि श्रुत्युक्तविधौ । धीमहीतिशब्दप्रयोगश्छान्दसः ।

इदानीं सर्वोपासनानामत्रैवाऽन्तर्भावमाह—

व्यूहाङ्गिनमिति । ननु, यतो वा इमानि भूतानि जायन्ते, जन्माद्यस्य यत इत्यादौ सामान्यप्रयोगात् सामान्यस्य यत्तदादेर्विशेषतन्त्रत्वाद्विशेषाऽपेक्षायां जगत्कारणविधायकश्रुतीनां, हिरण्यगर्भः समवर्तताग्रे, आदिकर्ता स भूतानां ब्रह्माऽग्रे समव-

तर्त, ब्रह्मा देवानां प्रथमः संबभूव, विश्वस्य कर्ता भुवनस्य गोप्ता, विरिञ्चो वा इदं विरेचयति विदधाति इति ब्रह्मा वा विरिञ्चः, एतस्माद्धीमे रूपनामनी, न सन्नचासच्छिव एव केवलः, एको रुद्रो न द्वितीयाय तस्थुः, यो देवानां प्रभवश्चोद्भवश्चेत्यादीनां ब्रह्मरुद्रादिविविधविषयकत्वात् कथं कृष्णस्य जगत्कारणत्वं निश्चीयते इत्याशङ्कायां समाधानमाह—

परमिति। कारणकारणम् ईश्वरेश्वरं देवदेवं ब्रह्मरुद्रादिजनकं ब्रह्मादिगुरुमित्यर्थः। तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतं, स कारणं कारणाधिपाधिपः, न तस्य कश्चिज्जनिता न चाधिप इति श्रुतेः। मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय, परः पराणां सकला न यत्र क्लेशादयः सन्तीत्यादिस्मृतेश्च। ब्रह्मादीनां तु क्वचिदैश्वर्यश्रवणेऽपि जन्यत्वकर्म्मतन्त्रत्वादिश्रवणान्न परत्वयोग इत्यर्थः। एको ह वै नारायण आसीन्न ब्रह्मा नेशानः। तस्य ध्यानान्तःस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषोऽजायत, तस्य ध्यानान्तःस्थललाटात् स्वेदोऽपतत् ता इमाः प्रपतत्, ता आपः, तत्र हिरण्मयमण्डं, तत्र ब्रह्मा चतुर्मुखोऽजायत, नारायणाद् ब्रह्मा जायते नारायणाद् रुद्रः, यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्मै, यो ब्रह्माणं विदधाति पूर्वं यो वै विद्यास्तस्मै गोपायति स्म कृष्णः, अस्य देवमीढुषो दया विष्णोरेव प्रवृद्धेर्हविर्भिर्ददेह रुद्रो रुद्रीयमहित्वमिति बह्वृचः। सोऽब्रवीद्वरं वृणुष्व, अहमेव पशूनामधिपतिरसानीति तस्माद् रुद्रः पशूनामधिपतिरिति भगवत उभयोः साक्षाज्जन्म विद्यादिलाभश्च श्रूयते। तथैव स्मर्यते च—"यस्य प्रसादादहमच्युतस्य भूतः प्रजासृष्टिकरोऽन्तकारी। क्रोधाच्च रुद्रः स्थितिहेतुभूतो यस्माच्च मध्ये पुरुषः परस्तादि"ति वैष्णवे।

"प्रजापतिं च रुद्रं चाप्यहमेव सृजामि वै । तौ हि मां न च जानीतो मम मायाविमोहितौ" इति मोक्षधर्मे । "युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः । पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुम । मया सृष्टः पुरा ब्रह्मा मद्यज्ञमयजत् स्वयम् । ततस्तस्य वरान् प्रीतो ददावहमनुत्तमान् । मत्पुत्रत्वं च कल्पादौ लोकाऽध्यक्षत्वमेव च, इति । विश्वरूपो महादेवः सर्वमेधे महाक्रतौ जुहाव सर्वभूतानि स्वयमात्मानमात्मना । महादेवः सर्वयज्ञे महात्मा हुत्वाऽऽत्मानं देवदेवो बभूव । विश्वाँल्लोकान् व्याप्य विष्टभ्य कीर्त्या विराजते द्युतिमान् कृत्तिवासा, इति भारते । ब्रह्मादयः सुराः सर्वे विष्णुमाराध्य ते पुरा । स्वं स्वं पदमनुप्राप्ताः केशवस्य प्रसादतः, इति नारसिंहे । ते देवा ऋषयश्चैव नानातनुसमाश्रिताः । भक्त्या संपूजयन्त्येनं गतिं चैषां ददाति सः । ततस्ते विबुधाः सर्वे ब्रह्मा ते च महर्षयः । वेददृष्टेन विधिना वैष्णवं क्रतुमारभन् । प्रापुरादित्यवर्णं तं पुरुषं तमसः परम्, इति नारायणीये । तत्रैव भगवान्—येन यः कल्पितो भागः स तथा मामुपागतः । प्रीतोऽहं प्रदिशाम्यद्य फलमावृत्तिलक्षणमिति । छान्दोग्ये च, विरूपाक्षाय धात्रेशाय विश्वदेवाय ब्रह्मणः पुत्राय ज्येष्ठाय इति शतपथब्राह्मणे च, संवत्सराद् कुमारोऽजायत कुमारोऽरोदीत् प्रजापतिरब्रवीत् किं रोदिषि यच्च मम तपसोऽधिजातोऽसीति, सोऽब्रवीदनपहतपाप्माऽहमस्मि हन्त नामानं मे देहीति । नारायणः परो देवस्तस्माज्जातश्चतुर्मुखः । तस्माद्रुद्रोऽभवद्देवः स च सर्वज्ञतां गत, इति वराहे । अहं ब्रह्मा चाद्य ईशः प्रजानां तस्माज्जातस्त्वं च मत्तः प्रसूतः । मत्तो जगज्जङ्गमं स्थावरं च सर्वे वेदाः सरहस्याश्च पुत्र" इति नारायणीये इति श्रुतिस्मृतिभ्यो भगवतः सकाशाच्चतुर्मुखजन्मद्वारेण रुद्रोद्भवः । स च कल्पभेदाद् भेदोऽध्यवसितव्यः ।

नतु क्वचिद् ब्रह्मशिवलिङ्गादिषु पुराणेषु ब्रह्मशिवादीनां परत्वं व्याख्यातम्। तथा सति तेषामपि पुराणत्वेन प्रमाणत्वाऽविशेषत्वात् कथं विष्णोरेव परत्वं निश्चीयते इतिचेन्न। तेषां तु पुराणत्वाऽविशेषेऽपि राजसतामसत्वाभ्यां संसारहेतुत्वेन दुर्वलत्वात्। सात्त्विकैर्मोक्षकारणभूतैस्तेषां वाध्यत्वं युक्तमेव। एदुक्तं भवति—पुराणानि चतुर्विधानि सात्त्विकराजसतामससंकीर्णभेदात्। सात्त्विककालोद्भवं सात्त्विकविषयाधिकारिकं सात्त्विकम्। राजसकालोद्भवं राजसवस्तुप्रतिपादकं तथाभूताधिकारिकं राजसम्। एवमन्यदप्यूहनीयम्। तथाच मात्स्ये—"संकीर्णास्तामसाश्चैव राजसाः सात्त्विकाः स्मृताः। कल्पाश्चतुर्विधाः प्रोक्ता ब्रह्मणो दिवसाश्च ये। यस्मिन् कल्पे तु यत् प्रोक्तं पुराणं ब्रह्मणा पुरा। तस्य तस्य च माहात्म्यं तत्तत्कल्पे विधीयते। अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्तितम्। राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः। संकीर्णेषु सरस्वत्याः पितॄणां च निगद्यते। सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः। तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम्, इति। कौर्मेऽपि, असंख्यातास्तदा कल्पा ब्रह्मविष्णुशिवात्मकाः। कथिता हि पुराणेषु मुनिभिः कालचिन्तकैः। सात्त्विकेष्वपि कल्पेषु माहात्म्यमधिकं हरेः। तामसेषु शिवस्योक्तं राजसेषु प्रजापते"रिति तत्रैव। वैष्णवपाञ्चादीनां सात्त्विकमूलत्वेन कात्स्न्येंनालुप्तज्ञानत्वात् प्रावल्यम्। इतरेषां तु रजस्तमोमूलत्वेन विक्षेपावरणार्हत्वात् परतत्त्वापह्नवपरत्वात् तद्विपरीतानां परत्वप्रकाशकत्वाच्च संशयविपर्ययहेतुत्वेन वाध्यत्वम्। एवं हि मुमुक्षुभिः श्रेयस्कामै राजसादीन् हित्वा सात्त्विकान्येवावलम्ब्यानि श्रेयस्कारणभूतानि सदा सेव्यानीति। तथाचाह भगवान् मनुः—"या वेदवाह्याः

स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रोक्तास्तमोनिष्ठा हि ताः स्मृता" इति । उपलक्षणं चात्र पुराणशब्दः । उक्तलक्षणः श्लोको वा, श्लोकार्द्धं वा, पादमात्रं वा सात्त्विकं चेदुपादेयम् । राजसलक्षणं च श्लोकादि चेद्धेयम् । तथैव तामसं संकीर्णं चेति विवेचनीयम् ।

ननु यद्येवं तर्हि सर्वैरप्येवं निर्णीय सात्त्विकमेव किमिति न सेव्यते इति चेन्न । दुष्कृतयोगादिति ब्रूमः । तच्च स्वयमेव गीतं भगवता श्रीमुखेनाऽन्वयव्यतिरेकाभ्यां "न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः । माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः । येषां त्वन्तगतम्, इति श्लोकः । महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्"इति । किञ्च । मनुष्याणां सहस्रेषु तपोदानसमाधिभिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते इति वचनात् । ततश्च जन्मसमये श्रीभगवत्कृपाकटाक्षावलोकितः सात्त्विको भूत्वा सात्त्विकैः संगम्य सात्त्विकान्येव सेवते मुच्यते च । अन्यथा अन्यैरवलोकितश्चेत् तथाभूतैरेव संगम्य संसारी भवति । तथाचोक्तं मोक्षधर्म्मे । "जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः । पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः । रजसा तमसा चैव मानसं समभिप्लुतम्" इति । सात्त्विकैः सेव्यते विष्णुस्तामसैरेव शंकरः । राजसैः सेव्यते ब्रह्मा संकीर्णैश्च सरस्वती, इत्यादीन्यन्यान्यपि चिन्तनीयानि ।

ननु गायत्रीवृत्तिसवितृपदस्य सूर्य्यरूढत्वाद् रूढेश्च योगबाधकत्वेन बलवत्त्वात् सूर्य्यप्रतिपादक एव गायत्रीमन्त्र इत्यवगम्यते । तथाच गायत्रीविषयस्यैव वेदान्तविषत्वात् सूर्य्यस्यैव निरतिशयपरत्वमितिचेन्न । रूढेर्योगाद् बलवत्त्वेऽपि तात्पर्यबाधे

विपर्य्ययदर्शनात्। आकाशप्राणादिषु तथा निर्णयात्। तथाहि श्रूयते छान्दोग्ये शालावत्यजैवलिसंवादे, अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायान् आकाशः परायणमिति। अत्राकाशशब्दो भूताकाशपरो, ब्रह्मपरो वेति संशयः। तत्र भूताकाशपर एवेति पूर्वपक्षः। कुतः?। आकाशशब्दस्य भूताकाशे रूढत्वाद् योगवृत्तेः, रूढेर्बलीयस्त्वादिति प्राप्ते, सिद्धान्तः—आकाशस्तल्लिङ्गादिति। आकाशः परमात्मैव। कुतः? तल्लिङ्गात्। वाक्यशेषे तस्यैव परमात्मनोऽसाधारणलिङ्गानां जगत्कारणत्वज्यायस्त्वपरायणत्वादीनां श्रवणात्। भूताकाशस्य च वाय्वादीनां कारणत्वेऽपि सर्वकारणत्वासंभवात्। तस्माद्वा एतस्माद्वा आत्मन आकाशः संभूत इति जन्यत्वश्रावणाच्च। य आकाशमन्तरो यमयतीति नियम्यत्वश्रवणाच्च। तस्माल्लिङ्गाऽन्यथाऽनुपपत्तिसहकृतयोगवृत्तेर्बलीयस्त्वाद् रूढेर्बाध इति। सर्वमभिव्याप्य काशत इत्याकाशः। तमेव भान्तमनुभाति सर्वमिति श्रुत्यन्तरात्। तथैवान्यदपि तत्राम्नायते, कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्तेति। तत्र प्राणशब्दो वायुवृत्तौ, ब्रह्मणि वेति संशयः। वायुवृत्तौ एव शक्त इति पूर्वपक्षः। कुतस्तत्रैव प्राणशब्दस्य रूढत्वेनातिप्रसिद्धत्वात्। तत्र ब्रूते—अत एव प्राण इति। प्राणपदाभिधेयः पुरुषोत्तम एव। कुतः?। अत एव = सर्वभूताभिसंवेशनादिपरमात्मलिङ्गादेव। तथाच वायुवृत्तावनुपपन्नत्वाद् इति समन्वयाध्याये प्रथमपादे निर्णितं सूत्रकृद्भिः। तथैवात्रापि सवितृशब्दस्य रूढिवृत्त्याऽऽदित्यपरत्वेऽपि सर्वधी-

नियन्तृत्वादीनां परमात्मासाधारणलिङ्गादीनां तत्रासंभवाद् योगवृत्त्या ब्रह्मविषयकत्वं निश्चीयते । आदित्यस्य तु नियम्यत्वजन्यत्वपराङ्गत्वपरतन्त्रप्रकाशकत्वादीनाम् अनीश्वरलिङ्गादीनां श्रवणाज्जीवत्वं स्पष्टमेव । एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्य्याचन्द्रमसौ विधृतौ तिष्ठतः । भीषाऽस्माद् वातः पवते भीषोदेति सूर्य्यः, चक्षोः सूर्योऽजायत, सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्य्यौ, येन सूर्यस्तपति तेजसेद्धः । न यत्र सूर्य्यो भाति न चन्द्रतारकम् । यत्र न सूर्य्यस्तपति, यत्र वायुर्न वातीत्यादिश्रुतिभ्यः । तस्माद्गायत्रीमन्त्रप्रतिपाद्यः सर्वज्ञः सर्वशक्तिः स्वाभाविकाचिन्त्यानन्तकल्याणगुणाश्रयः श्रीभगवान् पुरुषोत्तमो रमाकान्त एवेति सिद्धम् ।

ननु "एकमेवाद्वितीयं ब्रह्म नेह नानाऽस्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति । निर्गुणं निष्कलं शान्तं निरवद्यं निरञ्जनम् । यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् । यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । यद्वाचानभ्युदितं येन वागभ्युद्यते" इत्यादिश्रुतिभिर्ब्रह्मण एकत्वनिर्गुणत्वनिर्विशेषत्वज्ञानाविषयत्वशब्दाद्यगोचरत्वादिप्रतिपादनात् कथमुक्तप्रकारकब्रह्मप्रतिपत्तिस्तथात्वे चोक्तश्रुतीनां निर्विषयतया व्याकोपात् । तच्चाऽनिष्टमितिचेन्न । सर्वश्रुतीनामस्मत्सिद्धान्ताऽविरोधित्वात् । तथाहि । सदाकाशप्राणज्योतिरात्मब्रह्मनारायणादिशब्दाभिधेयस्य विश्वकारणस्यैकत्वाभ्युपगमात् तत्परोऽयं वाक्यकदम्बः । एवश्चैकशब्दो जगत्कारणस्यैकत्वं विदधाति ।

अन्ययोगव्यवच्छेदार्थकेनाऽवधारणेन च तत्साम्यं निराक्रियते, अद्वितीयपदेन च तदाधिक्यमिति बोध्यम् । न तत्समश्चाभ्य-

धिकश्च दृश्यते इति श्रुत्यन्तरात् । एवं सदाद्यनेकशब्दप्रयोगात् तदर्थे कारणे नानात्वसंभावनावारणायाह । इह जगत्कारणे नानाशब्दवाच्येऽपि नानात्वं नास्ति । तस्यैकत्वात् । नानात्वदर्शनस्य फलमाह । मृत्योः स मृत्युमाप्नोति । सदैव जन्ममरणादिदुःखात्मकसंसारभाग् भवति । नानात्वदर्शनमास्तां, नानेव दर्शनस्यैतावत् फलमित्यर्थ इति कैमुत्योक्त्या महादोषः सूचितः । यद्वा क्वचिच्चतुर्मुखादीनां कारणत्वश्रवणात् तत्र तथात्वशङ्कावारणायेदं वाक्यम् । इह जगत्कारणे नाना चतुर्मुखत्रिनयनादिभेदो नास्ति । कारणस्य एकत्वावधारणात् । तेषां च नियम्यत्वादिश्रवणात् । अवरत्वं पूर्वमेवोक्तम् । शेषं समानम् । तथैव निर्गुणवाक्यानां हेयगुणविशेषनिषेधपरत्वेन नैराकाङ्क्ष्यात् । नच निर्गुणमिति सामान्यशब्दप्रयोगाद् धर्ममात्राऽपवाद इति वाच्यम् । तेषां स्वाभाविकत्वश्रवणात् स्वाभाविकवस्तुनो निषेधाविषयत्वनियमात् । न हि अग्नेर्दहनप्रकाशनादिधर्मो निषेद्धुं शक्यः केनाऽपि विदुषा । अन्यथा, अस्थूलादिवाक्यैः स्वरूपस्यापि निषेधोऽभ्युपगन्तव्यः । स्वाभाविकत्वाविशेषात् । तस्माद्धेयगुणनिषेधपराण्येव निर्गुणवाक्यानीति न तैर्विरोधशङ्कावकाशः । नापि ज्ञानाविषयकवाक्यविरोधः । तेषामियत्ताऽवच्छिन्नविषयकनिषेधरूपत्वात् । तथाहि । यस्य पुंसः परमेश्वरस्वरूपगुणादिविषयकेयत्तावच्छेदेन अमतम् अननुभूतमनुमानादिभिः, तस्य मतं तेन मतम् अपरिच्छिन्नत्वेन ज्ञातमित्यर्थः । यस्य तु स्वरूपादि इयत्तावच्छेदेन मतं स न वेद । परिच्छिन्नदर्शित्वात् । भगवत्स्वरूपगुणादीनाम् अनन्तत्वेनाऽचिन्त्यत्वात् । सत्यं ज्ञानमनन्तं ब्रह्म । विष्णोर्नु कं विर्याणि प्रावोचं यः पार्थिवानि विममे रजांसि । न ते विष्णोर्जायमानो न जातो देवस्य महिम्नः

परमं तमाप। सहस्रधा महिमानः सहस्रः। एप एवाऽचिन्त्यः परः परमो हरिरादिरनादिरनन्त इत्यादिश्रुतिभ्यः। एवमेवान्यदपि वाक्यं व्याख्येयम्। ऐक्यार्थ्यात्। अन्यथा, तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते अयनाय। य एवं विदुरमृतास्ते भवन्ति। यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा देवमविज्ञाय दुःखस्यान्तं निगच्छतीत्यादिवाक्यव्याकोपात्। ज्ञानाऽभावेऽनिर्मोक्षप्रसङ्गाच्च। तत्रैव वाक्यशेषे, मत तस्य, विज्ञातमविजानतामिति ज्ञानविषयत्वप्रतिपादनाच्च। किञ्च। यतो वाचो निवर्तन्ते इत्यत्र, यतः सर्वज्ञात् सर्वशक्तेः स्वाभाविकाऽचिन्त्यानन्तकल्याणगुणाश्रयात्पुरुषोत्तमात्, तस्यानन्दादीनामन्तमप्राप्य मनसा सह वाचो निवर्तन्ते इति तेषामनन्तत्वाद् उदाहृतवाक्येभ्यः। अन्यथा तत्रैव मन्त्रशेषे, आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति तदीयानन्दस्य ज्ञानविषयत्वं भयनिवृत्तिफलकत्वं चोक्तं विरुद्ध्यते। तं त्वौपनिषदं पुरुषं पृच्छामः। सर्वे वेदा यत्पदमामनन्ति। वेदैश्च सर्वैरहमेव वेद्यः। नमामः सर्ववचसां प्रतिष्ठा यत्र शाश्वतीत्यादिशास्त्रविरोधात् सर्वं हि उपदेशशास्त्रं दत्ततिलाञ्जलि स्याद्, उपदेष्टृसंततिनाशश्च। तस्मादुक्तलक्षणं ब्रह्मैव गायत्रीप्रतिपाद्यत्वात् सर्ववेदान्तविषय इत्येव साधीयान्। तथैव च सूत्रितं च भगवता बादरायणेन, शास्त्रयोनित्वादिति।

केश्चिन्निर्विशेषं ब्रह्माभ्युपगम्यते। तत्तुच्छम्। सर्वप्रमाणाऽविषयत्वेन शशशृङ्गायमाणत्वात्। तथाहि। प्रमाकरणं प्रमाणं तत् त्रिविधम्। प्रत्यक्षाऽनुमानशब्दभेदात्। इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। श्रीगुरुं चक्षुषा पश्यामि, हरिगाथां श्रोत्रेण शृणोमि, तुलसीसौरभं घ्राणेन जिघ्रामीत्यादिविषयसंबद्धमिन्द्रियं तत्करणत्वात् प्रत्यक्षप्रमाणम् १। व्याप्तिधीजन्यं ज्ञानमनुमितिः।

यथा—पर्वतो वह्निमान्, धूमवत्त्वात्। यो यो धूमवान् स स वह्निमान्। यथा महानसः। इन्द्रियमनोबुद्ध्यादीनि आत्मा न भवन्ति, करणत्वात्। दण्डादिवदिति। तत्करणमनुमानम् २। आप्तप्रयुक्तं वाक्यं शब्दः। भ्रमादिहेतुबुद्धिमान्द्यादिचतुष्टया-ऽप्रामाण्यकारणशून्यत्वे सति यथार्थवक्तृत्वमाप्तत्वम्। तच्च तारतम्यादिभेदात् त्रिविधम्। तत्राप्ततमो वेदस्तद्वाक्यं प्रमाणतमम्। आप्तमूलकत्वेनान्यनिरपेक्षत्वाच्छ्रुत्यर्थस्मर्तारो मन्वादय आप्ततराः। तेषां वाक्यं प्रमाणतरम्। श्रुतिमूलकत्वेन तत्सापेक्षत्वाच्छ्रुतिस्मृतिव्याख्यातार आप्तास्तद्वाक्यं प्रमाणम्। उभयमूलकत्वेनोभयसापेक्षत्वात्। तत्र प्रत्यक्षाऽनुमानयोः प्रमाणत्वेऽपि क्वचिन्मायामूर्द्धादिदर्शने देवदत्तस्यैवायं मूर्द्धेति प्रत्यक्षे, दृष्ट्या तत्कालविनष्टाऽग्नौ चिरमधिकधूमोद्गारिणि गिरौ—पर्वतो वह्निमान् धूमवत्त्वादित्याद्यनुमाने च व्यभिचारदर्शनात् सापेक्षत्वेन निर्बलत्वम्। शब्दस्य तु निरपेक्षत्वात् प्रबलत्वमिति विवेकः ३। उपमानादीनां चात्रैवान्तर्भावान्नपार्थक्यम्। न तत्र प्रत्यक्षं प्रमाणपदवीमवतिष्ठते। तस्यातीन्द्रियत्वाभ्युपगमात्। नाऽप्यनुमानं, लिङ्गशून्यत्वात्। नेन्द्रियाणि, नानुमानमिति श्रुतेः। नाऽप्यागमः। सर्वधर्मशून्यतया शब्दवृत्त्यविषयत्वात्। तथाहि। शब्दवृत्तिर्द्विधा, मुख्याऽमुख्यभेदात्। आद्या शक्तिरूपा। सा च-अस्माच्छब्दादयमर्थो बोद्धव्य इति ईश्वरेच्छासंकेत इति तार्किकैरभिधीयते। अर्थप्रतीतिजननसामर्थ्यलक्षणः स्वाभाविकः संबन्ध इति मीमांसका आहुः। चक्षुरादिवृत्तिविषयप्रकाशनयोग्यत्ववच्छब्दस्य तत्तदर्थप्रकाशनयोग्यतालक्षणसंबन्ध इति शाब्दिकाः। अघटघटनापटीयसी ब्रह्माश्रितस्वाभावकी, शक्तिमच्छब्दाश्रिता तदर्थप्रकाशनार्हताऽभिन्ना चेति त्वौपनिषदाः। सर्वथाऽपि, शब्दा-

श्रितातदर्थप्रकाशनयोग्यतेतिसामान्यंसर्वधारणलक्षणमितिसिद्धम्। सा त्रिधा रूढिर्योगो योगरूढिश्चेति। तत्र समुदायशक्तिः रूढिः। यथाहरिः, नारद इत्यादिः। रूढो द्विविधः, पर्यायोऽनेकार्थश्च। तत्र पर्यायो हस्तकरादयः। अनेकार्थो हरिः सैन्धवादयः। अवयवशक्तिर्योगः। माधवो रमाकान्तः शौरिः शास्ता वासुदेवः। उभयप्रवृत्तिहेतुकी तृतीया। यथा, सोमः, पङ्कजः १। द्वितीयापि द्विविधा, लक्षणा गौणी च। तत्र शक्यसंबन्धो लक्षणा। सा त्रिधा, जहत्स्वार्थाऽजहत्स्वार्था, जहदजहत्स्वार्था चेति। तत्राद्या यथा गङ्गायां घोषः। अत्र प्रवाहशक्तस्य गङ्गापदस्य शक्यसंबन्धे तीरे वृत्तिः। यथा वा मञ्चाः क्रोशन्तीत्यत्र मञ्चे शक्तस्य मञ्चशब्दस्य तत्संबन्धेषु पुरुषेषु वृत्तिः। अजहत्स्वार्था च, यथा काकेभ्यो दधि रक्ष्यताम्। अत्र काकत्वेन काके शक्तस्यापि काकशब्दस्य दध्युपघातकत्वेन काकतदितरेषु वृत्तिः। यथा वा, शोणो धावतीत्यत्र शोणगुणगमनरूपस्य वाक्यार्थस्य विरुद्धत्वात् तदपरित्यागेन तद्वति तदधिष्ठानरूपे गवादौ वृत्तिः। शक्यैकदेशपरित्यागे सति शक्यैकदेशवृत्तिस्तृतीया। यथा सोऽयं देवदत्त इत्यत्र तद्देशकालवैशिष्ट्यैतद्देशकालवैशिष्ट्ययोर्युगपदन्वयानुपपत्त्या देशकालादिविशेषणत्यागेन देवदत्तपिण्डमात्रमेव लक्षणया बोध्यते। शक्यस्थलक्ष्यमाणगुणसंबन्धो गौणी। यथा सिंहो देवदत्तः। अत्र सिंहवृत्तिक्रौर्यादिगुणानां लक्षणया माणवके देवदत्ते वृत्तिः। सैव लक्षितलक्षणेत्यप्यभिधीयते२। तत्र न तावन्निर्विशेषवस्तुनि रूढिवृत्तेः संभवः। जातिगुणक्रियाद्यभावात्। नापि योगवृत्तिः संभवति। निर्विशेषस्य धातुप्रत्ययार्थत्वाभावात्। नापि लक्षणा, सबन्धशून्यत्वात्। नापि गौणी। निर्गुणत्वाऽभ्युपगमात्। तस्मात् सर्वप्रमाणशून्यत्वादनादरणीयं श्रेयोर्थिभिः। अतः

सर्वज्ञसर्वशक्तिसर्ववेदान्तवेद्यविश्वजन्मादिकारणं परं ब्रह्म श्रीपुरुषोत्तम एव, स चाऽभिन्ननिमित्तोपादानात्मकः। नचाऽभिन्ननिमित्तोपादनरूपस्य क्वाप्यऽदृष्टचरत्वात् कथं तत्सिद्धिरिति वाच्यम्। घटेश्वरसंयोगादौ जीवगतज्ञानादौ च कार्य्ये ईशजीवयोस्तथाभूतकारणत्वदर्शनान्नाऽत्यन्ताऽप्रसिद्धिः। तद्दृष्टान्तेनाऽपि तथात्वमभ्युपगम्यते। ब्रह्म, जगदभिन्ननिमित्तोपादानं भवितुमर्हति। तादृशशक्तिमत्त्वात्। जीवगतज्ञानादौ जीववत्। घटेश्वरसंयोगे ईश्वरवच्चेत्यनुमानमत्रानुसंधेयं, प्रकृतिश्चेति शास्त्रं च।

ननु कीदृशमिदं कार्य्यम्। न तावत् संघातरूपम्, आरब्धं वा शक्यते वक्तुम्। अवैदिकत्वात्। नापि परिणामः। आकाशकल्पस्य विभोर्वस्तुनः परिणामासंभवात्। तथाच प्रयोगः—ब्रह्म परिणामानर्हं भवितुमर्हति। विभुपरिमाणकत्वात्। निरवयवत्वाच्च। आकाशवत्। तस्माद् ब्रह्मविवर्तमेवेदं जगदिति चेन्न। निरवयवस्यापि विभोः परिणमनसामर्थ्ययोगात् परिणामसंभवात्। ननु सावयवस्यैव क्षीरादेः परिणामदर्शनान्न निरवयवस्येति तादवस्थ्यमेवास्य दोषस्येति चेन्न। क्षीरपरमाण्वादौ तद्व्यभिचारात्। तथाहि। न हि सावयवत्वं वस्तुपरिणामे प्रयोजकम्, अपि तु वस्तुगता तादृशी शक्तिरेव। अन्यथा जलस्यापि सावयवत्वाविशेषेण दधिभावपरिणामापत्तेर्दुर्वारत्वात्। क्षीरावयवानां निरवयवत्वाच्च। अयं भावः। द्रव्यपरिणामेऽवयविगता शक्तिः कारणम्? अवयवनिष्ठा वा? नाद्यः। द्रवद्रव्ये व्यतिरिक्तस्यावयवित्वं, त्वया नाभ्युपगमात्। द्वितीये तु क्षीरावयवाः सावयवा, निरवयवा वा इति विवेचनीयम्। न तावत् सावयवाः। अनवस्थानात्। क्षीराब्धेः कुण्डपरिमाणापत्तेश्च। अवयवानामानन्त्यात्। अतो निरवयवा एवेति अकामेन त्वया-

ऽभ्युपगन्तव्याः । एवञ्च निरवयवस्य परिणामाभावत्वनियम-भङ्गात् स्वरूपासिद्धो हेतुर्निरवयवत्वमिति । नापि विभोः परिणामाऽभावनियमः । आकाशस्यापि वाय्वात्मना परिणामो दृश्यते । आकाशाद्वायुरिति श्रुतेः । अनेन द्वितीयस्य हेतोरपि सत्प्रतिपक्षत्वं दृष्टान्तविकलत्वं चोक्तं भवति । तथाच प्रयोगः—ब्रह्म परिणामयोग्यं, विभुत्वात् । आकाशवदिति । तत् सिद्धं निरवयवस्य विभोर्ब्रह्मणः परिणामात्मकमिदं कार्य्यमिति तादृशशक्तिमत्त्वादेवेति । श्रूयते च, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेत्यादि । स्मर्य्यतेऽपि, शक्तयः सर्वभावानामाचिन्त्यज्ञानगोचराः । शतशो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः । भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णतेति ।

ननु स्यादेतन्निरवयवस्यापि विभोस्तादृक्शक्तियोगात् परिणामस्तथापि परिणामाभ्युपगमे विकारित्वमकामतोऽप्यवश्यं भावि । तच्च दूषितत्वादनिष्टम् । कृत्स्नप्रसक्तिर्निरवयवत्वशब्दव्याकोपो वेति न्यायात् । अत्रैवं विवेकः । ब्रह्मणः कार्य्यभावापत्तौ कृत्स्नस्य परिणामस्तदेकदेशस्य वा । आद्ये सर्वस्यापि परिणतत्वान्मुक्तोपसृप्याभावप्रसङ्गः, अनित्यतायोगश्च । द्वितीये तु अनित्यत्वस्य तादवस्थ्यम् । निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनमित्यादि निरवयत्वविषयवाक्यव्याकोपश्चेति । तस्मादयोग्य एव परिणामपक्ष इतिचेन्न । उदाहृतेषु आकाशादिषु निरवयवत्वविभुत्वसाम्येऽपि निर्विकारित्वदर्शनेन निर्दोषत्वात् । आकाशस्य वाय्वात्मना शब्दात्मना परिणतस्य उक्तदोषवत्त्वाऽदर्शनात् । आकाशवत् सर्वगतश्च नित्य इतिश्रुत्या तथात्वश्रवणात् । तस्मान्निरवयवस्यापि विभोर्ब्रह्मणः परिणामेऽपि तादृशशक्तियोगादेवाविकारित्वमपीति बोध्यम् । वस्तुतस्तु, आत्मकृतेः

परिणामादित्यादौ परिणामशब्दः शक्तिविक्षेपवाचकः । ब्रह्मस्वरूपे परिणामानभ्युपगमान्नोक्तदूषणगन्धस्पर्शनावकाशः । तथाचाऽप्यच्युतस्वरूपस्यैवोर्णनाभ्यादेः स्वशक्तिविक्षेपलक्षणपरिणामवत्त्वेऽपि नोक्तदोषयोगः । यथोर्णनाभिः सृजते गृह्णते च, यथा सतः पुरुषात् केशलोमानि यथा पृथिव्या औषधयः संभवन्ति तथाऽक्षरात् संभवतीह विश्वमिति श्रवणात्, तथैव परिणामेन विश्वस्य भगवान् हरिरिति स्मरणाच्च । नच शक्तिविक्षेपः परिणाम इत्यत्र किं मानमिति वाच्यम् । शास्त्रस्यैव मानत्वात् । " प्रधानं पुरुषं चैव प्रविश्यात्मेच्छया हरिः । क्षोभयामास संप्राप्ते सर्गकाले व्ययाऽव्ययावि"त्यत्र क्षोभशब्दप्रयोगः । स च विक्षेपपर्य्याय एव । किञ्च । " प्रसार्य च यथाङ्गानि कूर्मः संहरते पुनः । तद्वद् भूतानि भूतात्मा सृष्टानि ग्रसते पुनरि"ति भीष्मः कण्ठत्रेणैव पठतीति निरवद्यम् . अभिन्ननिमित्तोपादानकारणं ब्रह्मेति । तत्रोपादानत्वं नाम—चेतनाचेतनात्मकानां सूक्ष्मावस्थापन्नानां स्वस्वाभाविकशक्तीनां तत्तद्गतसद्रूपकार्य्याणां च स्थूलतया प्रकाशकत्वम् । निमित्तत्वञ्च—स्वस्वानादिकर्म्मसंस्कारवशीभूतात्यन्तसंकुचितस्मृत्यनर्हज्ञानानां चेतनानां कर्मफलभोगार्हज्ञानप्रकाशेन तत्तत्कर्मफलतत्तद्भोगसाधनैः सह संयोजयितृत्वम् । तदुभयाभिन्नत्वं तत्त्वम् । एवंभूतस्य कारणत्वस्य स्वरूपगतत्वाद्, यतो वा इमानि भूतानि जायन्त इत्यादिभिरीश्वरस्वरूपलक्षणमेवेति बोध्यम् । नच तथात्वे सत्यादिलक्षणवैयर्थ्यापत्तिरिति वाच्यम् । जगत्कारणत्वस्य कार्य्यनिरूपितत्वेन सापेक्षत्वात् सत्यादेश्च तन्निरपेक्षत्वादिति सर्वं समञ्जसमिति भावः ।

यदुक्तं ब्रह्मविवर्तमेवेदं जगदिति । तत्तुच्छम् । अश्रुतत्वेनाऽप्रामाणिकत्वात् । ननु सदेव सोम्येदमग्र आसीत्, तदेवर्तं तद्ब

सत्यमाहुस्तदेव ब्रह्म परमं कवीनामित्यादिश्रुतौ ब्रह्मणः सत्यत्वाऽवधारणाद् अन्ययोगव्यवच्छेदार्थकोऽयम् एवकार उक्तार्थे विश्वारोपितत्वे प्रमाणम् । आरोपितत्वादेवाऽसत्यत्वमितिचेन्न । असत आरोपासंभवात् । एकत्र सत एवान्यत्राऽऽरोपनियमात् । न हि स्वरूपेणाऽसतः शशशृङ्गादेः क्वचिदारोपो दृष्टः श्रुतो वा । नचारोपे तद्विषयकप्रतीतिमात्रमपेक्षितं, न सत्यत्वमपीति वाच्यम् । असतः प्रतीतेरेवाऽसंभवात् । ननु रज्जौ सर्पप्रतीतेरिव प्रपञ्चप्रतीतेरपि दोषमात्रमेव कारणमपेक्षितं, न विषयसद्भाव इतिचेन्न । दोषात्मककारणस्यापि असत्यत्वाविशेषेण तव पक्षे प्रतीतिलक्षणकार्य्योत्पत्तेरसंभवात् । कार्य्यस्य कारणसत्तापेक्षितत्वनियमात् । कुत्राप्यसतः कारणत्वाऽदर्शनाच्च । नचाऽसतोऽप्यारोपितसर्प्पस्य भयादिकार्यजनकत्वदर्शनात् कार्य्यस्य कारणसत्ताऽपेक्षितत्वनियमभङ्ग इति वाच्यम् । स्वरूपेणाऽसतः कार्य्योत्पत्त्यनुकूलशक्त्याश्रयत्वभूतकारणत्वाऽसंभवात् । भ्रमस्थलेऽपि सर्पविषयकज्ञानस्यैव भयादिहेतुत्वं, न विषयस्येति । अन्यथा कारणमात्रस्याप्यसत्यत्वाभ्युपगमे कार्य्योत्पत्तिकथाया एवानुपपन्नत्वात् । नचाऽसतोऽपि रज्जुसर्पादेर्ज्ञानकारणत्वोपपत्तिवद् भयकारणत्वोपपत्तिरपि किं नाङ्गीक्रियते इति वाच्यम् । दोषस्यैवासद्विषयकज्ञानकारणत्वेन भ्रमस्थलेऽपि विषयस्य ज्ञानकारणत्वाभावात् । नन्वतीतानागतदृष्टिविषयकज्ञानोत्पत्तिस्थले सत एव दृष्टिरूपविषयस्य स्वज्ञानजनकत्वदर्शनात् तथाऽत्रापि संभाव्यमिति चेन्न । अतीतदृष्टिविषयकज्ञानोत्पत्तौ तत्कार्यस्येदानींतनस्य सत एवान्नादेरनागतदृष्टिविषयकज्ञानोत्पत्तौ च तज्ज्ञापकरूपकारणस्य सत एव ज्योतिःशास्त्रस्य विद्यमानत्वान्नाऽसतो विषयस्य कुत्रापि ज्ञानादिकारण-

त्वमिति। तद् सिद्धम्—असत आरोपासंभवादप्रमाणकत्वं विवर्तस्येति । नच वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेरेवात्र प्रमाणत्वात् कथमप्रमाणत्वमितिचेन्न । विकारो नामधेयमित्यत्र विकारशब्दपाठाद् विकारत्वं च परिणमिते एव द्रव्ये दृष्टचरम् । अन्यथा भ्रान्तिर्नामधेयमित्युक्तं स्यात् ।

किञ्च, विवर्तदृष्टान्तानां रज्जुसर्पशुक्तिरजतादीनां भवदभिमतानां क्वाप्यदर्शनादापि प्रतिज्ञाबाधाच्च । तथाहि । छान्दोग्ये आम्नायते—उत तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति, कथं नु भगवः स आदेशो भवतीति । यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद् यथैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यादित्यादिना कारणविज्ञानेन कार्य्यविज्ञानं प्रतिपादितम् । तत्र यथा मृत्पिण्डस्य घटादिविकारोपादानस्य विज्ञानेन सर्वं मृद्विकारजातं विज्ञायते, न तथा रज्जुविज्ञानेन सर्प्पमात्रं विज्ञायते । नापि शुक्तिविज्ञानेन रजतजातं चेति सर्वानुभवविरोधात् प्रतिज्ञाहानिरित्यर्थः ।

तस्मात् कार्य्यत्वात् सदेव जगदिति वैदिकानां सिद्धान्तः। तथाच श्रुतिः—सदेव सोम्येदमग्र आसीत् । गौरनाद्यन्तवती जनित्री भूतभाविनी । सिताऽसिता च रक्ता च सर्वकामदुघा विभोः । ऊर्द्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः । तत् सदासीत्, प्राणा वै सत्यं, तेषामेष सत्यम्, असत्यमाहुर्ज्जगदेतदज्ञाः शक्तिं हरेर्न विदुर्ये परां हि । यः सत्यरूपं जगदेतदीदृक् सृष्ट्वा त्वभूत् सत्यकर्मा महात्मा । अथैनमाहुः सत्यकर्मेति सत्यं ह्येवेदं विश्वमसौ सृजते । अथैनमाहुर्नित्यकर्मेति नित्यं ह्येवासौ कुरुते । अष्टरूपामजां ध्रुवामित्यादिः। सत्त्वाच्चावरस्य । असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषात् । युक्तेः शब्दान्तराच्चेत्यादिन्या-

यः । ऊर्द्धमूलमधःशाखमश्वत्थं प्राहुरव्ययम् । असत्यमप्रतिष्ठं च जगदाहुरनीश्वरमित्यादि भगवद्गीतं च ।

ननु, असद्वा इदमग्र आसीदित्यादिनाऽसत्त्वस्यापि श्रुतिसिद्धत्वात् कथमपह्नव इतिचेन्न । तस्य विकारित्वलक्षणासत्त्वविषयत्वात् । तथाचाह भगवान् पराशरः—तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पवदिति वैष्णवे । किञ्च कार्य्यं सदेव स्वकारणादुद्भवति । अन्यथा तिलेभ्य इव सिकताभ्योऽपि तैलमुद्भवेदिति पूर्वमेवोक्तम् । तस्माद्विकारित्वावच्छिन्नसत्ताकमिदं जगत् कारणावस्थापन्नम् अनुद्भूतम् अनभिव्यक्तनामरूपकम् असदादिशब्दैरभिधीयते । तदेवाभिव्यक्तनामरूपकम् आविर्भूतं सदादिशब्दवाच्यमिति सर्वश्रुत्यविरोधः । वैष्णवे ध्रुवः—न्यग्रोधः सुमहानल्पे यथा बीजे व्यवस्थितः । संयमे विश्वमखिलं बीजभूते तथा त्वयि । बीजादङ्कुरसंभूतो न्यग्रोधः सुसमुत्थितः । विस्तारं च यथा याति त्वत्तः सृष्टौ तथा जगदिति । श्रीसूत्रकारेण निर्णीतः—पटवच्चेति सूत्रेण । यथा संकुचितः पटः पटत्वेनागृह्यमाणोऽपि पट एव, प्रसारणे तु स्पष्टतया गृह्यत एव, तथा तिरोभावावस्थायामनभिव्यक्तमपि कार्य्यं नामरूपाभ्यामगृह्यमाणमपि सदेव । आविर्भावावस्थायां तु प्रत्यक्षागमाभ्यां सत्त्वेन स्पष्टं गृह्यते इति सूत्रार्थः ।

ननु, जगन्मिथ्या । दृश्यत्वात् । शुक्तिरजतवद्—इत्यनुमानं जगदसत्त्वे प्रमाणमितिचेन्न । दृश्यत्वस्य हेतोः साध्याभाववति ब्रह्मणि अतिव्याप्त्या साधारणानैकान्तिकत्वेन हेत्वाभासकत्वात् । एवं दृश्यत्वाधिकरणसाम्यात् तेनैव हेतुना ब्रह्मणोऽपि मिथ्यात्वं किमिति नाभ्युपगम्यते भवद्भिर्मनीषिभिः । ब्रह्म

मिथ्या, दृश्यत्वात्, प्रपञ्चवदिति वक्तुं शक्यत्वात् । श्रूयते हि ब्रह्मणो दृश्यत्वम्—आत्मा वा अरे द्रष्टव्यः, यदा पश्यस्यन्यमीशम्,आत्मन्यरे दृष्टे, दृश्यते त्वग्र्यया बुद्ध्या, सदा पश्यन्ति सूरयः, यत् तत् पश्यसि तद्वद, तमसः पारं दर्शयति, तस्मिन् दृष्टे परावरे इत्यादिभिः ।

ननु, न चक्षुषा गृह्यते नापि वाचा, न सदृशे तिष्ठति रूपमस्य, न चक्षुषा पश्यति कश्चनैनं, तत्र यः परमात्मा तु स नित्यो निर्गुणः स्मृतः, यं न देवा न मुनयो न चाहं न च शंकरः, जानन्ति परमेशस्य तद्विष्णोः परमं पदमित्यादिश्रुतिस्मृतिभ्यो निर्गुणस्य ब्रह्मणः सर्वप्रमाणाविषयतया स्वप्रकाशत्वाभिधानाच्च तवोदाहृतवाक्यविषयस्य ब्रह्मणो मायावच्छिन्नत्वावगमादवरत्वमभ्युपगम्यते । तथाभूतस्य मिथ्यात्वमिष्टापत्तमेवेतिचेन्न । दर्शनविषयस्यैव परत्वाभिधानात् । स एवास्माज्जीवाघनात् परात् परं पुरुषमीक्षते, ततस्तु तं पश्यति निष्कलं ध्यायमानः, प्रधानपुरुषाव्यक्तकालानां परमं हि यत्, पश्यन्ति सूरयो नित्यं तद्विष्णोः परमं पदमित्यादिश्रुतिस्मृतिभ्य उक्तश्रुतीनां दर्शनानर्हचक्षुरादिनिषेधविषयकत्वान्नैराकाङ्क्ष्यं व्याख्येयम् । तथाच गीतं स्वयमेव भगवता—न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा । दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरमिति । तस्मादसद्धेतुकमिदमनुमानं न प्रमाणपदवीमारोढुमर्हतीत्युक्तसिद्धान्तस्यैव वरीयस्त्वं मुमुक्षुभिर्ध्येयम् अलं विस्तरेण॥४॥

एवमखिलाविद्यादिदोषगन्धस्पर्शानर्हस्यानन्ताचिन्त्यस्वाभाविककल्याणगुणसागरस्य परब्रह्मभूतस्य श्रीपुरुषोत्तमस्य भगवतः सर्वजगज्जन्मादिकारणत्वं सर्वशास्त्रवेद्यत्वं सर्वोपास्यत्वं मोक्षप्रदातृत्वं मुक्तोपसृप्यत्वं प्रतिपाद्य, इदानीं, श्रीश्च ते

लक्ष्मीश्च ते पत्न्यावहोरात्रे पार्श्वे इत्यादिश्रुत्युक्तलक्ष्म्यादिवैशिष्ट्यं विधत्ते—

अङ्गे तु वामे वृषभानुजां मुदा
विराजमानामनुरूपसौभगाम् ॥
सखीसहस्रैः परिषेवितां सदा
स्मरेम देवीं सकलेष्टकामदाम् ॥ ५ ॥

अङ्ग इत्यादिना । वयमुक्तलक्षणस्याघटघटनापटुतराचिन्त्यानन्तविचित्रशक्तिमतो भगवतः श्रीकृष्णस्य वामाऽङ्गेऽनुरूपसौभगां लक्ष्मीरुक्मिण्याख्यां सदा स्मरेम इत्यन्वयः । अनुरूपत्वं नाम भगवद्विग्रहगुणाद्युपमेयविग्रहगुणादिमत्त्वम् । अनुरूपा चासौ सौभगा च तामिति विग्रहः । तथाच स्मर्य्यते श्रीपराशरेण—देवत्वे देवदेहेयं मानुषत्वे च मानुषी । विष्णोर्देहानुरूपां वै करोत्येषाऽऽत्मनस्तनुमिति । राघवत्वे भवेत् सीता रुक्मिणी कृष्णजन्मनि । अन्येषु चावतारेषु विष्णोरेषाऽनपायिनीति । कीदृशीमित्यपेक्षायां विशिनष्टि—देवीमिति । देवस्य गायत्रीमन्त्रप्रतिपाद्यस्य सर्वशास्त्रार्थभूतस्य श्रीवासुदेवस्य पत्नी देवी तां, श्रियं देवीमुपह्वये इत्यादिश्रुतेः । अनेन योगवृत्त्या तद्गुणा उच्यन्ते । तथाहि । दीव्यति क्रीडति अनेकावतारैरिति देवी । विष्णोर्देहानुरूपां वै विधत्ते ह्यात्मनस्तनुम् इति । १ । दीव्यति विजिगीषते देवादीन् शीलादिगुणापहारेणेति वा । "सद्यो वैगुण्यमायान्ति शीलाद्याः सकला गुणाः । पराङ्मुखी जगद्धात्री यस्य त्वं विष्णुवल्लभे" इति ।२। दीव्यति व्यवहरति तत्तदात्मना तत्तत्प्रकारेण चेति वा देवी । "अर्थो विष्णुरियं वाणी नीतिरेषा नयो हरिः । बोधो विष्णुरियं बुद्धिर्धर्मोऽसौ सत्क्रिया त्वियम्" इति । ३ । द्योतते स्वरूपेण गुणैश्चेति वा देवी । ईश्वरीं सर्व-

भूतानां, यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदारामिति श्रुतेः । ४ । स्तूयते देवैरिति वा । "नमस्ये सर्वभूतानां जननी-मब्जसंभवाम् । श्रियमुन्निद्रपद्माक्षीं विष्णोर्वक्षस्थलाश्रिताम्" इत्यारभ्य, न ते वर्णयितुं शक्ता गुणान् जिह्वापि वेधसः । प्रसीद देवि पद्माक्षि मास्माँस्त्याक्षीः कदाचनेत्यन्तेन स्तोत्रेण अन्यैश्चेति । ५ । सर्वत्र गच्छतीति वा । "नित्यैव सा जगन्माता विष्णोः श्रीरनपायिनी । यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तमाः । त्वयैव विष्णुना चाऽम्ब जगद्व्याप्तं चराचरम्" इति ।६। मोदते वेति । आनन्दमूर्तित्वादानन्दमूर्त्याश्रितत्वाच्च । सूर्यां हिरण्मयीम्, ईश्वरीं सर्वभूतानामिति श्रुतेः ७ । पुनः कीदृशीं—सखीसहस्रैः परिषेवितां सदेति । सखीनां स्वपरिचारिकाणां सहस्रैरपरिमितैः सदा नित्यं सेविताम् । किञ्च, सेवनप्रयोजनं दर्शयन् विशिनष्टि—सकलेष्टकामदामिति । सर्वेभ्यश्चतुर्विधेभ्यो भक्तेभ्यः पुरुषार्थचतुष्टयं तत्तदिच्छानुसारेण ददातीति तथा ताम् । "यज्ञविद्या महाविद्या गुह्यविद्या च शोभने । आत्मविद्या च देवी त्वं विमुक्तिफलदायिनी" इति स्मरणात् ।

एवं लक्ष्म्या वैशिष्ट्यं विधाय व्रजस्त्रीशब्दवाच्याया, गोपीप्रधानभूतायाः श्रीवृषभानुजाया नित्ययोगं विधत्ते—वृषभानुजामिति । चकारोऽत्राध्याहर्तव्यः समुच्चयार्थम् । तथाच वृषभानुजां च स्मरेम इत्यन्वयः । ततः स्वरूपगुणादिद्योतनाय तां विशिनष्टि—वामाङ्के मुदा विराजमानामिति । वामाङ्क इत्यस्य पूर्वं, श्रीभगवत इति शब्दोऽध्याहर्तव्यः । अङ्गस्याङ्गिसापेक्षत्वात्, श्रीभगवतो वामाऽङ्के विराजमानाम् । वामाङ्कशब्दप्रयोगादस्या लक्ष्मीवत् पत्नीत्वम् अनपायित्वं च दर्शितम् । मुदा

निरतिशयप्रेमानन्दमूर्त्ता । एतेनास्याः प्रेमाधिष्ठातृत्वं सूच्यते विराजमानाम् । विशेषेण स्वरूपेण विग्रहेण प्रेमकारुण्यादिगुणैश्च राजते दीप्यते इति तथा ताम् । तथाचाम्नायते ऋक्परिशिष्टश्रुतौ—राधया माधवो देवो माधवेन च राधिका । विराजत इत्यादि । अनयैव श्रुत्या अन्योऽन्यसाहित्यविधानपरया नित्यसंबन्धः प्रेमोत्कर्षश्चोक्त इति भावः । यद्यप्यनयोर्मध्ये ऐश्वर्याधिष्ठातृत्वेन लक्ष्म्याः प्राधान्यात् तस्या एव पूर्वं प्रयोग उचितस्तथापि ब्रजस्त्रियः प्रेमाधिष्ठातृतया तच्चरणस्मरणस्य प्रेमदातृत्वात् पूर्वप्रयोगः । "कृष्णात्मिका जगत्कर्त्री मूलप्रकृतिरुक्मिणी । ब्रजस्त्रीजनसंभूतश्रुतिभ्यो ब्रह्मसंगत" इति मन्त्रात् । जनेषु संभूताः प्रसिद्धा याः श्रुतयस्ताभ्यः प्रमाणभूताभ्य आभ्यां रुक्मिणीब्रजस्त्रीभ्यां श्रीगोपालाख्यस्य ब्रह्मणः संगतः नित्यसंबन्ध इति मन्त्रार्थः । उपलक्षणार्थोऽयं सत्यभामायाः । तथाच रुक्मिणीसत्यभामाब्रजस्त्रीविशिष्टः श्रीभगवान् पुरुषोत्तमो वासुदेवः सांप्रदायिभिर्वैष्णवैः सदोपासनीयः । द्विभुजश्चतुर्भुजश्च स्वमीसनुरूपेणोभयविधत्वात् तस्य नात्र तारतम्यभावः । ध्यातृभावनाया एवात्र नियामकत्वात् । तथाच, मथुरायां विशेषेण मां ध्यायन् मोक्षमश्नुते इत्यारभ्य, श्रीवत्सलाञ्छनं हृत्स्थकौस्तुभप्रभया युतम् । चतुर्भुजं शंखचक्रशार्ङ्गपद्मगदान्वितम् । हिरण्मयं सौम्यतनुं स्वभक्तायाऽभयप्रदम् । ध्यायेन्मनसि मां नित्यं वेणुशृङ्गधरं तु वेति । सत्पुण्डरीकनयनं मेघाभं वैद्युताऽम्बरम् । द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरम् । गोपीगोपगवावीतं सुरद्रुमलताश्रयम् । दिव्यालङ्करणोपेतं रत्नपङ्कजमध्यगम् । कालिन्दीजलकल्लोलसङ्गिमारुतसेवितम् । चिन्तयँश्चेतसा कृष्णं मुक्तो भवति संसृतेरित्युभयविधस्यापि

ध्यानस्य मोक्षहेतुत्वश्रवणादुभयस्य तुल्यफलत्वाद् ध्येयत्वा-ऽविशेष इति सांप्रदायराद्धान्तः ॥ ८ ॥

इति श्रीभगवत्पुरुषोत्तमाचार्य्यविरचितायां वेदान्तरत्न-मञ्जूषायां सिद्धान्तरत्नविवृत्तौ पदार्थसंग्रहाधारो नाम प्रथमा कोष्ठिका ॥ १ ॥

१०

## अथ वेदान्तरत्नमञ्जूषायां द्वितीयः कोष्ठः ।

उक्तसिद्धान्ते विधिमाह—

> उपासनीयं नितरां जनैः सदा
> प्रहाणयेऽज्ञानतमोऽनुवृत्तेः ॥
> सनन्दनाद्यैर्मुनिभिस्तथोक्तं
> श्रीनारदाऽखिलतत्त्वसाक्षिणे ॥ ६ ॥

उपासनीयमिति । मुमुक्षुभिर्जनैरुक्तलक्षणं परं ब्रह्म सदोपासनीयम् । विध्यर्थकतव्यप्रत्ययस्थानेऽनीयर्प्रत्ययः । सोऽन्वेष्टव्यः, स विजिज्ञासितव्यः, श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, भूमा त्वेव विजिज्ञासितव्यः, आत्मानमेव लोकमुपासीत, तस्मात् कृष्ण एव परो देवस्तं ध्यायेत् तं रसयेत् तं यजेत् तं भजेदित्यादिविधिश्रवणात् । सदेति कालव्यवच्छेदं निराकरोति । "आलोड्य सर्वशास्त्राणि विचार्य्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा । स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् । सर्वे विधिनिषेधाः स्युरेतयोरेव किंकरा" इत्यादिस्मरणात् । दिवसे दिवसे सकृत्सकृत् कृतस्याऽवच्छेदकः कालः सदाशब्दवाच्यस्तद्वारणायाह—नितरामिति । गङ्गादिप्रवाहवत् क्षणाद्यपरिच्छेदेन । "यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते । सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया" इत्यादिवचनात् । एतेन स्मृतिसन्तानस्याऽपरिच्छिन्नत्वं विधीयते । तथाच श्रुतिः—आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिरिति । श्रीभगवदुपासनस्याऽधिकारिसाधारण्यसूचनाय सामान्यजनशब्दप्रयोगः, श्रीभगवतः सर्वाधिकार्य्यऽनुरूपोपासनविषयकत्वसाम्याद्, वैदिकोपासने तु त्रैवर्णिक एवाधिकारीति । पौराणिके चतुर्थोऽपीति विवेकः ।

उपासनप्रयोजनमाह—प्रहाणयेऽज्ञानतमोऽनुवृत्तेरिति। अज्ञानतमोऽनुवृत्तेः प्रहाणये इति योजना । अनादिकर्माख्याऽज्ञानमेव तमः, स्वरूपादितिरोधानस्वभावकत्वात् । तस्यानुवृत्तिः सम्बन्धः श्रीपुरुषोत्तमप्राप्तिप्रतिबन्धकस्तस्य प्रहाणये ध्वंसायेति यावत् । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इति श्रवणात् । "अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् । तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" इति भगवद्वचनाच्च ॥

ननु "यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत" इत्यादिश्रुतेरुपासनाविषयस्य ब्रह्मत्वनिषेधात् कथमित्रोपासनाविधानं, कथन्तरां च परब्रह्मण उपास्यत्वमित्याशङ्कानिरासार्थं स्वसंप्रदायसंततिं प्रमाणयन् संप्रदायस्यानादित्वं वैदिकत्वं चाह भगवनाचार्य्यः—सनन्दनाद्यैर्मुनिभिस्तथोक्तमिति । सनन्दनादीनां भगवदवतारत्वात् तदुपदेशस्य प्रमाणान्तरनैरपेक्ष्यं सूचयति सनन्दनशब्दप्रयोगादेवेति भावः । मुनिभिरित्यनेन च तेषु अप्रमाणकारणानां प्रमादादीनामयोगाद् आप्ततमत्वमुक्तम् । उपदेशवैभवदानस्य संप्रदानोत्कर्षादपि अन्यप्रमाणनैरपेक्ष्यमित्याह—श्रीनारदायेति । अस्मद्गुरवे इत्यर्थः । तेनैव मह्यं यदुपदिष्टं तदेवाऽत्रोक्तं मयाऽपीति शेषः । श्रीगुरुं विशिनष्टि—अखिलतत्त्वसाक्षिणे इति । सर्वतत्त्वविषयकप्रत्यक्षानुभवाश्रयभूताय सर्वज्ञायेति । इदं महोपनिषदं चतुर्वेदसमान्वितमिति वचनात् सर्ववेदार्थरूपश्रीपञ्चरात्रप्रवर्तकायेति भावः । ननु सोऽहं भगवः शोचामि तं मां शोकस्य पारं दर्शयत्वित्यादेस्तस्यैव वचनेन नारद-

स्य शोकाश्रयत्वश्रवणात् कथं सर्वज्ञत्वमिति चेन्न । उपदेशोत्तरकालीनत्वादाचार्य्याणां वाक्यस्य । श्रीसनन्दनादिचरणोपसत्तेः पूर्वं शोकवत्त्वेऽपि श्रीभगवद्गुरूपदेशेन सकारणशोकनिवृत्त्या सर्वज्ञतासिद्धेरित्यर्थः । तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार इति वाक्यशेषश्रवणात् । यद्वा श्रीनारदस्य भगवत सार्वज्ञयोगेऽपि सर्वलोकोपकारार्थकावतारत्वाद् गुरूपसत्तिरूपाधिकारं ग्राहयितुं श्रीपुरुषोत्तमलीलाऽनुकारणंवदज्ञत्वाऽनुकरणं बोध्यम्। तथाचोभयवाक्यस्य नैराकाङ्क्ष्यादविरोध इत्यर्थः ॥

अयं भावः । नेदं यदिदमुपासत इत्यनेन ब्रह्मण उपास्यता निषिद्धेतिसत्यं, तथापि परिच्छिन्नोपासनविषयक एवायं निषेधो, न तु विश्वात्मपरमात्मोपासनविषयक इति निश्चीयते । तथाचात्रैवादौ नामाद्यनेकपरिच्छिन्नोपासनं विधायान्ते भूमाविषयकोपासनस्यैवोपदेशविधानश्रवणात् । अन्यथा तदनुपपत्तेः । तथा ह्याम्नायते छान्दोग्ये—अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तं होवाच यद् वेत्थ तेन मोपसीद ततस्त ऊर्द्ध्वं वक्ष्यामीति, स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमथर्वाणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पविद्यां देवयजनविद्यामेतद्भगवोऽध्येमि सोऽहं भगवो मन्त्रविदेवास्मि नाऽऽत्मविच्छ्रुतं ह्येव भगवद्दृशेभ्यस्तरति शोकमात्मविदिति, सोऽहं भगवः शोचामि तं मां भगवाञ्छोकस्य पारं तारयत्विति, तं होवाच यद्वै किञ्चिदध्यगीष्ठा नामैवैतदित्युक्त्वा, नाम वा ऋग्वेद इत्यादिना नाम्न एव सर्वविद्यारूपतां विधाय, नामोपास्स्वेति नामोपासनमु-

पदिश्य, यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवतीति फलं चोपदिष्टम् । एवमेव वाङ्मनःसंकल्पादिविशेषकोपासनानामुत्तरोत्तरभूयस्त्वं तत्फलानामपि तथात्वं चोक्त्वा अवसाने भूमोपासनमुपदिष्टवान्, यो वै भूमा तदेव सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञासे इति यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा, अथ यत्रान्यत् पश्यति अन्यच्छृणोति अन्यद् विजानाति तदल्पं यो वै भूमा तदऽमृतमथ यदल्प तन्मर्त्यं, स भगवः कस्मिन् प्रतिष्ठते इति ? स्वे महिम्नि यदि वा न महिम्नीति । गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्य्यं क्षेत्राण्यायतनानि इति नाहमेवं ब्रवीमीति होवाचाऽन्यो ह्यन्यस्मिन् प्रतिष्ठित इति स एवाधस्तात् स एव उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदं सर्वमिति । स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुनः आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति । अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषां सर्वेषु लोकेषु अकामचारो भवति तस्य ह वा एतस्यैवं पश्यत इत्यारभ्य आत्मन एवेदं सर्वमिति, न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतां, सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः । स एकधा भवति त्रिधा भवति पंचधा सप्तधा नवधा चैव पुनश्चैकादशधा स्मृतः । शतं च दश चैकश्च सहस्राणि च विंशतिः । आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार इति । अस्यार्थः— श्रीनारदः श्री-

सनत्कुमारमुपससाद उपसत्तिविधिपूर्वकं शरणं जगामेत्यर्थः । हे भगवः,शोकतरणोपायम् अधीहि शिक्षयेति प्रार्थयामासेतिशेषः तमुपसन्नं नारदं श्रीसनत्कुमार उवाच,यद्वेत्थेत्यादि। त्वयाऽधीत यावज्ज्ञानं संपादितं तावत्सर्वमनूद्यतां, तत ऊर्द्ध्वं यत् त्वया नाधीतं स्यात् तद् वक्ष्यामीति । एवं श्रीगुरुणा विद्यानुवादे संप्रेरितः स नारद उवाच—ऋग्वेदम् इत्यादि । तत्रैतद्भगवोऽध्येमीत्यन्तः स्पष्टार्थको ग्रन्थः ।विद्यानुवादरूपत्वात्।ततश्च सोऽहमित्यादिः प्रार्थनेति विभागः। सोऽहं भगवः शोचामि एतत् पूर्वोक्तं सर्वमध्येमि अधीतवानस्मि तथापि शोको मां न मुञ्चतीत्यर्थः। ननु ईदृग्विद्यावतोऽपि शोकानिवृत्तौ किं कारणमित्यत आह, मन्त्रविदेवास्मीति । अन्ययोगव्यवच्छेदार्थकावधारणं स्वयमेव व्याकुर्वञ्छोककारणं स्वयमेव स्फुटयति–श्रुतमिति । भगवद्दृशेभ्यो महद्भ्यो मयैतच्छ्रुतं, तरति शोकमिति । आत्मवित् = चेतनाऽचेतनजगदात्मभूतपरब्रह्मस्वरूपगुणाऽऽदिविषयकप्रत्यक्षज्ञानाश्रयः पुमान् सकारणं शोकं तरतीति । यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं, तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति चेत्यादिश्रुतिस्मृतिभ्यस्तथाभूतज्ञानाभावः शोककारणमित्याह—नात्मविदस्मीति । सर्वविद्यासु सतीष्वपि आत्मज्ञानशून्यत्वाच्छोचामीति भावः । एवं प्रार्थितः करुणाब्धिः । तं होवाच यद्वै किञ्चिदध्यगीष्ठा नामैवैतन्नामोपास्स्वेत्यादिना वागाद्यल्पफलकपरिच्छिन्नोपासनमुपदिश्य पूर्णं पूर्णफलकं भूमोपासनमुपदिशति भगवान् सनत्कुमारः–यो वै भूमेति । एतेन सुखदुःखकारणयोर्भूमाल्पयोरुद्देश उक्तस्तयोर्भूमैव विधेय इत्युपदिशति—

भूमा त्वेव विजिज्ञासितव्य इति । तदेव सूत्रितं भगवताबादरायणेन, अथातो ब्रह्मजिसेति । तत्र हेतुः—भूमैव सुखमिति । अत्र भूमशब्दो ब्रह्मपर्य्यायः सुखशब्दश्चानन्दपर्यायः । विज्ञानमानन्दं ब्रह्म, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते इत्यादिलक्षणवाक्यात् । एवमनुशिष्टो नारदस्तमेवोद्दिष्टं पृच्छति—भूमानं भगवो विजिज्ञासे इति । एवं पृष्टो भगवान् सनत्कुमारः पूर्वोद्दिष्टयोर्भूमाल्पयोर्लक्षणमाह—यत्र नान्यदिति । यत्र यस्यां भूमजिज्ञासायां पूर्वोक्तनामद्युपासनेष्विवान्यदवच्छेदकं नामादिकं न पश्यति न शृणोति न विजानाति स भूमेति देशकालवस्तुपरिच्छेदशून्यः सर्वसमानाधिकरणार्हो भगवान् भूमशब्दाभिधेय इत्यर्थः । भूमा संप्रसादादध्युपदेशादिति सूत्राद् यत्र येषु पूर्वोक्तेषु नामवागाद्युपासनेषु अन्यदवच्छेदकं वागादिरूपं पश्यति शृणोति विजानाति वा तदल्पं परिच्छिन्नमन्तवच्चेत्यर्थः । अपरिच्छिन्नत्वादेव भूम्नः अमृतत्वं, कालादिपरिच्छिन्नत्वादेवाल्पस्य मर्त्यत्वमित्याह—यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यमिति । यदि पूर्ववत्तस्योपाधिरूपमवच्छेदकं नामवागादिकं नास्ति तर्हि स कुत्र आस्ते इति पृच्छति— स भगवः कस्मिन् प्रतिष्ठित इति । तत्रोत्तरमाह— स्वमहिम्नीति । तर्हि परिच्छेदो दुर्वार इत्याशङ्क्य यदि वा न स्वमहिम्नीति । स्वमहिम्नो ब्रह्मात्मकत्वेन स्वाभिन्नसत्तात्मकत्वात् । तदेव विवृणोति— गोअश्वमित्यादि । इह लोके गवादि महिमेत्याचक्षते इति । यथा क्षेत्रज्ञानां गवादयो महिमानस्तेषां तदन्यत्वेन तदन्यत्रावस्थाननियमाद् अश्वे देवदत्तो हस्तिनि यज्ञदत्तः क्षेत्रे आयतने वा तिष्ठतीति प्रत्ययो जायते, नात्र तथा नियमोऽपि त्वात्माधारत्वमेवेत्याह— अन्यो ह्यन्यस्मिन् प्रतिष्ठते यथा नाहमेवं ब्रवीमीति । कथमुच्यते तर्हि भवद्भिरित्य-

पेक्षायां तस्य सर्वान्तरात्मत्वं विधास्यन् सर्वत्र व्याप्त्या सर्वस्य तदविनाभावनियममाह— स एवाधस्तादित्यादि । एवं तस्य विश्वान्तरात्मत्वं विश्वव्याप्तियोगं चोक्त्वा पूर्णत्वात् पूर्णफलकत्वमाह—स वा एष एवं पश्यन्नेवं मन्वान इत्यादिना । आत्मनि ब्रह्मण्येव रतिर्यस्य, नाहम्ममास्पदयोः, शब्दादिपञ्चेन्द्रियविषयेषु वस्त्रालङ्कारादिषु वेति । तथैव आत्मना विष्णुनैव सह क्रीडा यस्य, न लौकिकैः क्रीडोपकरणैरत एवात्मा भगवानेव मिथुनं यस्य, न भार्यादि । ततश्चात्मना तेनैवानन्दो यस्य, आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति वाक्यान्तरात् न बाह्यविषयैस्तत्साधनैर्वेति । तथा यक्ष्यन् क्रीडन् रममाणः सह ब्रह्मणा विपश्चितेति वाक्यान्तरात् स उक्तलक्षणः पुमान् स्वराडिति स्वेनैव भगवता विश्वान्तरात्मना राजते दीप्यते, नेन्द्रियादिभिः सूर्य्यादिभिर्वा प्रकाशकारणैरिति तथा सार्वज्ञादिविकासात् । तच्चानन्तरमेव प्रतिपादयिष्यते, सर्वं ह पश्यति इत्यादिना । अथोक्तोपासनदार्ढ्यार्थं परिच्छिन्नोपास्यविषयकपरिच्छिन्नफलकान्यदेवाद्युपासनपरान् मूढान् निन्दति भगवती श्रुतिः— अथ येऽन्यथाऽतो विदुरिति । अथेति पक्षान्तरे । ये मूढा, अत उपदिष्टसिद्धान्ताद् विपर्य्ययं देवान्तरम् उपास्यत्वेन निश्चितवन्तः । कथमिव जानन्ति ते इत्यपेक्षायां तेषां ज्ञानस्याऽनुकरणमाह— अन्यराजान इति । अन्ये ब्रह्मरुद्रेन्द्रादयोऽपि राजान इति मोक्षदातारः स्वतन्त्रा मोक्षार्थिनोपासितव्या इति ते क्षय्यलोकाः स्वर्गपशुपुत्रादयो जन्मादिलक्षणसंसरणहेतवो भवन्ति । तेषां क्षेत्रज्ञत्वाविशेषेण मोक्षदातृत्वायोगादस्वातन्त्र्याच्च मोक्षदानानर्हत्वं शिवोपदिष्टं, स्वानुभूतं चाह घण्टाकर्णो हरिवंशे कैलाशयात्रायाम्—अहं कैलाशनिलयमासाद्य वृषभ-

ध्वजम्। आराध्य तं महादेवमस्तुमं सततं शिवम्। ततः प्रसन्नो मामाह वृणीष्वेति वरं हरः। ततो मुक्तिर्मया तत्र प्रार्थिता देवसन्निधौ। मुक्तिं प्रार्थयमानं मां पुनराह त्रिलोचनः। मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः। तस्माद् गत्वा च बदरीं तत्राराध्य जनार्दनम्। मुक्तिं प्राप्नुहि गोविन्दान्नरनारायणाऽऽश्रमे इत्यादि। भारते पारतन्त्र्यमपि तेषां स्फुटमेव— युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः। पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुम इति। महादेवः सर्वयज्ञे महात्मा हुत्वात्मानं देवदेवो बभूव। विश्वाँल्लोकान् व्याप्य विष्टभ्य कीर्त्या विराजते द्युतिमान् कृत्तिवासा इति तत्रैव। योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरिति वाक्यान्तराद्। यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति। तस्य तस्याऽचलां श्रद्धां तामेव विदधाम्यहम्। स तया श्रद्धया युक्तस्तस्याराधनमीहते। लभते च ततः कामान् मयैव विहितान् हि तान्। अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसामिति भगवद्वचनाच्च। तस्मात्तुच्छफलकत्वात् तुच्छोपासनं त्याज्यं मुमुक्षुभिरिति भावः। तच्चोपरिष्टाद् व्याख्यास्यामः। एतेनैव पूर्वोक्तानामपि नामवागाद्युपासनानां तुच्छत्वमुक्तं भवति। किञ्च तेषामत्रैवाऽन्तर्भावो, वृक्षस्य मूलनिषेचने स्कन्धशाखापत्रपुष्पादिनिषेचनवद् भगवतो विश्वरूपत्वेन सर्वमूलत्वादित्याह— तस्य ह वा एतस्यैवं पश्यत इत्यारभ्य, आत्मन एवेदं सर्वमित्यन्तेन। आत्मनो भगवत एव तस्य पूर्वोक्तलक्षणस्याधिकारिणः पूर्वोपदिष्टानां प्राणाद्युपासानानां फलसम्पत्तिर्जायते इति निर्गलितः सर्ववाक्यार्थः। उक्तोपासनानुवादः स्पष्टार्थकः। किञ्चास्याऽवान्तरफलसम्पत्तिरपि स्वतोऽनायासेनैव जायते, पाकाद्यर्थं ज्वालितादग्नेः

काष्ठदाहवदित्याह—न पश्य इत्यादि। पश्यो भूम्नः स्वरूपगुणादिविषयकप्रत्यक्षानुभवाश्रयो मृत्युं न पश्यति, प्रमादं न गच्छतीति। प्रमादं वै मृत्युमहं ब्रवीमीति वचनात्। न रोगम् आध्यात्मिकादितापं, नोत दुःखतां कामक्रोधादिहेतुकेन्द्रियताडनरूपाम्। "त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः। कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेद्"इति भगवद्वचनात्। ननु यत्र नान्यत् पश्यतीत्यादिना सामान्यपदप्रयोगाद् द्वितीयवस्तुविषयकदर्शनमात्रं निषिद्ध्यते। कथमन्यथा व्याख्यातमित्याशङ्कां निरस्यँस्तस्य सार्वज्ञ्ययोगं समवाप्तकामत्वं चाह— सर्वं ह पश्यः पश्यति इति। सर्वदेशकालवस्तुविषयकज्ञानवान् भवति। सर्वशः सर्वप्रकारेण सर्वमाप्नोतीति आप्तकामो भवतीति यावत्। तस्य शक्तियोगमाह— स एकधेत्यादिना। भगवदिच्छानुरूपसंकल्पमात्रेणैकधा सहस्रधा भवनशीलो भवतीति समुदायार्थः तत्र साधनपरम्परामाह— आहारशुद्धाविति। एतद्वाक्यमग्रे साधननिर्णये व्याख्यास्यमस्तस्य तत्रोपयोगादत्रोपरम्यते। अथोपसंहरति— तस्मा इति। तस्मै उपदिष्टार्थग्रहणचतुराय, तत्र हेतुः— मृदितकषायाय, जन्मत एव शुद्धत्वात्। स्पष्टार्थकोऽवशिष्टो ग्रन्थ इति संक्षेपार्थः। किञ्चारोप्यस्यैव निषेधविषयत्वं, न प्रमाणसिद्धस्य वस्तुन इति न्यायस्य सर्वसाधारणत्वात्। यथाऽन्यत्राऽगाङ्गे जले गङ्गात्वमारोप्य पुनर्नेदं गाङ्गमिति निषेधस्य संभवात्, न तु साक्षाद्विष्णुपादोदक्यां भागीरथ्यां गङ्गात्वनिषेधोऽपि प्रमाणपदवीमापद्यते, अपि तु बालभाषितमिवाऽप्रमाणतामेव याति। यथा वा— पुरुषो वा व गौतमाग्निर्योषिद्वा व गौतमाग्निरित्यग्निविद्यायां योषित्पुरुषयोरुपासनार्थमग्नित्वमारोपितं रूपकरीत्या तन्निषेधश्चेदर्ह एव, न तु प्रसिद्धेऽग्निहोमा-

ऽग्नौ तन्निषेधस्पर्शः । प्रत्यक्षमानासिद्धत्वात् । तथा प्रकृते अतद्व-स्तुषु, नाम ब्रह्मेत्युपासीतेत्यादिश्रुत्युक्तेषु वागादिषु आरोपित-ब्रह्मत्वनिषेधो, न तथा सर्वेश्वरे साक्षात्परब्रह्मणि पुरुषोत्तमे तत्स्पर्शावकाशः । तत्तु, नेदं ब्रह्मेतीदंकारणैव द्योतमानत्वान्ना-ऽश्रुतार्थकल्पनाप्रसङ्गोऽत्र संभाव्यः । इदंकारास्पदनामादिप्रप-श्चात्यन्तविलक्षणं ब्रह्मेति वाक्यार्थः । तस्मादुपास्य एव पर-ब्रह्मभूतः श्रीपुरुषोत्तमः सर्ववेदान्तवेद्य इति सिद्धम् । अलमति-विस्तरेण ॥

इत्थं तावत्, तत्त्वमसि सर्वं खल्विदं ब्रह्मेत्यादिवाक्यवृत्ति-तत्त्वमादिपदार्थो निरूपिताः । तत्र ज्ञानस्वरूपमित्यादिश्लोक-द्वयेन त्वंपदार्थः, अप्राकृतमित्येकेन श्लोकेनेदंपदार्थः, स्वभाव-तोऽपास्तमित्यादियुग्मेन तत्पदार्थश्च व्याख्यातः । उपासनीय-मित्येकेन श्लोकेन च तत्पदार्थस्य सर्वोपास्यत्वं, तदुपासनस्य विधेयत्वं प्रतिपादितम् ॥ ६ ॥

इदानीमुक्तोपासनस्य निदिध्यासनाख्यस्याऽन्तरङ्गं, श्रो-तव्य इत्यादिश्रुतिविधेयं वाक्यजन्यज्ञानं निरूपयँस्तत्त्वमस्यादे-र्वाक्यस्यार्थमाह—

सर्वं हि विज्ञानमतो यथार्थकं
श्रुतिस्मृतिभ्यो निखिलस्य वस्तुनः ॥
ब्रह्मात्मकत्वादिति वेदविन्मतं
त्रिरूपतापि श्रुतिसूत्रसाधिता ॥ ७ ॥

सर्वं हीति । हि यस्मान्निखिलस्य वस्तुनः श्रुतिस्मृतिभ्यो ब्रह्मात्मकत्वादतः सर्वं विज्ञानं यथार्थकम्—इत्यन्वयः । यतस्त्रि-रूपता श्रुतिसूत्रसाधिता तस्मात् साऽपि यथार्थेति, अपिशब्दा-ऽर्थः । उक्तार्थे प्रमाणं दर्शयन्नाह—इति वेदविन्मतम् । वेद-

विदामौपनिषदानां श्रीव्यासमन्वादीनां मतं निर्णीतोऽर्थः सिद्धान्त इत्यर्थः । तत्र निखिलशब्दः क्षेत्रक्षेत्रज्ञप्रकृतिपुरुषक्षराक्षरादिशब्दाभिधेयचेतनाचेतनपदार्थोपस्थापकः । प्रधानक्षेत्रज्ञपतिर्गुणेश इति श्रुतेः । प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि । क्षेत्रक्षेत्रज्ञयोर्ज्ञानम् । द्वाविमौ पुरुषौ लोके क्षरश्चाऽक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते इति स्मृतेश्च । वस्तुशब्दस्तस्य मिथ्यात्वाऽवस्तुत्वाऽसत्त्वादिपक्षनिरसनपरः । तस्य नित्यत्वाभिधानपरत्वात् । तथाच—नित्यो नित्यानां चेतनश्चेतनानां गौरनाद्यन्तवतीति श्रुतेः । न त्वेवाहं जातु नासं, प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि । अश्वत्थं प्राहुरव्ययमिति स्मृतेश्च । श्रुतिस्मृतिभ्योऽस्य ब्रह्मात्मकत्वं च । एष सर्वभूतान्तराऽऽत्मा, एष त आत्माऽन्तर्य्याम्यमृतः, एष म आत्माऽन्तर्यामीत्यादिश्रुतेः । आत्मेति तूपगच्छन्ति ग्राहयन्ति चेति न्यायात् । अहमात्मा गुडाकेश सर्वभूताशयस्थितः । इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः । वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेव चेत्यादिस्मृतेश्च । तत सिद्धं श्रुतिस्मृतिभ्यः सर्वस्यापि चेतनाचेतनभूतस्य जगतो ब्रह्मात्मकत्वं, परब्रह्मणः पुरुषोत्तमस्य च विश्वाऽन्तरात्मत्वमिति । अतः सर्वं विज्ञानं यथार्थकमिति । अतः सर्वस्य ब्रह्मात्मकत्वादेव सर्वमिति सर्वशब्दाभिधेयचेतनाचेतनरूपविश्वविषयकमिति विज्ञानं विशेषज्ञानं यथार्थवस्तुविषयकत्वाद् यथार्थम् । किञ्च, त्रिरूपतापि श्रुतिसूत्रसाधितेति । भोक्तृभोग्यनियन्तृरूपता त्रिरूपताऽपि यथार्थैवेति शेषः । तत्र हेतुः श्रुतिसूत्रसाधितेतिश्रुतिसूत्रसाधितत्वादितिश्रुतिसूत्रैर्निर्णयासाधारणप्रमाणभूतैर्निर्णीतत्वादितियावत् । तथाचश्रुतिः—भोक्ता भोग्यं प्रेरितारं च मत्वा, आनन्दं ब्रह्मणो विद्वान् न बिभेति, सर्वं प्रोक्तं त्रिविधं

ब्रह्मैतदित्यादि। अथाऽतो ब्रह्मजिज्ञासेत्यादिसूत्राणि अत्रानुसंधेयानि। तत्र जिज्ञासुजिज्ञासाजिज्ञास्यरूपताप्रतिपादनपरत्वादुक्तसूत्रस्य। एवमन्यदप्यनुसंधेयम्। इति वेदविन्मतमिति इत्येवं ब्रह्मात्मकत्वतदायत्तस्थितिप्रवृत्तिकत्वतद्व्याप्यत्वेभ्यो ब्रह्माऽभिन्नत्वात्। त्रैरूपत्वश्रवणस्मरणाभ्यां स्वरूपेण भिन्नत्वाच्च ब्रह्मभिन्नाभिन्नं चेतनाचेतनात्मकं विश्वमिति वेदविदां श्रीसनत्कुमारनारदव्यासादीनां मतं निर्णीतः सिद्धान्त इत्यर्थः। तदनन्यत्वमारम्भणशब्दादिभ्यः, अधिकं तु भेदनिर्देशात्, भेदव्यपदेशाच्चान्य इत्युभयार्थप्रतिपादनपरेभ्यः सूत्रेभ्यः, अंशो नाना व्यपदेशादन्यथाचाऽपि दाशकितवादित्वमधीयत एके, उभय व्यपदेशात् त्वहिकुण्डलवदिति घटकसूत्राभ्यां चोभयप्रकारकत्वमिति बोध्यम्। तथाच श्रुतयः— सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयम्, आत्मा वा इदमेक एवाग्र आसीत्, तत् त्वमसि, अयमात्मा ब्रह्म, सोऽहं ब्रह्मास्मि, आत्मैवेदं सर्वं, सर्वमिदं ब्रह्म, त्वं वा अहमस्मि भगवो देवते, अहं वै त्वमसि देवते, यदेवेह तदमुत्र यदमुत्र तदन्विह यश्चेह पुरुषे यश्चासावादित्ये स एकः, तदाऽऽत्मानमेवावेदऽहं ब्रह्मास्मीति, सर्वं खल्विदं ब्रह्म तज्जलानितीत्याद्याः, सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः, क्षेत्रज्ञं चापि मां विद्धि, एकः समस्तं यदिहास्ति किञ्चित् तदच्युतो, नास्ति परं ततोऽन्यत्। सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्। सकलमिदमहं च वासुदेवः, यथाऽऽह वसुधा सर्वं सत्यमेतद्दिवौकसः। अहं भवो भवन्तश्च सर्वे नारायणात्मकाः। यदा समस्तदेहेषु पुमानेको व्यवस्थितः। तदा हि को भवान् कोऽहमित्येतदफलं वच इत्याद्याः स्मृतयश्च। नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, ज्ञाज्ञौ

द्वावजावीशानीशौ, अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः, जुष्टं यदा पश्यत्यन्यमीशं पृथगात्मानं प्रेरितारं च मत्वा, प्रधानक्षेत्रज्ञपतिर्गुणेशः अक्षरात् परतः परः, तस्मिल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन, भीषाऽस्माद्वातः पवते भीषोदेति सूर्य्यः, यद्भूतयोनिं परिपश्यन्ति धीराः, ज्योतिषां ज्योतिः, एष योनिः सर्वस्य स्थावरस्य चरस्य, सर्वाँल्लोकानीशत ईशनीभिः, सर्वस्य प्रभुमीशानं, तमीशानं वरदं भूतमीड्यं यस्मान्नाणीयो न ज्यायानस्ति कश्चित्, अणोरणीयान् महतो महीयान्, एष देवो विश्वकर्मा महात्मा स एव काले भुवनस्य गोप्ता विश्वाधिपतिः, न तस्य प्रतिमाऽस्तीह यस्य नाम महद्यशः, न तस्य कश्चित् पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गं स कारणं कारणाधिपाधिपः, न तस्य कश्चिज्जनिता नचाधिपः तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतं, पतिं पतीनां, सर्वगन्धः सर्वरसः, एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्यामी विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्, आदित्यवर्णं तमसः परस्तात्, यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिं, हिरण्यकेशः हिरण्यश्मश्रुः, आप्रणखात् सुवर्णः, प्राणस्य प्राणं श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो वाचं चक्षुषश्चक्षुः आनन्दमूर्त्तिः सत्यकामः सत्यसंकल्पः, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, सर्वस्य वशी सर्वस्येशानः, स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणिसर्वविद्य इत्याद्याः। भेदव्यपदेशाच्चान्यः, अधिकं तु भेदनिर्देशात्, शारीरश्चोभयेऽपि हि भेदेनैनमधीयते, विवक्षितगुणोपपत्तेश्च, सर्वधर्मोपपत्तेश्च, सर्वोपेता चेत्यादिन्यायाः। जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम्। अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम्। लोका-

ध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत्। ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम्। लोकनाथं महद्भूतं सर्वभूतभवोद्भवम्। पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्। दैवतं देवतानां च भूतानां योऽव्ययः पिता इति। न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः। अहं सर्वस्य प्रभवो, मत्तः परतरं नान्यत् किञ्चिदस्ति, मम साधर्म्यमागताः, पूता मद्भावमागताः, द्वाविमौ पुरुषौ लोके क्षराश्चाऽक्षर एव च, उत्तमः पुरुषस्त्वन्यः, चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन, महात्मानस्तु मां पार्थ, तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते, उदाराः सर्व एवैते, भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्, सुहृदं सर्व भूतानां ज्ञात्वा मां शान्तिमृच्छति, तद्धाम परमं मम, मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः, स्थूलैः सूक्ष्मैस्तथा सूक्ष्मसूक्ष्मैः सूक्ष्मतरैस्तथा स्थूलैः स्थूलतरैश्चैव तत्सर्वं प्राणिभिर्वृतम्। अङ्गुलस्याष्टमो भागो न सोऽस्ति मुनिसत्तम। न सन्ति प्राणिनो यत्र निजकर्मनिबन्धनाः। सर्वे चैते वशं यान्ति यमस्य भगवन् किल। आयुषोऽन्ते ततो यान्ति यातनास्तत्प्रचोदिताः। यातनाभ्यः परिभ्रष्टा देवाद्यास्वथ योनिषु। जन्तवः परिवर्त्तन्ते शास्त्राणामेष निश्चयः। परिहर मधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानाम्। अहममरगणार्चितेन धात्रा यम इति लोकहिताहिते नियुक्तः। हरिगुरुवशगोऽस्मि न स्वतन्त्रः प्रभवति संयमने ममापि विष्णुः। त्वं परस्त्वं परस्याद्यः परतस्त्वं परात्मकः। परस्मात् परमो यस्त्वं तस्य तोष्यामि किन्न्वहम्। निर्मलज्ञानरूपाय विज्ञाननिलयाय च। उद्गीथाय नमस्तुभ्यं रथन्तर नमोऽस्तु ते। यं विदुर्वेदतत्त्वज्ञा ब्रह्माद्याः सनकादयः। विचिन्वन्तः प्रदीपेन ज्ञानाख्येन च केशव सोऽसि देव जगन्नाथ यो दृष्टो ब्रह्मवादिभिः। यं प्राप्य न निव-

न्तन्ते योगिनोऽमलचेतसः। त्वामाहुः सकला वेदा ब्रह्मेति ज्ञान-निश्चयाः। त्वमेवेदं जगत्सर्वं त्वयि सर्वं प्रतिष्ठितम्। एवं जानीत हे विप्रा ये भक्ता द्रष्टुमागताः। एतदेव परं वस्तु नैतस्मात् परमस्ति वः। एतदेव सदा विप्रा ध्येयं सततमानसैः। एष वो मोक्षदाता च एष मार्ग उदाहृतः। एवमुक्तास्ततः सर्वे मुनयः पुण्य-शालिनः। यथावदुपगृह्णाना निरसन् संशयं नृप। छिन्नो नः संशयः सर्वो गृहीतार्थः स तादृशः। परंपरस्यापि परंपरं यत् परं परस्यापि परमं च देवम्। परंपरस्यापि परं प्रभुं च त्वामाहुरग्र्यं पुरुषं पुराणम्। परंपरस्यापि परंपरायणम्, परं च गुह्यं परमं च मन्त्रम्। परेण योगेन परं सुगुप्तं त्वामाहुरग्र्यं पुरुषं पुराणम्। यत्र सर्वं यतः सर्वमुत्पन्नं सत्पुरःसरम्। सर्वभूतश्च यो देवः पराणामपि यः परः। परः परस्मात् पुरुषात् परमात्मा स्वरूपधृक्। योगिभिश्चिन्त्यते यस्तु मुक्तिहेतुर्मुमुक्षुभिः। अथवा सर्वविद्विष्णुः सर्वस्य हृदि संस्थितः। जानात्येव सदा भावं प्राणिनां शोभनेतरम् इत्याद्याः स्मृतयश्च। तत्र, ब्रह्मात्मकत्वादिति ब्रह्म आत्मा यस्य चेतनाचेतनरूपवस्तुजातस्य तद्ब्रह्मात्मकं तस्य भावस्तत्त्वं तस्मात्। एष मे आत्माऽन्तर्यामी, एष ते आत्मान्तर्यामी, अन्तःप्रविष्टः शास्ता जनानाम्, सर्वात्मा सर्वव्यापी सर्वभूतान्तरात्मा, पतिं विश्वस्यात्मेश्वरम्। आत्मेति तूपगच्छन्ति ग्राहयन्ति च, अहमात्मा गुडाकेश सर्वभूताशयस्थितः, सर्वस्य चाहं हृदि सन्निविष्टः, अहं भवो भवन्तश्च सर्वे नारायणात्मकाः, इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः, वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव चेत्यादि-श्रुतिस्मृतिभ्यः।

यो यदात्मकः स तदभेदव्यपदेशार्हः। सुवर्णकुण्डलादिवदिति व्याप्तिश्चातिप्रसिद्धत्वात्। किञ्च तदायत्तस्थितिप्र-

वृत्तिकत्वादिति। तत्तस्य ब्रह्मण आयत्ता आधीना स्थितिः प्रवृत्तिश्च यस्य वस्तुमात्रस्य तत्तथा, तस्य भावस्तत्त्वं तस्मात् । सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः । एतदक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, भीषाऽस्माद्वातः पवते, अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते । किमनेन जगन्नाथ सर्वं त्वद्वशगं जगत् । विश्वं चेदं त्वद्वशे विश्वयोने । नमोऽस्तु ते शार्ङ्गचक्राऽसिपाणे । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया । ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् । जगद्वशे वर्त्ततेऽदः कृष्णस्य सचराचराचरमिति वाक्यकदम्बात् । किञ्च, यद् यदायत्तस्थितिप्रवृत्तिकं वस्तु तत्तदऽभेदव्यपदेशार्हमित्याम्नायते छान्दोग्ये प्राणसंवादे, न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राण इत्येवाचक्षते प्राणो ह्येवैतानि सर्वाणि भवन्तीत्यादिना । अपि च तद्व्याप्यत्वादिति । यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्यं नारायणः स्थितः । द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वा इत्यादिशास्त्रात् । यो यद्व्याप्यः स तद्रूप इत्यत्र, योऽयं तवागतो देव समीपे देवतागणः । स त्वमेव जगत् स्रष्टा यतः सर्वगतो भवान् । सर्वं समाप्नोषि ततोऽसि सर्व इत्यादिस्मृतेर्मानत्वं बोध्यम् । एतदुक्तं भवति । सत्ता तावद् द्विविधा, स्वतन्त्रपरतन्त्रभेदात् । तत्र स्वतन्त्रसत्ता नाम आत्माश्रितत्वे सति स्वायत्तस्थितिप्रवृत्तिकता । सा परब्रह्मविश्वात्मनिष्ठा । सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयम्, एतदक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, भीषास्माद्वातः पवते भीषोदेति सूर्यः, भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः, आत्मा हि परमः स्वतन्त्रोऽधिगुणः, एष सर्वेश्वरः, स एष सर्वाधिपतिः स कारणं

कारणाधिपाधिपः, न तस्य कश्चिज्जनिता न चाधिप इत्यादिश्रुतिभ्यः, सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च । शास्ता विष्णुरशेषस्येत्यादिस्मृतिभ्यश्च । एवं स्वतन्त्रसत्ताश्रयो निरस्तसाम्यातिशयो विश्वात्मा परब्रह्म भगवान् पुरुषोत्तम इति सिद्धम् । परतन्त्रसत्त्वं च पराऽऽयत्तस्थितिप्रवृत्तिकत्वम् । तच्च चेतनाचेतनात्मकनियम्यवर्गवृत्ति यदासीत्तदधीनमासीत् । जीवोऽल्पशक्तिरस्वतन्त्रोऽवरः । मत्तः सर्वं प्रवर्त्तते । सत्त्वं स्वातन्त्र्यमुद्दिष्टं तच्च कृष्णे न चापरे । अस्वातन्त्र्यात्तदन्येषामसत्त्वं विद्धि भारत इति श्रुतिस्मृतिभ्यः । परतन्त्रसत्त्वं द्विविधं, कूटस्थं, विकारशीलं चेति । तत्र कौटस्थ्यं नाम जन्मादिविकारशून्यत्वे सति नित्यत्वम् । तच्च जीवात्मवर्गाश्रितम् । तदाश्रयो जीवप्रत्यगक्षरपुरुषक्षेत्रज्ञादिशब्दाभिधेयः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोक्तभोगामजोऽन्यः । न जायते न म्रियते वा विपश्चित् । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे इत्यादिभ्यः । द्वितीयं विक्रियायुक्तत्वे सत्यनाद्यनन्तत्वम् । तत्तु प्रकृतिवर्गाश्रितम् । तदाश्रयं च कार्य्यकारणात्मकं प्रधानप्रकृत्यादिशब्दवाच्यम् । गौरनाद्यन्तवती जनित्री भूताभाविनी । सिताऽसिता च रक्ता च सर्वकामदुघा विभोरित्यादिश्रुतेः । त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् । अचेतना परार्था च नित्या सततविक्रिया । तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पवदित्यादिवैष्णववचनाच्च । तथा च स्वतन्त्रसत्त्वविषयिकाऽभेदवाक्यप्रवृत्तिः । तस्यैक्यात् तयैव तेषां नैराकाङ्क्ष्यं, तथैव भेदनिषेधपराणां चापि चेतनाचेतनवस्तुवृत्तिस्वतन्त्रसत्त्वनिषेधपरत्वेन तेषां स्वार्थ एव प्रामाण्यात् । भेदवाक्यानां तु परतन्त्रसत्त्वविषयकत्वेनैव स्वार्थविधायकत्वात् सर्वं समञ्जसम् ।

एवं, तत्त्वमस्यादिवाक्यानां महावाक्यत्वेनोभयप्रकारवाक्यनिष्ठ-विरोधपरिहारपरत्वमनुसंधेयम्। इतरथा वाक्यानां परस्परविरोधेन एकार्थत्वासंभवात्। बहूनां वाक्यानामविरोधेनैकार्थविधानपरत्वमेव हि महावाक्यत्वम्। तथा च विश्वात्मा पुरुषोत्तमः स्वाश्रितात्म-सत्तया विश्वस्मादभिन्नः, तथैव ह्यात्मीयचेतनाचेतननियम्यवर्ग-वृत्तिपरतन्त्रसत्त्वाभावरूपेण विश्वविलक्षणत्वापरपर्य्यायेण सार्व-ज्ञादिवद्भावरूपेणात्मासाधारणेन धर्मेण अस्थूलादिवाक्यप्रतिपाद्येन विश्वस्माद्भिन्न इति विश्वभिन्नाभिन्नश्रीपुरुषोत्तमपरब्रह्मभूतो भग-वान् रमाकान्तः सर्ववेदान्तार्थ इति सिद्धान्तः॥

एवं स्वतन्त्रसत्त्वं परतन्त्रसत्त्वाभावं चाश्रित्य तत्त्वमस्यादि-वाक्यानि भेदाभेदवाक्यानां परस्परविरुद्धानामविरुद्धमन्वेतुकामा-नि भिन्नाभिन्नब्रह्म प्रतिपादयन्ति। तथाहि। तत्त्वमसीत्यत्र त-च्छब्दः सर्वज्ञसर्वशक्तिविश्वात्मपरब्रह्मभूतस्वतन्त्रसत्ताश्रयप्रतिपा-दनपरः। त्वंपदश्च तदात्मीयतदात्मकपरतन्त्रसत्ताश्रयजीवात्म-वाचकः। असिशब्दश्चोभयपदार्थसम्बन्धाभिधानपरः। स च स-म्बन्धस्तदात्मकस्य त्वम्पदवाच्यस्य तत्पदार्थेन सह स्वातन्त्र्य-सत्त्वाभेदसहिष्णुपरतन्त्रसत्त्वभेदरूपः। तत्पदार्थवृत्तिस्वतन्त्रसत्ताश्र-याभिन्नब्रह्मात्मकपरतन्त्रसत्त्वाश्रयाभिन्नस्त्वम्पदार्थ इति वाक्यार्-थः। तत्पदार्थो विश्वात्मा, त्वम्पदार्थः क्षेत्रज्ञान्तरात्मा, तयोर्भेदो घटो द्रव्यं, पृथिवी द्रव्यमित्यादिवद् मुख्य एवातो युक्तम् उक्त-सिद्धान्तस्य साधीयस्त्वम्। ननु तत्पदार्थो विश्वात्मा पुरुषोत्तम इति निर्विवादत्वान्नात्र शङ्कावकाशः, परन्तु त्वम्पदार्थस्य क्षेत्रज्ञतया सुप्रसिद्धत्वात् कथमिव क्षेत्रज्ञान्तरात्मत्वं प्रतिपाद्यते इति चेदुच्यते समाहितमनस्त्वेन श्रूयताम्। यथाऽग्नेर्ढगित्यत्राग्निशब्दोऽकारगका-राद्यवच्छिन्नानुपूर्वीकाग्निशब्दवाचकः। अग्नौ जुहोतीत्यत्र स एवाग्नि-

शब्दो दहनप्रकाशनादिशक्त्यवच्छिन्नवस्तु विधायकः । उभयार्थविधायकत्वमग्निशब्दस्य शक्यत्वेन मुख्यमेवेति शाब्दिकानां मतं तथैव ह्यौपनिषदानां सिद्धान्ते सर्वेषामपि ब्रह्मरुद्रादिचेतनाचेतनवस्तुमात्रपराणां शब्दानां तत्तत्पदार्थवाचकत्वे तत्तदात्मभूतब्रह्मपरत्वम् अविरुद्धं, ब्रह्मणः सर्वात्मकत्वात् । यथा चतुर्मुखादिपिण्डाश्चतुर्मुखादिशब्दानां शक्यास्तदवच्छिन्नास्तत्तच्चेतयितारश्च उभयेऽपि चतुर्मुखादिशब्दैर्विधातुं सुशक्यास्तथा तेषां चतुर्मुखादिपिण्डतत्तदवच्छिन्नक्षेत्रज्ञाभिधानपरत्वे तेषामन्तरात्मत्वाद्ब्रह्माभिधानपरत्वं वक्तुं सुशकमिति भावः । एतदभिप्रेत्य वस्तुजातस्य ब्रह्मत्वमुद्घोषयन्ति श्रुतयः । भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतदित्याद्याः । ननूदाहृतस्याग्न्यादिशब्दस्योभयार्थविधायकत्वे पाणिन्यादिस्मृतेः प्रामाण्याद् उक्तार्थस्य प्रामाण्यं शक्यते वक्तुं, न तथोक्तसिद्धान्ते किञ्चित्प्रमाणमुपलभामहे । श्रुतिमूलशून्यस्योपमानमात्रस्यात्यन्तदुर्बलत्वादिति चेन्न । नामानि सर्वाणि यमाविशन्ति, सर्वे वेदा यत्पदमामनन्तीत्यादिश्रुतीनामेवात्र मानत्वात् । किञ्च । सर्वश्रुतिमूलभूतगायत्र्याख्यमन्त्रोऽपि उभयप्रकारसत्ताप्रतिपादकत्वेनोक्तसिद्धान्ते प्रमाणम् । तथाहि । देवशब्दाभिधेयस्य पुरुषोत्तमस्य सर्वनियन्तृत्वप्रतिपादनात् स्वतन्त्रसत्ताश्रयत्वम् । अस्मच्छब्दाभिधेयानां चेतनानां, धीशब्दोपलक्षिताचेतनवस्तुनश्च तन्नियम्यत्वाभिधानात् परतन्त्रसत्ताश्रयत्वमिति । तत्सिद्धं विश्वभिन्नाभिन्नं ब्रह्म सर्ववेदान्तार्थ इति ।

ननु स्वतन्त्रसत्तानिरूप्यं परतन्त्रसत्त्वं, तन्निरूप्यं च स्वतन्त्रसत्त्वमित्यन्योन्याश्रयदोषापत्तिरिति चेन्न। स्वतन्त्रसत्त्वे नियन्तृत्वव्यापकत्वसर्वात्मत्वसर्वज्ञत्वादीनां, परतन्त्रसत्त्वे च नियम्यत्वव्याप्यत्वात्मीयत्वाल्पज्ञत्वादीनां स्वाभाविकानां प्रयोजकानां सत्त्वान्नो-

क्तदोषगन्धसंबन्धः । न चोक्तसिद्धान्तेऽवच्छेदकाभावो भाव्यः । भिन्नाभिन्नत्वस्यैवाखण्डोपाधेरवच्छेदकत्वाभ्युपगमात् । एवं सर्वेषामपि वाक्यानां स्वार्थे शक्तिद्वयैव प्रामाण्यान्न विरोधशङ्कावकाशः । एतेनैव सर्वं खल्विदं ब्रह्म तज्जलानितीत्यादीन्यपि वाक्यानि व्याख्यातानि भवन्ति । तुल्ययोगक्षेमाच्च तेषाम् । अलं विस्तरेण ॥ ७ ॥

इति श्रीवेदान्तरत्नमञ्जूषायां भगवत्पुरुषोत्तमाचार्यविरचितायां
सिद्धान्तरत्नविवृत्तौ वाक्यार्थसंग्रहाधारो नाम
द्वितीया कोष्ठिका समाप्ता ॥ २ ॥



## अथ वेदान्तरत्नमञ्जूषायां तृतीयः कोष्ठः ।

एवं तावत् पूर्वस्मिन् ग्रन्थे प्रथमप्रकरणे तत्त्वमादिपदार्थाः संग्रहेण निरूपिताः । द्वितीये च भेदपराणामभेदपराणां भेदनिषेधविषयकाणाम् अस्थूलादीनां वाक्यानां चाऽविरोधविधिना समन्वयप्रक्रियापूर्वकं स्वार्थे प्रामाण्यं प्रतिपादितम् । अथेदानीं साधनानि विधीयन्ते । तानि च कर्मज्ञानभक्तिप्रपत्तिगुर्वाज्ञानुवृत्तियोगभेदाद् द्विविधानि । तत्र कर्मयोगस्त्रिविधः । नित्यनैमित्तिककाम्यभेदात् । तत्राऽहरहः सन्ध्यामुपासीत, यावज्जीवमग्निहोत्रं जुहोतीत्यादिना नित्यकर्त्तव्यतया विधीयमानानि संध्योपासनजपस्नानतर्पणादीनि नित्यानि । एवं यज्ञदानाध्ययनानि त्रैवर्णिकद्विजातिसाधारणानि । याजनाऽऽदानाध्यापनानि द्विजाग्र्यासाधारणानि । तेषां त्रयाणां तु निष्कामतयाऽनुष्ठाने नित्यत्वं सकामतयाऽनुष्ठाने च वृत्तित्वमिति विभागः । तच्च याजनादिनापि यावद्देहयात्रामात्रमेवाऽऽदानम् । अधिकं तु प्रतिग्रहः । अन्यथाऽऽदानस्य तृतीयस्य वैयर्थ्यात् । अत एव षट्कर्मकत्रिकर्मकद्विजातिविभागः । ब्राह्मणस्य षट्कर्मत्वं क्षत्रियवैश्ययोस्त्रिकर्मत्वं चेति । अथेन्द्रियनिग्रहतीर्थसेवनोपवासफलाहारदेहशोषणान्नदानादीनि सर्वसाधारणानि । कर्तृत्वाद्यभिमानशून्यैर्मुमुक्षुभिरनुष्ठितानां तेषां मनःशुद्धिपरम्परया ज्ञानभक्तिजनकत्वेन मोक्षसाधकत्वम् । सकामत्वेनानुष्ठीयमाने च काम्यकर्मकोटावन्तर्भाव इति विवेकः । अथ केनचित् कालादिविशेषनिमित्तेन विधीयमानं श्राद्धादिकं कर्म नैमित्तिकम् । स्वर्गकामो यजेतेत्यादिना सकाममधिकृत्य विधीयमानानि काम्यानि । तत्र काम्यानां निषिद्ध

वत् संसारहेतुत्वाविशेषान्मुमुक्षुभिस्तानि हेयान्येव । नित्यनैमित्तिकानि च स्वस्ववर्णाश्रमाधिकारानुसारेण भगवदाज्ञापालनात्मकत्वभजनरूपत्वाद् आवश्यकतयाऽनुष्ठेयानि । तत्र त्रैवर्णिकैर्वैदिकानि, एकजातिना स्वानुरूपाणि पौराणिकतर्पणान्नदानादीनि इति विशेषः । तथाच गीयते श्रीमुखेन– ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप । कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः । स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः । स्वकर्मनिरतः सिद्धिं यथा गच्छति तच्छृणु । यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव इत्यादिना । किञ्च वर्णाश्रमत्यागस्याऽश्रौतत्वात् सांप्रादायिकैर्मुमुक्षुभिराश्रमित्वेनैव भाव्यम्। तथाच स्मर्य्यते वैष्णवपुराणे, ब्रह्मचारी। गृहस्थश्च वानप्रस्थस्तथाश्रमी । परिव्राट् च चतुर्थोऽत्र पञ्चमो नोपपद्यते । वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पन्था नान्यत् तत्तोषकारणमिति वैष्णवे और्वः । नाचारहीनं प्रपुनन्ति वेदा इति सनत्सुजातवचनात् । किञ्च श्रुतिस्मृत्युदितं धर्म्मं वर्णाश्रमविभागजम् । उल्लङ्घ्य ये प्रवर्तन्ते स्वेच्छया कूटयुक्तिभिः । विकर्माभिरता मूढा युक्तिप्रागल्भ्यदुर्मदाः । पाषण्डिनस्ते दुःशीला नरकार्हा नराधमा इति विष्णुधर्मे । किञ्च, वर्णाश्रमधर्मस्य वैष्णवलक्षणत्वविधानादप्यावश्यकत्वम् । तत्रैव यमगीतायां वैष्णवलक्षणे, न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे । न हरति न च हन्ति किञ्चिदुच्चैः स्थितमनसं तमवेहि विष्णुभक्तमिति । वर्णपदञ्चात्राश्रमोपलक्षणार्थम् । तयोः साहित्यनियमात् । विपक्षे वैष्णवत्वहानिप्रसङ्गः । स च स्मर्य्यते स्वयमेव, श्रुतिस्मृती ममैवाज्ञे ते य उल्लङ्घ्य प्रवर्त्तते । आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न वैष्णव इति । तथाभूतत्यागस्य तामसत्वविधानात् । निय-

तस्य तु संन्यासः कर्म्मणो नोपपद्यते । मोहात् तस्य परित्यागस्तामसः परिकीर्तित इति दैत्यभागत्वप्रतिपादनाच्च । तथा हरिवंशे श्रीवामनोक्तिर्बलिं प्रति, वेदोक्तं ये परित्यज्य धर्ममन्यं प्रकुर्वते । तत्सर्वं तव दैत्येन्द्र मत्प्रसादाद् भविष्यतीति । आश्रमादिधर्मत्यागेन नग्नत्वप्रसङ्गः स्मर्य्यते वैष्णवे । ऋग्यजुःसामसंज्ञेयं त्रयी वर्णावृती द्विज । एतामुज्झति यो मोहात् स नग्नः पातकी स्मृत इति । कलिधर्मे व्यासोक्तेश्च, नास्तिक्यपरमाश्चैव केचिद्धर्मविलोपकाः । भविष्यन्ति नरा मूढा मन्दाः पण्डितमानिन इति । ननु सर्वधर्मान् परित्यज्येत्यादिना सर्वकर्मत्यागविधानस्यापि साक्षाद्दानात् कथमिव नित्यनैमित्तिकानामवश्यकर्त्तव्यतेति । सत्यम् । त्यागशब्दस्य फलकर्तृत्वादित्यागपरत्वात् । स्वस्य कर्तृत्वाभावदार्ढ्यभावनया त्यागस्य मुख्यत्वमेव सिद्धेः । तथाच तत्रैव, त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः । कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः । यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते इत्यादि । तत्रैव कर्मकर्त्तव्यत्वहेयत्वयोर्निर्णयः स्वयमेव उक्तः श्रीमुखेन । एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तममिति । ननु प्रायश्चित्तरूपस्यापि कर्मणो विलक्षणत्वेन स्मरणात् कथमिव कर्मणां त्रैविध्यमितिचेन्न । नैमित्तिकेष्वन्तर्भावात् । पापनिवृत्त्यात्मकनिमित्तेन विधीयमानत्वात् । नचैवं नित्यानामपि प्रत्यवायनिवृत्तिलक्षणनिमित्तेन विधेयत्वं कल्पयित्वा तेषामपि तत्रैवान्तर्भावेन द्वैविध्यमेव किं न स्यादिति वाच्यम् । तेषां प्रायश्चित्तत्वसाम्येऽपि नित्यपापानां प्रायश्चित्तत्वात् । नित्यत्ववैशेष्यमिति भावः ॥ १ ॥ अथ ज्ञानयोगः, पूर्वोक्तकर्मयोगानुष्ठाननिर्मलमनस्कैर्जातशास्त्राधिकारकैर्मुमुक्षुभिरभ्यस्यमानाच्छ्रवणादेर्जायमानः परब्रह्माख्यश्रीपुरुषोत्तमस्व-

रूपगुणशक्तिवैभवादिविषयकानुभवविशेषस्तत्प्रसादहेतुकसाक्षात्कारद्वारेण मोक्षहेतुः ॥ २ ॥ अथ भक्तियोगो नाम वार्षिकगङ्गाप्रवाहवदनवच्छिन्न आप्राणधारणादहरहः प्रवर्द्धमानो भगवत्स्मरणसन्ततिरूपानुभूतिविशेषः ॥ ३ ॥ प्रपत्तियोगो नाम शास्त्रोक्तज्ञानादिसर्वसाधनेषु स्वस्याऽसामर्थ्यमाकलय्य सदाचारोपदिष्टमार्गेण करुणावरुणालये रमाकान्ते भगवति श्रीवासुदेवे आत्मभारनिक्षेपणरूपः ॥ ४ ॥ गुर्वाज्ञानुवृत्तियोगो नाम प्रपत्तेरङ्गानामपि कालादिप्रतिबन्धकबाहुल्येनानुष्ठानाद्यशक्तेरसम्भवम् आत्मनि विचार्य्य श्रीगुरुमेव मोक्षाद्युपायं फलं च मत्वा तच्चरणारविन्दयोः सर्वात्मभावेनात्मभारं समर्प्याज्ञबालवत् तदुक्तमात्राचरणम् ॥ ५ ॥ तत्र कर्मयोगः श्रीभगवच्चरणैराचार्य्यैः सदाचारप्रकाशे निर्णीतः। ज्ञानयोगश्चात्रैव ग्रन्थे संगृहीतः । भक्तियोगोऽपि निरन्तरश्लोके वक्ष्यते । प्रपत्तिगुर्वाज्ञानुवृत्तियोगौ चास्मिन् श्लोके प्रतिपाद्येते—

नान्या गतिः कृष्णपदारविन्दात्
संदृश्यते ब्रह्मशिवादिवन्दितात् ॥
भक्तेच्छयोपात्तसुचिन्त्यविग्रहा-
दचिन्त्यशक्तेरविचिन्त्यसाशयात् ॥ ८ ॥

नान्या गतिरिति ॥ तत्र, यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये। यो ब्रह्माणं विदधाति पूर्वं यो वा विद्यास्तस्मै गोपायति स्म कृष्णः, तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणं व्रजेत्।सर्वस्य शरणं सुहृत् । तावदार्तिस्तथा वाञ्छा तावन्मोहस्तथाऽसुखम् । यावन्न याति शरणं त्वामशेषाऽघनाशनम् । वृथैव भवतो जाता भूयसी जन्मसन्ततिः । तस्यामन्यतरं जन्म संचिन्त्य शरणं व्रज ।

अथ पातकभीतस्त्वं सर्वभावेन भारत । विमुक्तान्यसमारम्भा नारायणपरो भव । शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः। तेऽपि मृत्युमतिक्रम्य यान्ति विष्णोः परं पदम्। तमेव शरणं गच्छ सर्वभावेन भारत । मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् । सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते। सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम । ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः। कर्तारमकृतं देवं भूतानां प्रभवाप्ययम् । य एनं संश्रयन्तीह भक्त्या नारायणं हरिम् । ते तरन्तीह दुर्गाणि नात्र कार्य्या विचारणेति श्रुतिस्मृतीतिहासादिवाक्यानां निर्णीतोऽर्थः प्रतिपाद्यते । प्रथमपादेन– नान्या गतिः कृष्णपदारविन्दादिति ॥

श्रीकृष्णपदारविन्दादन्या गतिः क्षेत्रज्ञानां न संदृश्यते श्रुतिस्मृतिष्वित्यन्वयः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिरिति श्रुतेः । गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् । अहमेव गतिस्तेषां निराशीःकर्मकारिणाम् । त्वं हि लोकगतिर्ब्रह्मन् न केचित् त्वां विजानते । न हि विष्णुम् ऋते काचिद्गतिरन्या विधीयते । इत्येवं सततं वेदा गायन्ति नात्र संशयः । अगतीनां गतिर्भवानित्यादिस्मृतेः । एवं करणव्युत्पत्त्या कर्मव्युत्पत्त्या चोपायोपेयपरोऽयं गतिशब्दः । तत्र गम्यतेऽनयेति करणव्युत्पत्त्या पुरुषार्थोपायभूतः श्रीभगवान् कृष्ण एवेति गतिपदार्थः । तथैव गीयते च श्रीमुखेनैव । अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् । तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् । तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्म-

भावस्थो ज्ञानदीपेन भास्वता । मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मच्चिता मद्गतप्राणा बोधयन्तः परस्परम् । कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच इत्यन्वयमुखेन, सर्वारम्भपरित्यागी भक्तिमान् यः स मे प्रियः । सर्वधर्मान् परित्यज्य मामेकं शरणं व्रजेत्यादिव्यतिरेकेण च स्वस्यैवात्माऽनन्यशरणानां सर्वपुरुषार्थसाधनत्वविधानात् । तथैव, गम्यत इति गतिः प्राप्योऽपि श्रीपुरुषोत्तम एवेति । तत्रैवान्वयव्यतिरेकाभ्यां गीयमानात् । यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः । भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् । मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः । मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे । मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते । मम साधर्म्यमागताः । मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते इत्यन्वयवाक्येभ्यः । आब्रह्म भुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन । न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिमित्यादिव्यतिरेकवचनेभ्यश्च । उपलक्षणं चैतत् सर्वसम्बन्धाश्रयोऽपि स एव । माता पिता तथा भ्राता सर्वस्य शरणं सुहृदितिशरण्यस्यैव भगवतः सर्वसम्बन्धित्वश्रवणात् । पिताऽसि लोकस्य चराचरस्य, त्वमस्य पूज्यश्च गुरुर्गरीयान् । पिताहमस्य जगतो माता धाता पितामहः । त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव । त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव इत्यादिश्रवणाच्च । किञ्च ममैवांशो जीवलोके, मद्भक्त एतद्विज्ञाय, यो मद्भक्तः स मे प्रियः । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । प्रतिजाने प्रियोऽसि मे । मम साधर्म्यमागता इत्यादिना

स्वस्यैव सर्वसम्बन्धत्वदृढीकरणाय तत्र तत्र षष्ठीप्रयोगस्य स्वयमेव श्रीमुखेनाभ्यस्यमानाच्च । किञ्चाऽनेन प्रपत्तिस्वरूपमप्युक्तं भवति । अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः । त्वमेवोपायभूतो मे भवेति प्रार्थना मतिः । शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यतामिति लक्षणसमन्वयात् । सा च षड्विधा । आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्ज्जनम् । रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा । आत्मनिक्षेपकार्प्पण्ये षड्विधा शरणागतिरिति भगवच्छास्त्रवचनात् । तत्र सर्वात्मत्वं पुरुषोत्तमस्य निश्चित्य, ब्रह्मादिस्तम्बपर्य्यन्तप्राणिमात्रस्यानुकूल्याचाराध्यवसायः प्रथमाङ्गम् । चराचराणि भूतानि सर्वाणि भगवद्वपुः । अतस्तदानुकूल्यं मे कर्त्तव्यमिति निश्चयः । श्रूयते हि सर्वात्मत्वं भगवतः—अन्तःप्रविष्टः शास्ता जनानां, सर्वात्मा, अहमात्मा गुडाकेश सर्वभूताशयस्थित इत्यादिगानाच्च । १ । हिंसामात्सर्य्यादिपूर्वोक्तविपरीताचारत्यागः, प्रातिकूल्यस्य वर्ज्जनं द्वितीयम् । तच्च विरोधिस्वरूपनिर्णये वक्ष्यते । परापवादं पैशुन्यमनृतं यो न भाषते । अनुद्वेगकरं चापि तोष्यते तेन केशवः । परपत्नीपरद्रव्यपरहिंसासु यो मतिम् । न करोति पुमान् भूप तोष्यते तेन केशवः । न ताडयति नो हन्ति प्राणिनोऽन्यांश्च देहिनः । यो मनुष्यो मनुष्येन्द्र तोष्यते तेन केशव इति सगरं प्रति और्वः । मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः । निर्वैरः सर्वभूतेषु यः स मामेति पण्डवेति उभयत्र प्रमाणम् । २ । वात्सल्यादिगुणरत्नाकरः सर्वाश्रयः सर्वशरण्यः प्रपन्नानस्मान् रक्षिष्यत्येवेति निश्चयो विश्वासः । (आत्मरक्षाविषयात्मकतद्रक्षितृत्वव्यवसायविशेष इति यावत्) । रक्षिष्यत्यनुकूलान्नइति या सुदृढा मतिः । स विश्वासो भवेच्छक्र सर्वदुष्कृतनाशन इति तृतीयम् । योगक्षेमं वहाम्यहम् । अहं त्वा

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्य
२ ते। एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते।
३ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते।
४· काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्यो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति।
५ भारतवर्षीयै, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम् मुद्राः ७ आणकाः ८
६ अन्यैर्देयं प्रतिस्तबकं " " १ " ०
७· आपणव्ययः पृथग् नास्ति।
८ साम्प्रतं मुद्र्यमाणा ग्रन्थाः-

| | | मुद्रिताः स्तबकाः |
|---|---|---|
| (१) संस्काररत्नमाला। गोपीनाथभट्टकृता | ( संस्कारः ) | २ |
| (२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः | ( व्याकरणम् ) | १० |
| (३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम्। | ( मीमांसा ) | १० |
| (४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शन प्रकरणम् श्रीमल्लोकाचार्य्यप्रणीतम्। श्रीनारायणतीर्थ विरचित भाट्टभाषा प्रकाश सहितम्। स० | (वेदान्तः) | २ |
| (५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः सम्पूर्णः | ( ज्योतिषः ) | १ |
| (६) भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः। तर्कपादः | ( मीमांसा ) | २ |
| (७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र वि० स० | ( मीमांसा ) | २ |
| (८) ब्रह्मसूत्रभाष्यम्-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम्। सम्पूर्णः। | ( वेदान्तः ) | ६ |
| (९) स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता सम्पूर्णा। | ( जैनदर्शनम् ) | २ |
| (१०) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपणपरम्-श्रीभाष्यकृतां परमगुरुभिः श्री ६ यामुनमुनिभिर्विरचितम्। सम्पूर्णम् | ( वेदान्तः ) | १ |
| (११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः आचार्यचित्सुखमुनिविरचितव्याख्योपेतः | ( वेदान्तः ) | ३ |
| (१२) विभक्त्यर्थनिर्णयःन्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः। सम्पूर्णः | ( न्यायः ) | ५ |

(१३) विधिरसायनम् श्रीअप्पयदीक्षितकृतम् स० (मीमांसा) १

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । } ( मीमांसा ) १५

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता । } ( वेदान्तः ) २

(१६) मीमांसाबालप्रकाशः ( जैमिनीयद्वादशाध्यायार्थसंग्रहः ) श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । } ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि मीमांसादर्शनम् ) महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् । श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च । सम्पूर्णः ( मीमांसा ) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च । ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम् महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १२

(२०) ब्रह्मसूत्रभाष्यम् श्रीभास्कराचार्यविरचितम् ( वेदान्तः ) १

(२१) श्रीहर्षप्रणीतम् खण्डनखण्डखाद्यम् आनन्द पूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया ( विद्यासागरी ) ति प्रसिद्धया समेतम् । } (वेदान्तः) २

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता । १

(२३) श्रीलक्ष्मीसहस्रम्–बालबोधिनीव्याख्यया अवतरणकया च सहितम् । } ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता । ( वेदान्त) २

(२५) क्रोडपत्रसंग्रहः अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि । ( न्यायः ) १

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीव्याख्यव्याख्यायुत

(२७) षड्दर्शनसमुच्चयः । बौद्ध नैयायिक कापिल्य जैन वैशेषिक जैमिनीयदर्शन संक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । } १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च । १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्याः जागदीशी टीका । ५ ५

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । २ २

(३१) स्मृतिसारोद्धारः । विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः । २ २

(३२) वेदान्तरत्नमञ्जुषा । श्रीभगवत्पुरुषोत्तमाचार्य कृता । १

पत्रादिप्रेषणस्थानम् । } हरिदासगुप्तः,

बनारस सिटी

BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*No. 131.*


श्रीमद्भागवतदशमस्कन्धस्थरासपञ्चाध्यायीव्याख्या।

# गूढार्थदीपिका।

पण्डितवर—श्रीधनपतिसूरिकृता।

श्रीमदाचार्यश्रीवल्लभाधीश्वर—श्रीविट्ठलनाथदीक्षितशुद्धाद्वैत-संप्रदायविदुषा रत्नगोपालभट्टेन परिशोधिता।

# GÛḌHÂRTHADÎPIKÂ,

A Commentary on Râsa Panchâdhyâyî of the Tenth Chapter of Śrîmad Bhâgawata,

BY PANDIT DHANAPATI SÛRI.

EDITED BY RATNA GOPÂL BHATTA.

*Fasciculus I.*


BENARES:

*Published by the Proprietors Messrs. Braj B. Das & Co.*

AND SOLD BY H. D. GUPTA,

*Secretary, Chowkhamba Sanskrit Book Depot.*

Printed at the Vidyâ Vilâs Press,

BENARES.

1907.

# सूचीपत्रम् ।

| | रु० | आ० | पा० |
|---|---|---|---|
| गणपाठः | ० | ४ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ० |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्मशास्त्रसंग्रहः | ६ | १ | ६ |
| धातुपाठः ( शिला ~) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ० |
| परिभाषापाठः | ० | ० | ६ |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ८ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ७ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लघुकौमुदीभाषाटीका (पं० मथुराप्रसादमिश्र कृत) ( टिप्पणीसहित ) | ४ | ० | ० |
| लक्षणावली | ० | २ | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| विष्णु सहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ० |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| सिद्धान्तकौमुदी | ३ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ३ | ० | ० |
| उपसर्गवृत्ति | ० | १ | ० |
| क्षेत्रकौमुदी | ० | ६ | ० |
| क्षेत्रसंहिता | २ | ० | ० |

श्रीकृष्णाय नमः ।

श्रीमद्भागवतदशमस्कन्धस्थरासपञ्चाध्यायीव्याख्या ।

# गूढार्थदीपिका ।

श्रीधनपतिसूरिकृता ।

---

गोपाङ्गनागुणाऽऽकृष्टचेता वेत्ताऽखिलस्य यः ॥
तस्य कृष्णस्य पादाब्जमाश्रयेऽभीष्टसिद्धये ॥ १ ॥
नुमः श्रीबालगोपालतीर्थान् व्यासमुखान् मुनीन्
विघ्नहर्तॄन् गणेशादीन् पण्डिताँश्च विमत्सरान् ॥ २ ॥
अथ पञ्चभिरध्यायै रासक्रीडामहोत्सवः ॥
वर्ण्यते मुनिना सम्यक् सद्गुणाकृष्टचेतसा ॥ ३ ॥
ऊनत्रिंशे कलं वेणोः श्रुत्वा गत्वा व्रजास्त्रियः ॥
वनं वादादिकं प्रापुः कान्तेनेति निगद्यते ॥ ४ ॥

इन्द्रवरुणादिविजये किं चित्रं, ब्रह्मादिजयसंरूढदर्पः कामोऽपि भगवता पराजित इति ख्यापनाय क्रमप्राप्तां भगवत्कृतां रासक्रीडां वर्णयितुमुपक्रमते ।

श्रीशुक उवाच ।

भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः ॥
वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः ॥ १ ॥

भगवानपीति ॥ कामकृतो हि ब्रह्मादिपराजयः प्रसिद्धः । तदुक्तम्—अहल्यायां जारः सुरपतिरभूदात्मतनयां प्रजानाथोऽयासी-द्भजत गुरोरिन्दुरबलाम् * इति प्रायः को वा न पदमपथेऽकार्यत मया श्रमो मद्बाणानां क इव भुवनोन्माथविधिष्विति । ये तु रूपादिकं विहाय तपश्चर्यायां रता, न तैः कामः पराजितः, किन्तु तस्मात् पलाय्य ते गताः । श्रीकृष्णस्तु शतकोटियूथगोपाङ्गनारूपसैन्यवता कामेन युद्ध्यमानोऽपि आत्मन्यवरुद्धसौरतत्वाद् विजतवानित्यनेन ग्रन्थेन ख्याप्यते । योगमायामुपाश्रितः, आत्मारामोऽप्यरीरमत्, साक्षान्मन्मथमन्मथः, आत्मन्यवरुद्धसौरत इत्यादिषु स्वातन्त्र्याभिधानात् । रासलीलोत्सवश्च नववर्षवयस्त्वे सत्याऽऽश्विनपूर्णिमायाम् । यतः सप्तवर्षे वयसि वर्तमाने भगवति कुमारिकाणां व्रतचर्य्या । ततः सप्तमवर्षोत्तरकार्तिकस्यामावास्यायाम् इन्द्रमखभङ्गः । तच्छुक्लप्रतिपदि गोवर्द्धनमखोत्सवः । द्वितीयायां भ्रातृभोजनोत्सवः । तृतीयाप्रभृति इन्द्रकृतोपद्रवमवलोक्य नवमीपर्यन्तं गोवर्द्धनधारणम् । दशम्यां गोपानां विस्मयकथाबाहुल्यम् । एकादश्यां गोविन्दाभिषेकः । द्वादश्यां वरुणलोकगमनादि । पौर्णमास्यां नन्दादीनां ब्रह्महृदनयनादि । ततश्च शरदः समाप्तिरिति । शुक उवाचेत्यनेन कोमलालापवच्छुकोक्तिरूपमिदं भागवतं कोमलचित्ततयैव श्रोतव्यं चित्ताकर्षकं च । तत्रापि रासक्रीडोत्सववर्णनं सर्वस्यापि श्रीमद्भागवतस्य सारभूतमिति ध्वनितम् । परमहंसशिरोमणिना श्रीशुकेन परमप्रेम्णा वर्णितोऽयं रासक्रीडोत्सवोऽतः परमहंसैरप्यादरेण श्रोतव्य इत्यपि सूचितम् । भगवानपि, ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः * ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गनेत्युक्तषड्विधैश्वर्यवानपि रन्तुं मनश्चक्रे शृङ्गाररसालम्बनशिरोमणिभूतानां शतकोटियूथविलासिनीनां सौ-

स्वर्यसौकुमार्यसौन्दर्याऽधराऽमृतसौरभ्याणि परमशोभनानि स्वीयश्रोत्रादीन्द्रियैरनुभवितुं स्वांयानि तानि तदीयश्रोत्रादिभिस्ता अनुभावयितुमिच्छितवान्।एतावन्तं कालं गोप्य एव वर्द्धमानानुरागचलचित्ततया रन्तुं मनश्चक्रिरे । भगवाँस्तु वयोविशेषं प्रतीक्षमाणो न चक्रे, संप्रति प्राप्तवयास्ताः, मयेमा रंस्यथ क्षपा इति पूर्वप्रतिज्ञाता रात्रीश्च वीक्ष्य भगवानपि रन्तुं मनश्चक्र इत्यपेरर्थः । पूर्णाऽपि ता रात्रीरुद्दीपनत्वेनानुभूय किमुत गोपीर्वीक्ष्येति तासां सौन्दर्य्यप्रेमाद्यातिशयो व्यज्यते । यद्वा ता इति प्रसिद्धार्थकतत्पदप्रयोगान्नानागुणवतीरिति तासामुत्कर्षो बोधितः । ता इति बहुवचननिर्देशाद्, ब्रह्मरात्र उपावृत्त इति वक्ष्यमाणत्वाच्चैकस्यामपि रात्र्यां तादृशविलासानुकूलासंख्यातरात्रीः स्वसंकल्पिता वीक्ष्येति बोधितम् । तथाच तादृशरमणाऽनुकूलाः कोटिकोटिरात्रीः स्वसंकल्पिता वीक्ष्येत्यत्र तत्त्वम् । अन्यथा (पूर्णाया) राकारात्रेश्चन्द्रात् पूर्वमप्रवेशाच्चन्द्रोदयस्य च वीक्षणानन्तरं वर्ण्यमानत्वाद् वीक्ष्येत्युक्तिरसंगता स्यात् । अथ वृन्दावनशोभामप्युद्दीपिकामाह ॥ शरदिति ॥ शरदा हेतुभूतया । यद्वा शरदेति टाबन्तत्वात् । शरदायामपि उत्फुल्ला मल्लिका यासु । उत्फुल्लाश्च ता मल्लिकाश्चेति वा । एतद्व्याख्यात्, कुन्दस्रजः कुलपतेरिह वाति गन्धः, रेमे तत्तरलानन्दिकमलामोदवायुनेति वक्ष्यमाणत्वाच्च वृन्दावनमाहात्म्यात् सर्वकाले सर्वपुष्पविकासो बोधितः । रन्तुं मनश्चक्रे इत्युक्त्या आन्तरमिदं रमणं, न तु बाह्यं नरविडम्बनमात्रमिति सूचितम् । अन्यथा, रेमे, रन्तुमारेभे इति वा ब्रूयात्। तत्रापि, चक्र इत्यात्मनेपदप्रयोगात् तदपि न गोपिकानुरोधेन तदर्थमेवापि तु स्वस्य सुखार्थमपीतिसूचयति।यथा, आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे*कुर्व-

न्यहैतुकीं भक्तिमित्थंभूतगुणो हरिरित्यत्रात्मारामाणामपि मुनीनां चित्ताकर्षणसामर्थ्यवद् गुणाकृष्टचेतसां भगवद्गुणेषु रमणमुक्तम् । तद्वद्गोपाङ्गनानां तादृशगुणाकृष्टचेतसो भगवतोऽपि तासु रमणमुक्तम् । ननु स्वल्पकाले कथमनल्पकालसमावेशः, कथञ्च स्वल्पदेशे तावद्यूथगोपाङ्गनाक्रीडनसंभवः, कथञ्चैकस्याऽसंख्यातगोपिकाभिरभिरमणसम्भवः, कथञ्च अमनस्कभगवतस्तद्रमणासक्तमनस्त्वमित्यादिशङ्काजालं, तन्निरासायाह ॥ योगमायामुपाश्रित इति॥ अघटितघटनापटीयसीं, मायां तु प्रकृतिं विद्यात्, मम मायादुरत्ययेत्यादिनोक्तां योगमायाम् उपाश्रितः । स्वाश्रितां तां कर्तव्यलीलोपकरणसाधनत्वेनाश्रितवान् । यद्वा योगः स्वेन गोपीनां संयोगस्तदर्थं मायां कृपाम् उप आधिक्येनाश्रितः। यद्वा स्वस्मिन् वात्सल्यरसाक्रान्तचेतसां नन्दादीनां तया तया लीलया आनन्दसागरे निमज्जितवान् । पुनश्च ब्रह्महृदप्रवेशादिना स्वस्वरूपानन्दप्राप्तिपर्यन्तामप्यवस्थां दर्शितवान् । यास्तु सखीभावमाश्रित्य चिरकालमारभ्य स्वेन रमणोत्कटोत्कण्ठावत्यस्तासां गोपङ्गनानां मनोरथपूर्तिं कथं कृतवानित्यपेक्षायामाह॥ भवानपीति ॥ यद्यप्यासौ पूर्णकामस्तथापि पूर्वकोटिजन्मस्वऽस्मिँश्चजन्मनि उपाश्रितो रमणार्थमेव सम्यगाराधितो यस्ताभिः स, तास्तासामभिलषितवितरणानुरूपा रात्रीश्चक्रे, एकस्यां रजन्यामसंख्यातरजनीप्रदर्शनसङ्कल्पं कृतवान् । कथंभूताः ? शरदोत्फुल्लमल्लिकाः । यासु शरदोत्फुल्लमल्लिकाश्च चक्रे इति वा । मल्लिकेति पुष्पान्तराणामप्युपलक्षणम् । तथा अमना अपि भगवान् रमणानुरूपं मनोऽपि चक्रे । इदञ्च सर्वम् अघटितघटनापटीयस्या स्वयोगमायाशक्त्या सम्पादितवानित्याशयेनाह । योगमायां वीक्ष्य सर्वसम्पादनाय कटाक्षेणोद्बोध्य । मम योगमायाशक्त्या एतासां मनोरथपूर्तिर्भविष्यति, तत्र मम

का हानिरित्याशयेन ता वीक्ष्येति वा। यद्वा तासां योगार्थं मायां वीक्ष्य । तथाच मायिकेन संयोगेन नास्ति मम पूर्णकामत्वादिस्वरूपहानिरिति भावः । यद्वा भगवानपि योगमायामुपाश्रितो योगमायाम् अधिष्ठाय प्रकटीकृतनन्दनविग्रहस्ताः स्वस्मिन्नासक्तस्वान्ता गोपीर्वीक्ष्यालोच्य तन्मनोरथपूर्त्यर्थं रात्र्यादिकं चक्र इत्यर्थः।

यद्वा ता रात्रीर्वीक्ष्य तासां मनश्चक्रे रन्तुं योगमायामधिष्ठाय स्थितः । योगमायया. कृष्णेन सार्द्धं सम्यग्रमणं कृतवत्यो वयमिति तासां मनस्सु दृढतरां प्रतीतिमुत्पादयितुं प्रवृत्त इत्यर्थः पञ्चाध्याय्यात्मकोऽयं सर्वशास्त्रसारसर्वस्वभूतो ग्रन्थ इति सूचयितुं मङ्गलाचरणार्थमादौ भगवानिति पदं प्रयुक्तम् । अत्र भक्तिशान्तिरसप्रधाने श्रीमद्भागवते पारमहंस्यां संहितायां प्रसङ्गात् परशास्त्रार्थशृङ्गाररसमनुवदता मुनीन्द्रेण स्वासिद्धान्तोऽपि गूढतया निर्दिष्टः । अत एव शृङ्गारकथापदेशेन विशेषतो निवृत्तिपरेयं पञ्चाध्यायीति श्रीधरस्वामिभिरप्युक्तम् ।

निवृत्तिमार्गसंभक्तचेतसां विदुषां मुदे ।
व्यक्तीकरोम्यहं पक्षमिमं कृष्णप्रसादतः ॥

सविशेषसुखं निखिलमपि दुःखसंभिन्नमेव । ये हि संस्पर्शजा भोगा दुःखयोनय एव ते * आद्यन्तः कौन्तेय न तेषु रमते बुध इति भगवद्वाक्यादतो विवेकवता निर्विशेषब्रह्मानन्दाविर्भावाभिलाषुकेण तत्प्रतिपित्सानिवृत्तिरेव सर्वोपायैः संपाद्येति ब्रह्मरात्र्यवच्छिन्नकालपर्यन्तं तुच्छीकृतकोटिकन्दर्पविग्रहेण भगवताऽपि रममाणानां गोपाङ्गनानां दुःखनिवृत्तिस्तृप्तिश्च न संपन्नेति वर्णयता भगवता मुनिना सूचितम्।तदुक्तं—न जातु कामः कामानामुपभोगेन शाम्यति * हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धत इति । एवंविधविवेकोत्पत्तियोग्ये इह जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्तनपुरः-

सरनित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन नितान्तनिर्मले स्वाऽनुग्रहपात्रेऽन्तःकरणे श्रुतिरूपस्वकान्ताभिरभिरन्तुं भगवानपि मनश्चक्रे । यमेवैष वृणुते तेन लभ्य इत्यादिश्रुत्या भगवदनुग्रहादेव श्रुत्यर्थविचारे प्रवृत्तिर्भवति, नान्यथेति भावः । भगवदनुग्रहपात्रताबोधनायाह । ता रात्रीरसंख्यातजीवजन्मसु अनुभूता अहंकारचित्तमनोबुद्धिरूपा अन्तःकरणवृत्ती रात्रीरज्ञानरूपतमोव्याप्तत्वाद् आत्मतत्त्वाऽऽवरणरूपत्वाद् रात्रिसदृशाः संप्रति शरदोत्फुल्लमल्लिकाः शरत्स्थानापन्नेन भगवदाराधनलक्षणेन निष्कामकर्मणा अन्तःकरणशुद्धिसाधनेन फुल्ला विकसिता मालत्यादिपुष्पस्थानापन्नाः शान्त्यादयो यासु ता वीक्ष्य । शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वा आत्मन्येवात्मानं पश्येदिति श्रुतेः । ननु निर्गुणस्य जातिगुणादिशब्दप्रवृत्तिनिमित्तरहितस्य श्रुतिप्रतिपाद्यत्वासम्भवात् कथं ब्रह्मणि तासां रमणमित्याशङ्क्याह । योगमायामुपाश्रित इति ॥ तथाचातन्निरसनेन निर्विशेषब्रह्मोपलब्धिलक्षणमेव तासां रमणमिति भावः ॥ १ ॥

तदैव चन्द्रमा अपि भगवद्भावमुद्दीपयन्नुदगादित्याह ।

तदोडुराजः ककुभः करैर्मुखं
प्राच्या विलिम्पन्नरुणेन शन्तमैः ॥
स चर्षणीनामुदगाच्छुचो मृजन्
प्रियः प्रियाया इव दीर्घदर्शनः ॥ २ ॥

तदेति ॥ तस्मिन्नेव क्षणे स प्रसिद्ध उडूनां नक्षत्राणां राजा चन्द्र उदगादुदयं प्राप्तः । उडुपदेन नक्षत्राणामपि तत्परिवारत्वेन उदयः सूचितः । किञ्च, मनसापि न गन्तव्याः परदाराः कदा-

चनेति निषेधमनुसंधाय महत्समक्षे लज्जया वा रमणाच्चेतसः पराद्वृत्तिमपि निराकरोदित्याशयेनाह ॥ ककुभ इति ॥ प्राच्या इन्द्राऽधिष्ठिताया दिशो मुखं शंतमैः परमसुखकरैः करैः किरणलक्षणहस्तैर्धृतेनारुणेनोदयरागेण विलिम्पन्नरुणीकुर्वन् । तथाचानया प्रवृत्त्या कृष्णमेवमुपदिशति स्म भगवाँश्चन्द्रः-भो यदुकुलावतंस, अपेतदोषशङ्क आरमणाच्चित्तं मा निवर्त्तय, मद्वंश्यत्वात् । यथाऽहं तवकुलादिपुरुषो द्विजराजस्तत्रापि पुरातनस्तत्रापि राजयक्ष्माऽऽक्रान्तस्तत्रापि परमसुन्दरानेकस्त्रीपतिः प्राच्या दिशः परस्त्रिया मुखं स्पृशन्नेव स्वयं तस्यामनुरक्तस्तामप्यनुरागवतीं करोमि तद्वत् त्वमपि मद्वंश्यस्तत्रापि नववयास्तत्राप्यविवाहितत्वात् स्वभार्यारहितस्तत्रापि सर्वदोषविनिर्मुक्तपरमसुन्दरविग्रहस्तत्रापि सम्प्रति गोपजातिनिविष्टो यथेष्टं गोपाङ्गनाभिरभिरमणं कुरु, नास्ति तव दोषगन्धोऽपि । यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः * स यत् प्रमाणं कुरुते लोकस्तदनुवर्तत इति न्यायाच्चु, तेजीयसो न दोषायेत्युक्तत्वादेतावता नास्ति मम दोषसंपर्कस्तत्र त्वतितेजस्वित्वात् सुतरामित्यपि स एव बोधितवानित्याशयेनाह ॥ चर्षणीनामिति ॥ अर्यम्णा मातृकापत्नी तयोश्चर्षणयः सुताः * यत्र वै मानुषी जातिर्ब्रह्मणा परिकल्पितेति षष्ठस्कन्धोक्तमानुषजातीनां शुचः शरदर्क्कजसंतापदुःखानि मृजन् अपनयन् । तथाच समस्तजनतापनिवर्तकस्य नास्ति तादृशदोषजनिततापावाप्तिसम्भावनेति भावः । तत्रानुकूलं दृष्टान्तमाह ॥ प्रिय इति ॥ दीर्घकालेन दर्शनं यस्य स प्रियः स्वरमणः प्रियायाः स्वरमण्या मुखम् अरुणेनानुरागेण स्वकरधृतेन कुङ्कुमेन च यथा लिम्पति तद्वत् । यद्वा मनःकरणसमकालमेव चन्द्रोऽपि तादृशाऽसंख्यातरात्र्यनुकूल एवोत्पादित इत्याह ॥ तदेति ॥ तदा तस्मिन्नेव क्षणे स्वसंकल्पितश्चन्द्र उदगात् । स च

किञ्चिद्विज्ञापयन्निवोदगादित्याशयेनाह ॥ ककुभ इति ॥ तथाच, चन्द्रमा मनसो जात इति श्रुतेस्त्वत्त उत्पन्नस्य त्वत्प्रसादलब्ध-प्रतापस्य ममापि नास्त्येवंविधकर्मलेपः । तत्र तु सर्वेश्वरस्य कुत-स्त्योऽतः स्वभक्तानामासां मनोरथं पूरयेति बोधयन्निवेति भावः । किञ्च, सर्वसन्तापनिवृत्त्यर्थं प्रवृत्तौ लोकदृष्ट्या प्रतीयमानोऽपि दोषो न संस्पृश्यत इत्यपि विज्ञापयन्नित्याशयेनाह॥ चर्षणीनामि-ति ॥ यद्वा यथा मम प्राच्याः ककुभः सम्बन्धः परदारसंपर्कवत् प्रतिभाति, न तु वस्तुतस्तत्सम्पर्कः, किन्तु सर्वजनतापनिवृत्त्यर्थं प्राच्यां दिशि समुदयमात्रं, तथा भगवतोऽपि स्वजनसन्तापनिरासा-ऽर्थं कृतावतारस्य तत्तल्लीलया भक्तसुखसंपादकप्रवृत्तौ मूढजनानां लौकिकरमणादिप्रतीतावपि नास्ति किञ्चिद् बाधकमिति विज्ञाप-यन्निवोदगादित्याशयेनाह ॥ ककुभ इति ॥

निवृत्तिपक्षे—तदा भगवत्प्रसादोदयक्षण एवोद्भूतां तत्स्थाना-पन्नानां शुभवृत्तीनां राजा विवेकाख्यश्चन्द्र उदगात् । किं कुर्व-न्नित्यपेक्षायामाह ॥ ककुभ इति ॥ प्राच्या अनेकजन्मप्रवृत्ताया अविवेकदशाया मुखं जाड्यलक्षणं करस्थानापन्नैस्तत्तद्‌विचारैः संपादितेनारुणेन तत्त्वंपदार्थावबोधलक्षणेन रागेणलिम्पन् तिरोहितं कुर्वन् । अत एव चर्षणीनामधिकारिजनानां तत्तद्वस्तुविषयकान् मृजन् अपनयन् । तत्र दृष्टान्तमाह ॥ प्रिय इति ॥ २ ॥

तथा विज्ञापयन्तं चन्द्रमवलोक्य यत् कृतवाँस्तदाह ॥

दृष्ट्वा कुमुद्वन्तमखण्डमण्डलं
रमाननाभं नवकुङ्कुमारुणम् ॥
वनं च तत्कोमलगोभिरञ्जितं
जगौ कलं वामदृशां मनोहरम् ॥ ३ ॥

दृष्ट्वेति ॥ कुमुदेऽपि कुमुत् प्रोक्तमिति विश्वात् कुमुत् कुमुदं विकासनीयत्वेन विद्यतेऽस्येति । यथा स्वभक्ताः कुमुदिन्यः समुदयं प्राप्तेन मया विकासं प्रापितास्तथा स्वभक्ता गोप्यस्त्वयाऽपि विकासनीयाः । उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् * विभावयन् समृद्धीनां फलं सुहृदनुग्रहमित्युक्तेरिति विज्ञापयन्तमिव । पुनश्चाऽखण्डं मण्डलं विम्बं यस्य तम् । परोकारशीलस्य काऽपि हानिर्न भवतीति सूचयन्तमिव । अनेन राकेति ध्वनितम् । पुनश्च रमाया लक्ष्म्या आननाऽऽभावद् आभा कान्तिर्यस्य । तद्भ्रातृत्वात् । तथाच लक्ष्म्याः स्मारकत्वेन रमणेच्छामुद्दीपयन्तमिव । स्वभार्याभ्रातृत्वाच्छ्यालकस्य मम सन्निधौ संकोचो न विधेय इति वा सूचयन्तमिव । यद्वा, सर्वलक्ष्मीः सर्वकान्तिः सर्वसंमोहिनी परा * इति स्मृतेः, रमा श्रीराधा । रमन्ते रमयन्तीति वा रमा गोप्यश्च तासामाननस्याभेवाभा यस्य तम् । स्वदर्शनेन ताः स्मृतिपथमारोहयन्तमिव । तथा उदयरागव्याप्तत्वान्नवकुङ्कुमापिण्डवदरुणं विवाहसमये यल्लक्ष्म्यादिमुखं तत्तुल्यत्वान्नूतनकाममुद्दीपयन्तमिव । वनं च तस्य तथाभूतस्य चन्द्रस्य कोमलैर्गोभिः किरणैरभिरञ्जितं, गोभिः अञ्जितं व्याप्तमिति वा । यद्वा भावे क्तः । तत्कोमलगोभिररभिञ्जनं यत्र । किरणानां सुधादोग्धृत्वं, वन एव पाल्यमानत्वं च ज्ञापयितुं गोपदम् । तत्रापि शीतबाधाकरत्वनिरासाय कोमलपदम् । तथाच यथोक्तविशेषणविशिष्टं चन्द्रं रमणयोग्यं वनं च दृष्ट्वा, कलं जगौ ॥ अत्र विशेष्यस्याऽनुक्त्या आत्मा मुखं वापि विशेष्यं ज्ञातव्यम् । अस्मिन् पक्षे, कोः पृथिव्या अपि मुत् कर्तव्यत्वेन विद्यते यस्य तमात्मानम् । मुखपक्षे कुमुद्वदिति लिङ्गविपरिणामः । अनेन भूचरसुखार्थं कृतावतारेण मया मदासक्तमानसा गोप्योऽपि मयाऽभिरमणेन सुखिन्यो विधेया इति ध्वनि-

तम् । पुनश्चाखण्डमन्यूनानतिरिक्तं मण्डलं नासाकर्णाद्यङ्गचक्रं यस्मिन् । अनेन गोप्यर्थमेव तुच्छीकृतकोटिकन्दर्पविग्रहस्य प्रादुष्कृतत्वात् ता अवश्यं रमयितव्या इति सूचितम् । पुनश्च रमाणां तासामाननानामाभा यस्मिन् । अनेन स्वस्मिंस्तासां खचितत्वदर्शनेन तत्फलप्रदानस्यावश्यकत्वं सूचितम् । पुनश्च ताभिर्लिप्तेन नवकुङ्कुमेनारुणम् । यद्वा, अत एव तन्मुखलिप्तेन नवकुङ्कुमेन प्रतिबिम्बितेनारुणम् । अनेन स्वविग्रहस्य तद्विग्रहगतरागरञ्जितत्वदर्शनेन तन्मनोगतरागेण स्वमनसोऽपि रञ्जितत्वमावश्यकमिति ध्वनितम् । तद्विकसितकुसुमाद्यलङ्कृतम् । पुनश्च स्वस्य स्वसुखस्य वा कोमलगोभिरभिरञ्जितम् । एवमुद्दीपनालम्बनविभावौ दृष्ट्वा, कलम्, अव्यक्तमधुराक्षरं यथा स्यात् तथा, जगौ गानं कृतवान् । तदपि वेणुनेति ज्ञातव्यम् । कलपदाऽमृतवेणुगीतेति वक्ष्यमाणात् । तत्र मधुरमिति मनोहरणशक्तिमत् । अव्यक्तमिति सर्वासां स्वस्वाह्लानज्ञानोत्पादकमन्येषां तदाह्लानानिश्चायकं चेति बोधितम् । मधुरत्वात् सर्वाकर्षणं वारयति ॥ वामेति ॥ वामा मनोहरा दृशः कटाक्षा यासां, वामं सुन्दरं दृग् दर्शनं यासामिति वा । तासां युवतीनां सौन्दर्य्यादिगुणगणालंकृतानामेव मनोहरं यथा स्यात् तथा । गायन्तं स्त्रियः कामयन्त इति श्रुतेः । वामाः स्वस्मिन् कुटिला दृशो यासां तासां मनोहरमिति श्लेषेण सर्वदा स्वस्मिन् कुटिलमेव पश्यन्तीनां सर्वेन्द्रियप्रवर्तकमनस आकर्षणेन तथा दर्शनाभावाय चेत्यपि द्रष्टव्यम् । कलं वामदृशामित्यत्र श्लेषान्तरेण कामबिजं, क्लीम्— इत्याकारकं जगावित्यपि ज्ञेयम् । तथाहि । कलं ककारलकारौ । वामदृशेति टाबन्तम् । वामदृशा ईकारः । मन्त्रशास्त्रे वामदृगिति चतुर्थस्वरस्य संज्ञा । ईकारश्च म् च वामदृशामिति समाहारद्वन्द्वे अमो लुकि रूपम् । तथाच ईमिति च तेन क्लीमिति सिद्धम्

निवृत्तिपक्षे, अथ भगवत्कृतमनुग्रहान्तरं दर्शयति ॥ दृष्ट्वेति ॥ कुत्सिता अनित्याऽशुचिविषयप्राप्तिजन्या मुत् कुमुद्, न कुमुद् अकुमुत् = तदभावः कर्तव्यत्वेन विद्यते यस्य विवेकलक्षणचन्द्रस्य तम् । तत्राप्यखण्डं मण्डलं वैराग्यशान्त्यादिसाधनसमूहो यस्य तं पूर्णं वैराग्यादियुक्तम् । यतो, रमाननाभं रमायाः संपत्प्रमदादिरूपेण परिणताया आनने मुखे अभा अदीप्तिर्यस्मात् तम् । विषयमात्रसौन्दर्यबुद्धिनिवर्तकम् । पुनश्च, नवकुङ्कुमारुणम् । पूर्वं हि अनात्मवर्ग एवानुरागः स्थितः । संप्रति नवीनेन कुङ्कुमस्थानापन्नेनात्माऽनुरागेणाऽरुणं वनं कामक्रोधाद्यनेककण्टकद्रुमाद्याक्रान्तत्वात् तत्स्थानापन्नमन्तःकरणं, संप्रति, तत्कोमलगोऽभिरञ्जितं तस्य विवेकलक्षणचन्द्रस्य कोमलैः सर्वसुखकरैस्तत्तद्विचारभेदलक्षणैः किरणैरभिरञ्जितम् यद्वा तदन्तःकरणलक्षणं वनं कोमलैस्त्यक्ताग्रहभावैः शास्त्रश्रवणसत्पादस्पर्शभगवन्मूर्तिसज्जनदर्शनभगवन्नैवेद्यास्वादनभगवच्चरणारविन्दार्पिततुलस्याघ्राणभगवन्नामस्मरणार्चनादिपरैर्गोभिरिन्द्रियैस्तज्जन्याभिर्वृत्तिभिरभिरञ्जितं शोभितं च दृष्ट्वा कलम् अनेकार्थसूचकं मधुराक्षरम्, अथाऽतो ब्रह्मजिज्ञासा, जन्माऽऽद्यस्य यतः, शास्त्रयोनित्वात्, तत्तु समन्वयादित्यादिसूत्रजातं कृष्णद्वैपायनात्मनाऽऽविर्भूय जगौ । कथं भूतं कलं, वामदृशां वामस्य परमसुन्दरस्य परमात्मनो दृग् ज्ञानं याभ्यस्ता उपनिषदः । तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुतेस्तासां परब्रह्मणि तात्पर्याऽवधारणकारणम् । वामा सुन्दरा दृग् ज्ञानं यासां तासामिति वा । यद्वा कुटिला दृशो यासामस्पष्टब्रह्मलिङ्गभेदाद्यनुवादिकानां, मनोहरं प्रत्यगभिन्ने ब्रह्मणि तात्पर्य्यापहरणपरम् । यद्वा कुटिलज्ञानानां वादिनां मनोहरं तदभिप्रेतार्थनिरासकरम् । यद्वा वामदृशां शोभनज्ञानवतां विवेकिनां वेदान्तशास्त्राधिकारिणां सतां मनोहरं मनो-

ज्ञम्, अमनोज्ञं तु विषयासक्तचेतसाम् । यद्वा, आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, सोऽन्वेष्टव्यः स विजिज्ञासितव्य इत्यादिरूपं कलं जगौ । कीदृशं ? वामदृशामनात्मपदपदार्थविषयाणां कुटिलवृत्तीनां मनोहरम् । तत्कारणभूताऽनात्मप्रवणमनस उपशामकम् । यद्वा यथोक्तविवेकिनां मनोज्ञमित्यर्थः ॥ ३ ॥

अथ तादृशगानानन्तरं यद् वृत्तं तदाह

निशम्य गीतं तदनङ्गवर्धनं
व्रजस्त्रियः कृष्णगृहीतमानसाः ॥
आजग्मुरन्योन्यमलक्षितोद्यमाः
स यत्र कान्तो जवलोलकुण्डलाः ॥ ४ ॥

निशम्येति॥तद् गीतमनङ्गस्य कामस्य वर्द्धनम् अङ्कुरितस्य कामस्य सर्वाङ्गसंपूर्णतापादकम्॥एतेन तस्याऽमृतसेकरूपत्वं सूचितम् । यद्वा । तद् गीतमनङ्गस्य सर्वाङ्गरहितस्यानङ्कुरितस्यापि कामस्य वर्द्धनं = तत्क्षणमेवोत्पाद्य अभिवृद्धिपर्यन्तं नयनसमर्थम् । तास्तु व्रजस्त्रियश्चिरकालमारभ्य तद्विषयककामाविष्टस्वान्तास्तादृशं गीतं निशम्याऽऽकर्ण्य कलगीतलक्षणसूत्रगुम्फिताः पाञ्चालिका इवाऽऽजग्मुः । जग्मुरिति वक्तव्ये स्वस्य कृष्णसन्निधानावेशादाऽऽजग्मुरित्युक्तम्॥ननु किं सर्वा अपि व्रजस्त्रिय आजग्मुस्तत्राप्यन्योन्यमऽलक्षितगमनविरोधइतिचेत्तत्राह॥कृष्णगृहीतमानसाः॥कृष्णेनैव पूर्वमेव गृहीतं मानसं मनोयासां तास्तत्राप्यन्योन्यमलक्षितो भगवतः पतित्वेन स्वीकारलक्षण उद्यमो यासां ताः । प्रत्येकमेव भगवन्तं पतित्वेनाङ्गीकृतवत्यः । संभ्रमः स्नेहमाख्यातीत्युक्तत्वात् स्नेह-

ख्यापकं तासां संभ्रममाह ॥ जवेन लोले सकम्पे कुण्डले यासां ताः । अनेन कर्णव्यथानुसंधानाभावः सूचितः । यद्वा, मां गच्छन्तीमालक्ष्येयमपि यास्यतीति सापत्नभयात् कृष्णगृहीतमानसत्वेन विचाराऽस्फूर्तेर्वा अन्योऽन्यमलक्षितगमनोद्योगाः । अत एव जवेन चञ्चलकर्णाभरणाः । कुत्रेत्यत आह ॥ सः पूर्वमुपागतः कान्तो यत्र स्थितस्तत्र । यद्वा चोरचक्रवर्तिना श्रीकृष्णेन गृहीतानि मानसानि तत्सम्बन्धीनि, धृतिस्मृतिविवेकलज्जाभीतिमत्यादीनि च यासां ता आजग्मुः । अनेन कृष्णो हि महाचोराधिराजो वेणुगीताख्यस्वभृत्यमहाचोरं व्रजे प्रेषितवाँस्तेन च व्रजाङ्गनानां विवृतकर्णद्वारेण अन्तःकरणं कोशागारंप्रविश्य धैर्यादिमहारत्नपूरितमनोमञ्जूषामपहृत्य झटित्येवानीय स्वस्वामिने दत्तां तां कृष्णात् प्रार्थयितुमिवेति सूचितम् । अत एव महाचोरं धर्तुं व्यग्रत्वात् सूचकमनआदेरपहृतत्वाद्वा अन्योऽन्यमलक्षितोद्यमाः । अत एव जवलोलकुण्डलाः । कुण्डलेति कङ्कणकिङ्किण्यादेरप्युपलक्षणम् । अनेन बाहिर्गृहस्थानापन्नस्थूलदेहस्थधान्यादिस्थानीयभूषणान्यल्पत्वबुद्ध्या चैरेण तेन नापहृतानीति ध्वनितम् ॥

निवृत्तिपक्षे एवं भगवदनुगृहीतस्य विवेकवैराग्यादिसाधनसंपन्नस्यान्तःकरणे परब्रह्मणा श्रुतिरूपकान्तानामभिरमणं सर्वतो वृत्तिनिरोधनं च संपन्नमित्याह॥निशम्येति॥तद्यथोक्तं गीतं व्रजस्त्रियः श्रुतीनां गवामवस्थितिस्थानं वेदो व्रजशब्देनाभिधीयते।तत्संबन्धिन्यः स्त्रियः श्रुतयः श्रुत्वा स कान्तः कमनीयः परमपुरुषार्थभूतः परमात्मा यत्र विवेक्यन्तःकरणलक्षणे वने वर्तते तत्र आजग्मुः । ब्रह्मप्रतिपादकत्वेन स्फूर्तिं गताः । तेषामेवानुकम्पार्थमहमज्ञानजं तमः * नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वतेति भगवद्वाक्यात् स्वभक्तान्तःकरणस्थितः श्रुतिभी रममाणस्तदज्ञानं नाश-

यतीति विज्ञायत इत्यर्थः । आजग्मुरित्युक्त्या स्वान्तःकरणवर्तिपरमात्मन्येवाजग्मुरिति सूचयति । गीतं विशिनष्टि ॥ अनङ्गवर्द्धनम् ॥ अथात आदेशो नेति नेतीत्युक्तस्य मूर्तामूर्तलक्षणाङ्गविनिर्मुक्तस्य निर्विशेषस्य ब्रह्मणो वर्द्धनमज्ञानावृतस्य तस्याज्ञाननिवर्तनेनाविर्भावकरं, यद्वा अङ्गानां देहानां वर्द्धनमसंख्यातदेहोत्पत्तिकारणमज्ञानमङ्गवर्द्धनं तद्विरोध्यनङ्गवर्द्धनम् । कथम्भूता व्रजस्त्रियः ? कृष्णेन सदानन्दस्वरूपेण परमात्मना गृहीतं मानसं तात्पर्य्यं यासां ताः कृष्णे तात्पर्येण समन्विताः । पुनश्चान्योन्यमलक्षित उद्यमः परमात्मप्रतिपादनरूपो यासां ताः । परस्पराकाङ्क्षारहिताः । प्रत्येकं स्वत एव प्रमाणभूता इति यावत् । पुनश्च जवेन लोलानि चलानि झटिति नाशोन्मुखानि कुण्डलानि आशादिरूपाः पाशा याभ्यस्ताः।विचारिताः सत्य आशु जीवात्मपाशनिवर्तिका इति यावत् । कुण्डलं कर्णभूषायां पाशेऽपि वलयेऽपि चेति मेदिनी । मनसो वृत्तयोऽपि इन्द्रियलक्षणगवां वासस्थानत्वाद्देहो व्रजशब्देनोच्यते । तदन्तरवस्थानाद् व्रजस्त्रियः, कृष्णेन गृहीतं कारणभूतं मानसं यासां ताः कृष्णासक्तमनःसम्बन्धिन्यः । यद्वा कृष्णेन गृहीतः स्वीयत्वेनाङ्गीकृतः कृष्णानुगृहीतो विवेकादिसाधनसंपन्नस्तस्य मानसा मनःसम्बन्धिन्यो, न त्वनधिकारिणः । परस्परं निरपेक्षव्यापारवशात्तत्तदिन्द्रियद्वारा निःसृत्य स्वस्वविषयप्रकाशने स्वतन्त्राः, स कान्तो यत्र वर्तते तत्र आजग्मुः । बहिर्मुखतां विहायाऽन्तर्मुखतां प्राप्तास्तदानीं जवेन झटिति लोलानि कम्पितानि कुण्डलानि पाशा याभ्यस्ताः । समानमन्यत् ॥ ४ ॥

आजग्मुरित्युक्तावपि प्रतिबन्धकानां तत्तद्व्यापाराणां सत्त्वात् कथं स्वस्वगृहात् तासां निःसरणमित्यपेक्षायां प्रेष्ठमुचकशब्दश्रवणमात्रेण तत्प्रवणमानसानां तत्क्षणमेव त्रैवर्गिककर्मनि-

वृत्तिर्जातेति सूचयँस्तासां निर्गमनप्रकारमाह ॥

दुहन्त्योऽभिययुः काश्चिद्दोहं हि हित्वा समुत्सुकाः ॥
पयोऽधिश्रित्य संयावमनुद्वास्यापरा ययुः ॥ ५ ॥
परिवेषयन्त्यस्तद्धित्वा पाययन्त्यः शिशून् पयः ॥
शुश्रूषन्त्यः पतीन् काश्चिदश्नन्त्योऽपास्य भोजनम्॥ ६॥
लिम्पन्त्यः प्रमृजन्त्योऽन्या अञ्जन्त्यः काश्च लोचने॥
व्यत्यस्तवस्त्राभरणाः काश्चित् कृष्णान्तिकं ययुः॥७॥

दुहन्त्य इति ॥ दुहन्त्यो दोहयन्त्यस्तत्क्रियामध्ये एव दोहं दोहनं हित्वा काश्चिद् अभिययुः वेणुगीतकृतप्रेष्ठाभिमुखं ययुः । यद्वा दोहनपात्रं गृहीत्वा काश्चित् स्थितास्तत्समये गीते श्रुते तत्पात्रं विहायाभिययुः । यद्वा दोहनानन्तरं दुग्धपात्रं गृहीत्वा काश्चित् स्थितास्तत्क्षणे वेणुगीते श्रुते तत् त्यक्त्वाऽभिययुः । काश्चित् स्थालीस्थं पयश्चुल्ल्यामधिश्रित्य तत्क्वाथार्थं तदधिसेचननिवृत्त्यर्थं च तत्सन्निधौ स्थितास्तत्समये वेणुगीतमन्तःप्रविष्टं, ततस्तत्क्वाथमप्रतीक्षमाणास्तद्रक्षणं विहायाभिययुः । अपराः संयावं पक्वं गोधूमकणान्नमनुद्वास्य तन्नाशमप्यननुसन्धायाभिययुः । यतः समुत्सुका उत्कटोत्कण्ठावत्यस्तद्विलम्बसहनासमर्थाः । एतेन स्वजातिधर्मं विहायाभिययुरित्युक्तम् ॥ ॥ अथ स्त्रीमात्रधर्मत्यागमाह ।

परिवेषयन्त्यो बन्धुभृत्याद्यग्रे परिवेषणं कुर्वत्यस्तत्परिवेषणं विहाय काश्चिदभिययुः । अतिस्निग्धान् शिशून् पयो दुग्धं स्तन्यमितरद् वा पाययन्त्यस्तत्पायनं हित्वा काश्चिदभिययुः । पतीन् सर्वथा सेवनीयान् शुश्रूषन्त्यः पादप्रक्षालनादिसेवां वा

कुर्वत्यस्तां सेवां विहायाभिययुः । काश्चिद् भोजनं कुर्वत्यो भोजनं त्यक्त्वा अनाचान्ता एवाभिमुखं ययुः । कृष्णान्तिकं ययुरित्युत्तरत्र चान्वयः । एतेन बन्धुभृत्यत्यागः, अतिस्निग्धत्यागः, स्वधर्मत्यागः, स्वदेहपोषणत्यागश्चोक्तः ॥

काश्चिचन्दनकुङ्कुमादिना भगवदङ्गसङ्गसम्भावनयाङ्गरागं कुर्वत्योऽप्युत्कण्ठया तल्लेपनं हित्वा आकर्षकस्य प्रेष्ठस्य समीपं ययुः । अन्याः प्रमृजन्त्यः अङ्गोद्वर्तनादिकं कुर्वत्यः । गृहं वा लिम्पन्त्यः प्रमृजन्त्य इति वा पात्रभूषणादि वा प्रमृजन्त्यः । काश्चिल्लोचने अञ्जनेन शोभिते कुर्वत्यः । अनेनावश्यकदेहवेषादित्याग उक्तः । कासाञ्चिद् गमनत्वरावेशवशाद् देहावयवविशेषाऽनुसन्धानाभावमाह ॥ व्यत्यस्तेति ॥ स्थानतः स्वरूपतश्चोर्ध्वाधोधारणेन विपर्ययं प्राप्तानि वस्त्राभरणानि यासां ताः । वल्लभप्राप्तिवेलायां मदनावेशसंभ्रमात् * विभ्रमो हारमाल्यादिभूषास्थानविपर्य्यय इत्युक्तो विभ्रमाख्योऽनुभावोऽयम् । अनेन भगवत्तुष्ट्यर्थं कर्म तदासक्तचेतसामन्यथाकृतमपि फलत्येवेति ध्वनितम् ॥

निवृत्तिपक्षे आगमनप्रकाराकाङ्क्षायामादौ, तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन, सर्वापेक्षा च यज्ञादिश्रुतेरिति श्रुतिसूत्राभ्यां सर्वकर्मणामिव संयोगपृथक्त्वन्यायेन तत्प्रतिपादकश्रुतीनामपि परमात्माभिमुख्यमाह । दुहन्त्य इति । जुहुयाद् यजेद्दद्यादित्यादिश्रुतयस्तत्तत्कर्मफलप्राप्तिं प्रतिपादयन्त्यो दोहं तत्फलं हित्वा तत्प्रतिपादने मुख्यं तात्पर्यं विहायाभिययुः । ब्रह्मणि समन्वयं गन्तुं प्रवृत्ताः । सर्वे वेदा यत्पदमामनन्तीत्यादिश्रुतेः । काश्चित्तु समुत्सुकाः, यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापकर्म न श्लिष्यते तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्त इत्याद्याः श्रुतयः । पयः-

स्थानीयं क्रियमाणं सञ्चितं च कर्माधिश्रित्य तत्परिपाकं तद्भोगपर्यन्तप्रतीक्षानिरासं प्रतिपाद्याभिययुः । तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्य इत्याद्या, अपराः परिपक्वगोधूमकणान्नस्थानीयं प्रारब्धकर्म अनुद्रास्य भोगं विना तत्क्षयाभावं प्रतिपाद्य, अपरा—सूर्याय जुष्टं निर्वपामि अग्नये जुष्टं निर्वपामीत्याद्यास्तत्तद्धविः परिवेषयन्त्यस्तत्र तात्पर्यं हित्वा, तथा अपरा—अक्षय्यं वै चातुर्मास्ययाजिनः सुकृतं भवति, अपाम सोमममृता अभूमेत्याद्याः, शिशून् अज्ञान्, पयःस्थानीयं कर्मफलमक्षयत्वेन प्रतिपादयन्त्यस्तत्र तात्पर्य्यं हित्वा । यद्वा, सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरस इत्याद्याः, परिवेषयन्त्यः, ऋतं पिबन्तौ सुकृतस्य लोके इत्याद्याः पयःस्थानीयं सुकृतफलपानं चेतनकर्तृकं प्रतिपादन्त्यः, काश्चिव, स होवाच प्राणोऽहमस्मि प्रज्ञात्मानं मामायुरमृतमित्युपास्वेत्याद्याः पतीन् स्वर्गादिपतीन् इन्द्रादीन् प्रतिपादयन्त्यस्तत्प्रतिपादनतात्पर्य्यं हित्वा, काश्चित्तु, यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स इत्याद्या अन्यादिकर्तृकाऽशनं प्रतिपादयन्त्यो भोजनं मृत्य्वादिरूपमपास्य तत्प्रतिपादनं विहाय, तथा अन्याः, यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्तीत्याद्याः, लिम्पन्त्यो लेपनमध्यारोपं प्रतिपादयन्त्यः । अन्या, अथात आदेशो नेति नेति, नेह नानास्ति किञ्चन, अस्थूलमनण्वित्याद्याः प्रमृजन्त्यः प्रकर्षेण मार्ज्जनमपवादं प्रतिपादयन्त्यः । काश्चन, अनीशया शोचति मुह्यमानः, यः सर्वज्ञः सर्ववित् सर्वस्य वशी सर्वस्येशान इत्याद्या, लोचनस्थानीये जीवेशचैतन्ये अञ्जयन्त्य उपाधिमत्तया प्रतिपादन्त्यः । काश्चित्तु, त्वं वा अहमस्मि भगवो देवते, अहं वै त्वमसि, तत्त्वमसि, अहं ब्रह्मास्मीत्याद्याः, व्यत्यस्तवस्त्राऽऽभरणाः

स्वस्वरूपाच्छादकम्—अहं कर्तेत्यादिप्रतीत्यापादकं जीवत्वं वस्त्रस्थानीयम् । ऐश्वर्य्याद्यलंकृतिप्रतीत्यापादकमीश्वरत्वमाभरणस्थानीयम् । व्यस्ते व्यतिहारेण प्रतिपादिते वस्त्राभरणे याभिस्ताः । यद्वा व्यस्तौ सम्यक्परिक्षिप्तौ वस्त्राभरणस्थानीयौ आवरणविक्षेपौ याभिस्ताः । वृत्तयोऽपि बहिर्मुखतां विहायान्तर्मुखा जाता इत्यपि द्रष्टव्यम् ॥ ५ ॥ ६ ॥ ७ ॥

ननु, रक्षेत् कन्यां पिता विन्नां पतिः पुत्रस्तु वार्द्धके * अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित् स्त्रिय, इत्युक्तानां रक्षकाणां विघ्नभूतानां सत्त्वे कथं कृष्णान्तिकं ययुरित्याशङ्क्य, त्वयाऽभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्द्धसु प्रभो * इत्युक्तत्वात् कृष्णाकृष्टचेतसां न विघ्नाः प्रभवन्तीत्याशयेनाह ।

ता वार्यमाणाः पितृभिः पतिभिर्भ्रातृबन्धुभिः ॥
गोविन्दापहृतात्मानो न न्यवर्तन्त मोहिताः ॥ ८ ॥

ता इति ॥ तत्र चतुर्विधा गोप्यः पद्मपुराणेऽभिहिताः । तत्र गोपकन्याः काश्चिन्नित्यसिद्धाः । काश्चित्साधनसिद्धाः ।

तत्र नित्यसिद्धा ह्लादिनीशक्तिरूपाः । आनन्दचिन्मयरसप्रतिभाविताभिस्ताभिरिति * ब्रह्मसंहितायामुक्तत्वात् । ह्लादिनी या महाशक्तिरिति * बृहद्गौतमीयाच्च । तथाच सच्चिदानन्दघनः परमात्मा गोपालरूपमसंख्यातगोपालिकारूपं चादाय क्रीडार्थं प्रकटित गोलोके क्रीडति । स चात्र ताभिः सार्द्धमवतीर्णस्ततस्तासां नित्यसिद्धत्वादिकमुच्यते । द्वितीयास्तु काश्चिद् गोपीजनवल्लभोपासनया प्राप्तगोपीभावा गोलोकं प्राप्य भगवता लब्धक्रीडा अत्रावतीर्णाः । काश्चित् सम्प्रति गोकुले एव प्राप्तगोपीभावा-

स्ताः पूर्वोपासनकात्यायिनीव्रताचरणादिसाधनसिद्धत्वात् साधनसिद्धाः । श्रुत्यादयस्तु सर्वा अपि साधनसिद्धा एव । साधनं च प्रार्थनादि । तदुक्तं बृहद्वामनपुराणे । कन्दर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः * कामिनीभावमासाद्य स्मरक्षुब्धान्यसंशयः * यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिकाः * भजन्ति रमणं मत्वा चिकीर्षाऽजनिता तथेति ऋषीणां श्रीमद्रामचन्द्रप्रसादाद् गोपिकाजन्मप्राप्तिरुक्ता । पाद्मोत्तरखण्डे, पुरा महर्षयः सर्वे दण्डकारण्यवासिनः * दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन् स्वविग्रहम् * ते सर्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले * हरिं सम्प्राप्य कामेन ततो मुक्ता भवार्णवादिति । श्रीमद्राममवलोक्य स्वोपास्यगोपालविग्रहं हरिं स्मृत्वा तमेव भोक्तुमिच्छावतां लज्जया तदप्रकटवतां कल्पतरोरिवादत्तापि श्रीरामादभीष्टसिद्धिर्जातेत्यर्थः । सम्भवन्तु सुरस्त्रिय * इति प्राग्भवीयभगवदाराधनलब्धब्रह्माज्ञयावतीर्णत्वाद् देवाङ्गनानां साधनसिद्धता । तत्र, नैते सुरेशा ऋषयो नचैत * इत्युक्तत्वात् सुराणामृषीणां च गोपालादिरूपेणावतीर्णत्वाद्देवाङ्गनानां स्वपतिभिर्देवैर्विवाहादिकम् । ऋषिचरीणां तु ऋषीणां दम्पतीरूपेणावतीर्णत्वात् स्वस्वरूपभूतैरेव पतिभिर्विवाहादिकम् । श्रुतीनां कासाञ्चित्तु तत्तत्प्रतिपाद्यार्थैः प्राप्तगोपालरूपैः । भगवत्प्रतिपादिकानां नित्यसिद्धगोपीनां च स्वसमानमायामयविग्रहाणां गोपैर्मायया प्रकटीकृतैर्गोपैर्वा विवाहादिकं सञ्जातम् । तत्र ऋषिचर्यो भगवत्प्रतिपादिकाः श्रुतयश्च सर्वा अप्यभिज्ञाः, साधनसिद्धगोपीनां देवकन्यानां च मध्ये काश्चिदभिज्ञाः, काश्चिदनभिज्ञाश्च । नित्यसिद्धानां मध्ये भगवत्सङ्कल्पानुसारेण नरनाट्यमवलम्ब्य काश्चिन्मानिन्यः, काश्चिद्दक्षिणाः । भगवत्स्वरूपप्रतिपादकश्रुतीनां मध्येऽपि अतन्निरसनाऽखण्डार्था गृहीतमानिनीस्वरूपाः । अन्याः-

स्तु गृहीतदक्षिणारूपाः । तत्रैवंभूतानां गोपाङ्गनानां मध्ये काश्चित् पितृभिः, काश्चित् पतिभिः, काश्चिद् भ्रातृभिः, काश्चिद् बन्धुभिः, काश्चित् पुत्रैरित्यपि द्रष्टव्यम् । वार्यमाणा अपि न न्यवर्तन्त यतो गोविन्देन वेदोद्धारकेण गोलोकविहारिणा गवेन्द्रेण श्रेष्ठेन भगवता अपहृत आत्मा अन्तःकरणं यासां ताः । तथाचान्तःकरणाऽऽरूढेन भगवताऽपहृतान्तःकरणानां श्रौत्रं निवारणमकिञ्चित्करम् । प्रवाहपतितनौकायां स्थितस्य तिष्ठ तिष्ठेति निवारणं यथा । ननु भयात् स्वधर्माद्वा ताः स्वान्तःकरणं निरुद्ध्य किमिति न निवृत्ता इत्याशङ्क्याह ॥ मोहिता इति ॥ भगवत्स्वरूपासक्त्युत्कटदशया भयाद्यनुसन्धाननिवर्तकं व्यामोहं गताः । ननु तैः पित्रादिभिः सर्वथा किमिति न निवारिता इति वाऽऽशङ्क्याह ॥ मोहिता इति ॥ तथाच मूर्च्छां मृत्युं वा गन्तुं प्रवृत्ता अतस्तैस्तन्मूर्च्छामरणादिभयान्न प्रसह्य वारिता इति भावः ॥

निवृत्तिपक्षे ताः श्रुतयः पितृप्रसादिस्थानीयैर्वैदिकत्वाभिमानिभिर्वादिभिर्वार्य्यमाणाः । गोविन्देन वेदैकगम्येन परमात्मना अपहृतात्मानः स्वीकृताभिप्रायाः, न न्यवर्तन्त । यतो मया = प्रमया प्रमायै वा ऊहिताः । वृत्तयोऽपि पित्रादिभिर्विषयैर्वार्य्यमाणा अपि गोविन्दे निलीनस्वरूपाः, मया प्रमया ऊहिता अनुकूलतर्कवशो न न्यवर्तन्त विषयाभिमुख्यं न प्राप्ताः ॥ ८ ॥

अथ जन्मान्तरेषु मोक्षाभिकाङ्क्षया कृतया गोपीजनवल्लभोपासनया लब्धगोपीभावानामवस्थामाह ॥

अन्तर्गृहगताः काश्चिद्गोप्योऽलब्धविनिर्गमाः ॥
कृष्णं तद्भावनायुक्ता दध्युर्मीलितलोचनाः ॥ ९ ॥

अन्तरिति॥काश्चिद् गोप्यो मोक्षप्रदभगवत्सङ्कल्पानुसारेणपतिभिर्द्वा-

राणां मुद्रितत्वादन्तर्गृहगता अलब्धविनिर्गमाः कृष्णं दध्युःमरणदशो-पस्थितौ तमेव प्रेष्ठं दध्युः।यतो यस्य सर्वदा भावना भवति तदेवान्त-काले ध्यानपथमारोहति । ताश्च सर्वदा कृष्णभावनायुक्ता आस-न्नित्याशयेनाह॥तद्भावनायुक्ताः ॥ नेत्रद्वारान्यत्र चित्तवृत्तिगमनभ-यान्मीलितानि लोचनानि यासां ताः । ध्यानावेशेन मुद्रितनेत्रा इति वा। यद्वा मीलितानि लोजनानीतरज्ञानानि यासां ताः ।केचि-त्तु—काश्चिन्नित्यसिद्धादिगोपीसङ्गभाग्याभावादलब्धप्रेमत्वाददग्ध-कषाया गोपैर्व्यूढा गोपोपभुक्ता अपत्यवत्यो बभूवुः।ताः खलु तदन-न्तरमेव नित्यसिद्धादिगोपीसङ्गभूम्ना कृष्णसङ्गस्नेहोद्रेकात् तासां कृपापात्रीभवन्त्योऽपि कृष्णाङ्गसङ्गायोग्यदेहत्वेन योगमायया सा-हाय्यकरणात् पतिभिर्वारिताः कृष्णमभिसर्तुमक्षमा महाविपदुग्र-स्ताः पतिभ्रातृपुत्रादीन् स्वप्राणचौरत्वेन पश्यन्त्यो मरणदशाया-मुपस्थितायां सत्यां, यथाऽन्या मात्रादिस्वबन्धुजनं स्मरन्ति तथैव स्वप्राणैकबन्धुं कृष्णं सस्मरुरिति वर्णयन्ति ।

निवृत्तिपक्षे, स एष रसानां रसतमः परमः परार्द्ध्योऽष्टमो यदुद्गीथ इत्याद्या उद्गीथादिरूपान्तर्गृहगता अपि काश्चिद् गोपस्य भगवतः सम्बन्धिन्यः, अलब्धो विशेषेण निर्गमः प्रतिपादनं या-भिस्तास्तस्य परमात्मनो भावनायामुपासनायां युक्ता नियुक्ताः कृष्णं दध्युः परमात्मध्यानं विदधुः । यतोऽविचारेण मुद्रितयथा-श्रुतार्थप्रकाशाः। तथाचोद्गीथादिस्तुतिपरतायां निरुद्धा अपि तत्र न तस्थुरित्यर्थः । वृत्तयोऽपि काश्चिदसन्तप्रियवस्तुरूपगृहान्तर्गता अलब्धविनिर्गमा अपि तत्र कृष्णभावनायुक्ताः कृष्णं दध्युर्मु-द्रितविषयप्रकाशा इति ॥ ९ ॥

तथाच वर्तमानकालीनविरहध्यानाभ्यां पूर्वोपासनया लब्धा-भ्यां स्वाभिसन्धितं फलं प्रापुरित्याह ।

दुःसहप्रेष्टविरहतीव्रतापधुताऽशुभाः ॥
ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः ॥ १० ॥

दुःसहेति ॥ दुःसहो यः प्रेष्ठविरहो महानग्निस्तेन यस्तीव्रस्तापः = कोटिब्रह्मकल्पेषु कुम्भीपाकादिनरकेषु यावद् दुःखं भवेत् ततोऽप्यधिकं भगवद्विरहक्षणमात्रेण जातं दुःखं, तेन धुतानि निर्धूतानि भस्मसात्कृतानि अशुभानि यासाम् । तथाच सर्वपापफलभोगसमाप्तिः । पुण्यक्षयप्रकारमाह । ध्यानेन प्राप्तो योऽच्युतस्य सदैकरसस्य परमात्मन आश्लेषः सम्यगालिङ्गनम् । तदानीं न जारत्वेन आश्लेषः, किन्तु परमात्मत्वेनेति बोधयितुमच्युतपदम् । तेन या निर्वृतिः = सुखं—कोटिब्रह्मकल्पेषु स्वर्गादौ यावत्सुखं भवेत् ततोऽप्यधिकभगवत्संश्लेषे क्षणमात्रेणानुभूतं, तया क्षीणानि मङ्गलानि पुण्यानि यासाम् । तथाचैवं पुण्यस्यापि क्षयः संपन्नः।केचित्तु—दुःसहेन प्रेष्ठविरहेण यस्तीव्रस्तापस्तेन धुतानि कम्पितानि अशुभानि याभिस्ताः । यासां प्रियविरहतापस्य तीव्रतां वीक्ष्य कोटिब्रह्माण्डस्थवाडवानलमहाकालकूटादिरूपाणि परःसहस्राण्यपि अशुभानि स्वतीव्रताहङ्कारं परित्यज्य पराजयबुद्ध्या चकम्पिर इत्यर्थः । ध्यानेन प्राप्त आगतो योऽच्युतस्तेन तदैवोद्भूतस्य प्रेमपूर्णचिन्मयस्य तादृशस्वभावदिमतो देवस्य य आश्लेषस्तेन या निर्वृतिस्तया क्षीणानि कृषीकृतानि मङ्गलानि प्राकृतानि यासां ताः । यासां स्फूर्त्तिप्राप्तेष्टाश्लेषोत्थसुखं वीक्ष्य कोटिब्रह्माण्डगतविषयसुखनिर्विषयब्रह्माऽनुभवसुखसहस्राणि मङ्गलशब्दवाच्यानि क्षीणानि। यदपेक्षया निकृष्टानि बभूवुरित्यर्थ इति वर्णयन्ति । तत्र परमपुरुषार्थत्वेन प्रतिपादितस्य निरतिशयस्य ब्रह्मानुभवानन्दस्य क्षीणत्ववर्णनं, यं लब्ध्वा चापरं लाभं मन्यते नाधिकं तत * इ-

स्यादिशास्त्राज्ञानविजृम्भितमिति ॥

निवृत्तिपक्षे—दुःसहो यः प्रेष्ठस्य परमात्मनो विरहः—अत्र परमात्मोपासना नास्तीति केनचिन्निरूप्यमाणस्तेन जातो यस्तीव्रतापस्तेन धुतानि अशुभानि याभिस्ताः । तथा ध्यानेन परमात्मोपास्त्या योऽच्युताश्लेषस्तेन केनचिद्विदुषा वर्णितेन या निर्वृतिस्तया हेतुभूतया क्षीणानि क्रोडीकारितानि मङ्गलानि याभिः । यद्वा अक्षीणानि न नाशितानि च मङ्गलानि याभिस्ताः । वृत्तिपक्षे स्पष्टोऽर्थः ॥ १० ॥

तमेव परमात्मानं जारबुद्ध्यापि सङ्गताः ॥
जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः ॥ ११ ॥

यत एवमतः सद्यः प्रक्षीणबन्धनाः ॥ तत्क्षण एव प्रकर्षेण क्षीणं प्रारब्धकर्मकृतं बन्धनं यासां तास्तथाभूताः सद्यो गुणमयं देहं जहुः । त्रिगुणमयं स्थूलसूक्ष्मकारणाख्यशरीरत्रयं जहुर्विमुक्ता इत्यर्थः । ननु प्रत्यगभिन्नब्रह्मसाक्षात्काराभावात् कथं तासां मुक्तिरित्यपेक्षायामाह ॥ जारबुद्ध्येति ॥ यद्यपि तासां भगवति जारबुद्धिरासीत् तथापि वस्तुमाहात्म्याद्भगवत्प्रसादो जातः । न हि वस्तुशक्तिर्बुद्धिमपेक्षते । अन्यथा बुद्ध्यापि पीतममृतं यथा । जाते तु भगवत्प्रसादे तमेव प्रत्यगभिन्नपरमात्मानं सङ्गतास्तत्प्रसादलब्धसाक्षात्कारेण तदभिन्नतां प्राप्ता इत्यर्थः । अपिशब्दस्तद्बुद्धिनिन्द्यत्वाभिव्यञ्जनद्वारा वस्तुमहिम्ना तदतिप्राशस्त्यमभिव्यनक्ति । यथा प्रथमं जारबुद्ध्यापि भगवता सङ्गताः पश्चाद्विरहदशायां ध्यानादिना भगवत्स्वरूपं ज्ञात्वा ततः प्रक्षीणबन्धनाः सद्यो विमुक्ता इत्यर्थः । तथाच सर्वमपि निकृष्टमुत्कृष्टसम्बन्धादुत्कृ-

श्रीशुक उवाच ।

उक्तं पुरस्तादेतत् ते चैद्यः सिद्धिं यथा गतः ॥
द्विषन्नपि हृषीकेशं किमुताऽधोक्षजप्रियाः ॥ १३ ॥

उक्तमिति ॥ पुरस्तात् सप्तमस्कन्धे उक्तमप्यमुमर्थं पृष्टत्वात् करुणया पुनः स्मारयति। चैद्यः शिशुपालो हृषीकेशं भगवन्तं द्विषन्नपि सिद्धिं गतः। हृषीकाणामिन्द्रियाणामीशं नियन्तारमित्यनेन यथाधिकारं द्वेषादिकं भगवत्प्रेरणयैव भवतीति सूचितम् । यद्वाऽनावृतैश्वर्यं द्विषन्नित्यनेनावृतब्रह्मभावानां जीवानां परस्परं द्वेषादिना सिद्ध्यभावेऽपि कृष्णेऽनावृतब्रह्मभावे यथाकथञ्चिन्मनःप्रवेशे सिद्धिर्भवतीति ध्वनितम् । यथैवं तथा पुरस्तान्मयोक्तम् । तथाच कृष्णे विरोधिवृत्त्यापि यदि सिद्धिर्भवति तर्हि परमानुकूलवृत्त्यासक्तचेतसां गोपीनां सिद्धिप्राप्तौ किं चित्रमित्याह ॥ किमुतेति ॥ अधोऽक्षजः प्रियो यासां ताः। अधोऽक्षजस्य प्रिया इति वा। अधः अक्षजन्यं ज्ञानं यस्मादित्यर्थकेनाधोऽक्षजपदेन, अशब्दमस्पर्शमरूपमव्ययमित्यादिश्रुत्या सर्वगुणातीतम् आवरणविनिर्मुक्तं परमात्मानं जारबुद्ध्यापि सेवन्तीनां या बुद्धयस्ता वस्तुमाहात्म्याद् ब्रह्मबुद्धय एव, न गुणबुद्धय इति ध्वनितम् । सप्तमस्कन्धे चेत्थमभिहितम् । तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा * स्नेहात् कामेन वै पुण्यात् कथञ्चिन्नेक्षते पृथक् * कामाद् द्वेषाद्भयात् स्नेहाद्यथाभक्त्येश्वरे मनः * आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः * गोप्यः कामाद् भयात् कंसो द्वेषाच्चैद्यादयो नृप * संबन्धाद् वृष्णयः स्नेहाद् यूयं भक्त्या वयं विभोरिति। यद्वा पूर्वं, ब्रह्मन् ! परोद्भवे कृष्णे इयान् प्रेमा कथं भवेत् * योऽभूतपूर्वस्तोकेषु स्वोद्भवेष्वपि कथ्यतामिति पृष्टवतस्तत्रैतदुत्तरं तदुत्तरकथनेन मया

उक्तम् । सर्वेषामपि भूतानां नृप स्वात्मैव वल्लभः । * इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि * कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् * जगद्धिताय सोऽप्यत्र देहीवाभाति माययेत्यादिना । किञ्च । सप्तमेऽप्यभिहितमित्याह यथा वा ॥ चैद्य इति ॥ निवृत्तिपक्षेऽपि समानमिदं पञ्चश्लोकात्मकं प्रकरणम् ॥ १३ ॥

भक्तितत्त्वज्ञानानधिकारिणोऽप्युद्धर्तव्या इतीच्छयैव भगवदवतरणमतो यदर्थं भगवदवतारस्तस्मिन्नेवार्थे भवतः शङ्का न युज्यत इत्याशयेनाह ।

नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप ॥
अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः ॥ १४ ॥

नृणामिति ॥ भगवतः षड्गुणैश्वर्यसंपन्नस्याभिव्यक्तिकारणरहितस्याभिव्यक्तिः प्रादुर्भावो नृणामविशेषेण सर्वेषां निःश्रेयसार्थाय साक्षात्परम्परया वा मोक्षरूपपरमपुरुषार्थलाभायैव, नतुभूभारभूतकंसादिवधाय । भ्रूविजृम्भमात्रेणानन्तकोटिब्रह्माण्डसंहारसमर्थस्य क्वचित्संहारकशक्तिलेशमात्रावतारेणाऽपि तस्य सुकरत्वात् । न च नृणां निःश्रेयसमन्यथा सुकरम् । भक्तितत्त्वज्ञानयोरधिकारिणोऽत्यन्तदुर्लभत्वात् । मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये * यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वत इत्यादिवाक्यात् । न च भगवदिच्छया तत्सुकरम् । तस्या अपि जीवकर्मतापेक्षत्वात् । अन्यथा वैषम्यनैर्घृण्यापातात् ।
तस्मात् करुणासागरो भगवान् संसारानले पापच्यमानाञ्जीवानालोच्यावतरतीति भावः । यथा नृपरूपेण भगवतोऽवतरणं नृणां पालनाय, तद्वदिति सम्बोधनाशयः । अनेन जीवेनात्मनाऽनुप-

विश्य नामरूपे व्याकरवाणीति श्रुत्या परमात्मनो जीवरूपेण प्रवेशो नामरूपात्मकसंसारविस्तारायोक्तः। प्रविष्टस्य तिरोहितस्य परमात्मनः पतिपुत्रादिरूपेण स्थितस्य संसृतिचक्रारूढस्य स्नेहादिसंबन्धेन संसृतिचक्रे भ्रमणातिशय एव, न तु तन्निवृत्तिः। भगवतस्तु अभिव्यक्तिरित्युक्तमतो यत्स्वरूपसाक्षात्कारेण मोक्षः श्रुतिमस्तकेष्वभिहितस्तत् स्वरूपं भगवति अभिव्यक्तमेवास्तीत्याशयेन भगवन्तं विशिनष्टि ॥ अव्ययस्येत्यादि ॥ अव्ययस्यापक्षयरहितस्य सत्यस्य यतोऽप्रमेयस्य प्रत्यक्षादिप्रमाणजन्यवृत्तिप्रतिफलितचैतन्याऽविषयस्याऽदृश्यस्य दृग्रूपस्य, तत्रापि हेतुमाह, निर्गुणस्य॥ प्रत्यक्षादिप्रवृत्तिहेतुगुणविनिर्मुक्तस्य, सत्यं ज्ञानमनन्तं विज्ञानमानन्दं ब्रह्म विज्ञातारम् अरे केन विजानीयात्, यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्, यत्साक्षादपरोक्षाद् ब्रह्म, साक्षी चेता केवलो निर्गुणश्चेत्यादिश्रुतेः। तथाच सत्यज्ञानानन्दात्मकस्यानावृतस्य परब्रह्मणो नन्दनन्दनादिरूपेणाभिव्यक्तिर्न तु जीवस्येव जडदेहाद्यभिमानेन तिरोधानम्। तस्माद्विषबुद्ध्यापि पीतममृतं यथा अमरत्वायैवावकल्पते तथा जारत्वादिबुद्ध्याप्याराधितो भगवान्मोक्षायैवावकल्पते इति, न कोऽपि विरोधः। ननु यथोक्तस्य निर्गुणस्य परमात्मनो महावाक्यजन्याखण्डार्थवृत्त्या आवरणभङ्गमात्रं सम्पाद्यते। स तु स्वयंप्रकाशत्वात् स्वयमेव प्रकाशते। तस्मात् कथं चक्षुरादीन्द्रियजन्यवृत्तिविषयाकारेणाभिव्यक्तिः। न हि दृश्यमानघटपटाद्याकारं ब्रह्माभिव्यक्तमित्युच्यते। अतो भगवद्विग्रहस्य दृश्यमानत्वमभिव्यक्तब्रह्मरूपत्वं चेत्येतदुभयं विरुद्धमितिचेत् तत्राह ॥ गुणात्मन इति ॥ गुणानां सत्त्वरजस्तमसां तदात्मिकाया महामायादिशब्दप्रतिपाद्यायाः प्रकृतेरात्मनो नियन्तुः सत्तास्फूर्तिप्रदस्याधिष्ठानचैतन्यस्य। तथाच सच्चिदानन्दरूपे परब्रह्मणि सर्वशा-

ऽघटितमप्यज्ञानाहङ्कारादिकं यथा प्रतीयते, तथा साधकाऽनुग्रहार्थं भगवतस्तत्तद्विग्रहरूपेण भानमपि न विरुद्ध्यते । तत्राज्ञानादीनां संसारकारणत्वात् तद्भानं संसारापादकम् । भगवद्विग्रहस्य तु मोक्षार्थं प्रकटितत्वात् तद्दर्शनादिकं मोक्षकरमिति विशेषः । प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया * माया ह्येषा मया सृष्टा यन्मां पश्यसि नारदेत्यादिशास्त्रात्स्वेच्छोद्बोधिततद्विग्रहभानानुकूलमायाशक्त्या तथाभूते परमात्मनि तत्तदाकृतिभानमिति सर्वमनवद्यम् ॥ १४ ॥

अतो यथाकथञ्चित् तदासक्तिर्मुक्तिकारणत्वात् सम्पाद्येत्याह ॥

कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव वा ॥
नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥ १५ ॥

कामं प्रेममयं रिरंसामयं वा । गोप्यादयः । क्रोधं द्वेषं शिशुपालादयः । भयं कंसादयः । स्नेहं पाण्डवादयः । ऐक्यं सम्बन्धं वृष्ण्यादयः । सौहृदं भक्तिं नारदादयः । ऐक्यमभेदमात्मारामा इति व्याख्यानं तु सम्बन्धाद् वृष्णय इति पूर्वोक्तविरोधादस्य यथार्थत्वेन यथाकथञ्चिद्रूपत्वाभावात् स्वामिभिर्न कृतम् । नित्यं हरौ वन्धहरणायावतीर्णे भगवति विदधतः कुर्वाणा ये ते तन्मयतां सच्चिदानन्दस्वरूपभगवत्स्वरूपतां यान्ति । एवकारेण प्रत्येकं सम्बन्धित्वेन कामादीनां मध्येऽन्यतमस्य यथाधिकारमवश्यकर्तव्यतां बोधयति । वाकारेण कामादीनां तन्मयताप्राप्तौ प्रत्येकं स्वातन्त्र्यं ज्ञापयति । एवकारस्य यान्तीत्यनेनापि सम्बन्धः । तथाच यान्त्येवेत्यैकान्त्यं बोधितम् । नित्यमित्यनेन शूर्पणखादिवद् व्यभिचरितकामादिव्यावृत्तिः । यान्तीति वर्तमानापदेशेनेदानीमप्येवं विद-

घतो यान्स्येति द्योतयति ॥ १५ ॥

ननूक्तेऽप्यर्थे विस्मयाच्छिष्येण पुनः प्रश्नः क्रियतेऽतः किमिति सामर्षं भवद्भिरुत्तरं दत्तमिति चेदप्रसिद्धे ह्यर्थे उक्तेऽपि कदाचिद्विस्मयवशात् पुनः प्रश्नो भवेदनेकवारमनुभूते समस्तशास्त्रेषु प्रसिद्धे परमात्मसुखवत् सम्यक्श्रुते समनस्कस्य विस्मयोऽपि कर्तुमयोग्य इत्याशयेनाह ॥

नचैवं विस्मयः कार्यो भवता भगवत्यजे ॥
योगेश्वरेश्वरं कृष्णे यत एतद्विमुच्यते ॥ १६ ॥

नचेति ॥ गुणप्रवाहेस्वमसम्भावनालक्षणो विस्मयो, भवता तु गर्भवासकालादारभ्यैतावत्कालपर्यन्तं भगवन्माहात्म्यमनुभूतवता, अवारितमपि ब्रह्मास्त्रं यो वारितवाँस्तस्य स्वेन निवर्तनीयसंसारनिवर्तने कः परिश्रम इति सर्वविस्मयनिवारकजन्मवता जन्मकाले असौ मद्रक्षक इति परीक्षणेन परीक्षिदिति नामवता न च कार्यः कदापि न कर्तव्यः । एवम्भूतो विस्मयस्त्वज्ञानामश्रद्दधानानां संशयात्मनां वा भवति, न तद्विलक्षणानां भवादृशानाम् । अज्ञत्वादिकं तु सर्वानर्थकारणत्वाद् दूरतः परिहरणीयम् । तदुक्तम्—अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति * नायं लोकोऽस्ति न परो न सुखं संशयात्मन * इति । तत्रापि भगवति षड्गुणैश्वर्यसम्पन्ने, येन तस्योद्धारो यद्विषयकाङ्क्षया वा तस्य प्रतिबन्धस्तदाविर्भावेन तदाकाङ्क्षापूर्त्या वा मोचनसमर्थे । अत एवाऽजे जन्महेतवविद्याकामकर्मवासनादिविनिर्मुक्तत्वाज्जन्मशून्ये, लोकानुग्रहायाविर्भूतत्वाद्दिव्यजन्मादिसत्त्वेऽपि नास्यजत्वादिव्याघात इति भावः॥ किञ्च, योगेश्वरेश्वरे।योगेश्वरा ब्रह्मादयस्तेषामपीश्वरे आदिकारणे नियन्तरि स्वाजत्वमहेश्वरत्वादिज्ञानवतोऽपि मुक्तिप्रदे । तदुक्तम्—

अहमादिर्हि देवानां महर्षीणां च सर्वशः * यो मामजमनादिं च वेत्ति लोकमहेश्वरम् * असम्मूढः, स मर्त्येषु सर्वपापैः प्रमुच्यत इति। यद्वा, यत्प्रसादाद्योगेश्वरा अपि मोक्षदानक्षमास्तेषामीश्वरे को विस्मयः। एवं त्रिभिः पदैर्मोचनसामर्थ्यमभिधाय, किञ्च मुक्तमाप्योऽपि स एवेत्याह ॥ कृष्णे सदानन्दस्वरूपे यतो येन केनापि प्रकारेणाश्रितादेतच्चराचरं सर्वमपि विमुच्यते।

तथाच लुप्तैश्वर्ये, प्रादुर्भूतजन्माद्यनर्थसमूहे, स्वस्यापि मोक्षोपाययोगादिशून्ये, आवृतसदानन्दस्वरूपे, अनृतजडदुःखदेहादितादात्म्यापन्ने जीवेऽस्त्वेवं विस्मयो, न तु यथोक्ते परमात्मनि, तत्रापि भवत इति भावः ॥ १६ ॥

अहो बहूक्तम्, इतः परम् अलं प्रश्नोत्तराभ्यां लोकोत्तरसुखाया भगवद्रासक्रीडाकथाया विच्छेदकाभ्यामिति ध्वनयन् स्वयमेव प्रकृतमनुसरति।

ता दृष्ट्वाऽन्तिकमायाता भगवान् व्रजयोषितः ॥
अवदद् वदतां श्रेष्ठो वाचः पेशैर्विमोहयन् ॥ १७ ॥

ता इति ॥ ताः स्वयं कलगीतेनाहूताः, अतो व्रजयोषितो व्रज एव वासयोग्या अपि झटिति स्वसमीपमागता उपलभ्य। यद्वा ता व्रजयोषितः सर्वदा व्रज एवोपलब्धास्तदानीं स्वस्य वने स्थितस्यान्तिकमायाता दृष्ट्वा, वाचः पेशैर्विलासैः स्वचित्तानुसारेण निवेदप्रार्थनार्थप्रतीतिजनकैः पूर्वं कलगीतेन मोहिताः पुनर्विशेषेण मोहयन् अभाषत। यतो वदतां सर्वेषां वक्तृणां मध्ये श्रेष्ठः। यतो भगवान्। इदं च व्यामोहोत्पादनं विशेषरसोद्भवाय। तथाच याः स्वात्मानं धैर्याभावाद् बहिरपि प्रार्थयन्ति तासां प्रेम्ण उपेक्षावाक्यैरेवोद्दीपनं भवति। यास्त्वन्तरतः प्रार्थनावशोऽपि धैर्यव-

शान्मानवसो वहिर्नेति नेतीत्येव वदन्ति तासां प्रेम्णः प्रार्थनावाक्यै-रेवेत्य स्वतन्त्रेण भयार्थवाक्यान्यभिहितवान् । पृथग् यथोक्तार्थवाक्यप्रयोगस्य परस्परकलहापादकत्वेन रसाभासकत्वात् । यद्वा सर्वत्रापिशब्दान्तर्भावेनेत्थं व्याख्येयम् । व्रजयोषितः साहजिकप्रेमवत्योऽपि, ताः प्रेममयकामविकारं प्राप्ता अपि, अन्तिकमायाता अपि, साक्षाद् दृष्ट्वापि, स्वयं भगवाँस्तासां भावज्ञोऽपि, कपटवाक्यैर्व्यामोहयन् वैकल्यं प्रापयन्नवदत् । यतो नर्मोक्तिवादिषु श्रेष्ठः । तथाच नर्मविशेषार्थमेवमभाषतेत्यर्थः ।

निवृत्तिपक्षे भगवानेव वदतां श्रेष्ठस्तत्तद्वादिरूपेण वदतामग्रगण्यः सन् वाचः पेशैरापातरम्यैर्विलासैः, विमया = विरुद्धप्रमया विपरीतसिद्धान्तेन ता ऊहयँस्तर्क्कयन्नुवाचेत्यर्थः । मोहितान् मन्दमतीन् विशेषेण मोहयन्निति वा ॥ १७ ॥

यदवदत् तदुदाहरति ।

स्वागतं वो महाभागाः प्रियं किं करवाणि वः ॥
व्रजस्यानामयं कच्चिद् ब्रूतागमनकारणम् ॥ १८ ॥

स्वागतमिति॥ तत्र त्रिविधा गोप्यःस्वावतारं विज्ञाय रमणाभिलाषवत्योऽभिज्ञाः प्रथमाः । जारबुद्ध्या तद्वत्योऽनभिज्ञा द्वितीयाः । स्वप्रेमातिरेकेण वशीकृतप्रेष्ठा मानवत्यस्तृतीयाः । तत्राभिज्ञापक्षे, वो युष्माकं स्वागतं सुष्ठु शोभनमागमनं जातम् । प्रेष्ठसन्निधावागमनमात्रस्याप्यत्यन्तशोभनत्वात् । यद्वा, स्वागतमिति कुशलप्रश्नः । अतः परमप्रेम्णा समागतानां युष्माकं प्रसन्नोऽहं किं प्रियं करवाणि । युष्मन्मनोऽभिलषितप्रियकरस्तेन भवतीनां सन्तोषस्य सम्पादनीयत्वात् । अहो रमणेच्छयाऽऽराधनपराणामस्माकं मन्दभाग्यत्वादद्यापि सर्वज्ञेनाप्यभिप्रायो न बुद्धो यत एवं

पृच्छति । यद्वा । अस्मत्प्रेमभरतामालोच्यैवं वदति तस्मादतः परं किं वक्तव्यमिति विचार्य्य खिन्नचित्ता आलक्ष्याऽऽश्वासयति । हे महाभागाः । महद्भाग्यं भवतीनाम् । यतो ब्रह्मादिभिरपि प्रार्थनीयं मत्सन्निधानं लब्धवत्यः । यद्वा, महान् भागो भजनं यासाम् । मत्प्रेमातिरेकविनिर्मुक्तानां कथं मत्सम्बन्ध इति भावः । एवमुक्ता अपि वक्तुमशक्ता व्रजाभिमुख्यः स्थिता दृष्ट्वा पुनराह ॥ व्रजस्येति ॥ व्रजस्थसम्बन्धिजनस्योपद्रवोपस्थितौ भवतीनामागमनं जातं स्यादिति मया ज्ञातमतः पृच्छामि । व्रजस्य कच्चिदनामयमुपद्रवाभावः संप्रति वर्तते । एवं श्रुत्वा अहो सर्वज्ञोऽपि भगवान् अज्ञवत् पृच्छतीति नरनाट्यमालक्ष्य विस्मयेन मन्दस्मितवतीरुपलभ्य स्वयमपि मन्दहसितालंकृतमुखसरोरुह आह ॥ ब्रूतेति ॥ आगमनकारणं ब्रूत । किमिह तूष्णीमवस्थानेन सन्देहापादकेन । स्वाभिप्रेतप्रियप्रार्थनप्रतिबन्धकलज्जाभिभवकारणप्रेमातिरेकसंपादनार्थं भगवता ताः प्रत्येवमुक्तम् । अनभिज्ञापक्षे, स्वस्मिन्नासक्तचित्ता अस्मत्कलगीतश्रवणसमकालमेव व्रजाद् बहिर्निःसृत्य स्वसन्निधौ समागता, अत एव तासामन्तःकरणस्थो भावोऽपि बहिर्निःसारणीय इत्याशयेन दाक्षिण्यलक्षणनायकस्वभावं ता ग्राहयितुमवहित्थालक्षणनायिकास्वभावमङ्गीकृत्य आह ॥ स्वागतमिति ॥ वः शोभनमागमनं भवतु । युष्मदागमनं स्वस्य शुभसूचकमहं लक्षये । यतो, हे महाभागा महद्भाग्यलब्धो महान् भागः स्वपतिभजनं यासां ताः पतिव्रताः।तथाच महाभागानां युष्माकमागमनं महद्भाग्यं सूचयतीति भावः । अत आज्ञापयन्तु भवत्यो, वः प्रियं किं करवाणि। केन प्रियाचरणेन स्वात्मानं कृतार्थं करोमीत्यर्थः। एवं विपरीतमाकर्ण्योद्विग्नमानसाः शुष्यन्मुखारविन्दा, अहो वृथैव व्रजात् सहसा निःसृत्यात्र समागता इति पश्चात्तापेन व्रजाभिमुखीरुपलभ्याह ॥

व्रजस्येति॥यदि व्रजस्य कश्चिद् उपद्रव उपस्थितस्तच्छान्त्या च युष्मत्प्रियं भवति तर्हि वक्तव्यम् । झटित्येव तच्छान्तिं करोमीति भावः । ननु भोः, चतुरशिरोमणे, तथा सति गोपा आगताः स्युरितिचेव तत्राह ॥ ब्रूतेति ॥ युष्मदागमनेन तत्रसत्स्त्रीणामेव कश्चिदुपद्रव उपस्थित इति तर्कवशान्मयैवमुच्यतेऽतः स्वमुखादपि झटिति तत्कारणं ब्रूत । अहो एतत्स्वरूपासक्तचित्ताभिरस्माभिर्व्रजस्य दत्तं जलाञ्जलिं जानन्नपि फलकाले किमस्मासु व्रजासक्तचित्ततामारोप्यैवं वदतीति स्वमुखारविन्दाभिमुखीरलोक्याह—ब्रूतेति, वा । तिष्ठतु मदुक्तस्तर्कः, स्वयं वक्तुमुद्यता यूयं स्वमुखादेव स्वागमनप्रयोजनं ब्रूतेत्यर्थः । यद्वा, ससम्भ्रममाह॥ स्वागतम् ॥ यतो भवत्यः पतिपुत्रादिसकलसम्पत्सम्पन्नत्वेन महाभागाः । तथाभूतानामागमनावकाशरहितानामत्रागमनेन महान् ममातिविस्मयो जात इति भावः । तस्माद् युष्माकं किञ्चित्प्रियाचरणे मम महत्युत्कण्ठा जातेत्याशयेनाह॥प्रियमिति॥यत्प्रियं भवत्यः प्रार्थयन्ति तदहं करवाणीत्यर्थः।एवमुक्ता नर्मोक्तिमबुद्ध्वा लज्जया स्वाभिलषितं प्रियं प्रार्थयितुमशक्ता व्रजाभिमुखीरवलोक्याह—ज्ञातं मया, व्रजे कश्चिदुपद्रव उपस्थितः स्याद् यद्भयात् पलाय्य स्वत्राणार्थं मदन्तिकमागता अतः पृच्छामीत्याशयेनाह ॥ व्रजस्येति॥ तथाच तत्र सम्भावितोपद्रवशान्तिरूपं प्रियं किं करवाणीति भावः । एवमुक्ता अहो अस्य धूर्ताधिराजस्याद्यापूर्वोऽयं वाग्विलासो द्रष्टव्य इति तर्कयन्तीः सस्मितं परस्परं विलोकयन्तीरालक्ष्याह ॥ ब्रूतेति ॥ अहो भवतीनां मौनेन मिथः सस्मितनिरीक्षणेन चोपद्रवाभावोऽस्तीति मया ज्ञातमतः स्वमुखादेवागमनप्रयोजनं ब्रूतेत्यर्थः । मानिनीपक्षे, तां दुर्लभदर्शनसंभाषणाः स्वान्तिकमायाता दृष्ट्वा अतिविस्मितस्वान्तः सोत्कण्ठमाह ॥ स्वागतमिति ॥ अहो वो युष्माभिः

सुष्ठु समीचीनमागमनं कृतम् । एतादृशचन्द्रकराभिरञ्जिते स-मस्तोद्दीपनसामग्रीविशिष्टे वने युष्मदागमनाकाङ्क्षया मदवस्थाना-व । ननु किमित्येवं ब्रवीषि, मन्दभाग्यप्रेरिता वयमत्र समागता इति कदापि न वाच्यमित्याह ॥ हे महाभागाः ॥ एवंविधयौवना-दिवतीनामेवंविधे वने एवंविधेन प्रियेण समागमो महता भाग्येन लभ्यतेऽतो नाल्पस्य तपसः फलमिति भावः । अहो नाऽयङ्कोप-कालः, किन्तु कोपौदासीन्यादिकं विहाय रमणस्य समयोऽतो येन प्रियाचरणेन भवत्यः प्रसन्ना भवन्ति तत्किं वर्तते तदहं करोमीति दैन्यं व्यज्यते । यद्वा, किमेवंमुद्रयाऽत्रस्थिता, यद्युष्माकं मनसः प्रियं तदहं जानामि, तदेव च ममापि प्रियं, तद्वः प्रियं देश-कालानुकूल्ये सति किं करवाणि । भवतीनामनुज्ञा वर्तते किमिति ससंभ्रमोक्तिः । एवमुक्त्वा व्रजाभिमुखीरवलोक्य तासां पलायनं संभाव्याह ॥ व्रजस्येति ॥ अहो प्रियाः ! प्रियाचरणानुज्ञा कि-मिति न दीयते, किमर्थं वा विकसितमुखपद्मा भवत्यः पुनर्व्रजमव-लोकयन्त्यऽतोऽहं पृच्छामि । व्रजस्य तु कच्चिदनामयम् । एवमु-क्ताः किञ्चिद्विकसितवदना ईषत्कटाक्षवतीरवलोक्य सस्मितमाह ॥ ब्रूतेति ॥ आगमनप्रयोजनं झटिति ब्रूत । प्रार्थनायां लोट् । किं वा वदिष्यन्तीति भयान्मद्धृदयकम्पमपाकुरुतेति दैन्यं व्यज्यते । स-म्प्रत्यभीप्सितकार्यनाशकरीं लज्जां विहाय कथयतेति भावः ॥

निवृत्तिपक्षे, आस्तिको भूत्वा वदति ॥ स्वागतमिति ॥ वः श्रुतीनां सुष्ठु आगतम् आगमनं भवति । यतो भवत्यो महाभागाः प्रमाणमूर्द्धभूता अतो युष्माकं किं प्रियं करवाणि । अभिधेयं किं धर्मः, किं वा ब्रह्म । तदपि किं सविशेषमुत निर्विशेषम्, ए-कमनेकं, कर्मप्राप्यमुपासनाप्राप्यमुभयप्राप्यं केवलज्ञानप्राप्यं, क-र्मसमुच्चितज्ञानप्राप्यं वा प्रतिपादयामि । ननु यथाकथञ्चिद्य-

त्किञ्चित्प्रतिपादने को दोष इत्याशङ्क्याह ॥ व्रजस्यापौरुषेयस्य वेदस्यानामयं कच्चिद् । दोषगन्धोऽपि न सम्भाव्यते । पौरुषेयवाक्येषु तथा चेदस्तु नामेति भावः । नन्वागता एव परब्रह्मणि वयमतः किमित्येवं पृच्छसीत्याशङ्क्याह ॥ ब्रूतेति ॥ स्वागमनवतीनां युष्माकमागनकारणं विनाऽऽगमनं नोचितमिति कृत्वा तस्य कारणं जातिगुणसञ्ज्ञान्यतमं ब्रूतेत्यर्थः ॥ १८ ॥

एवमुक्ता, लज्जाविष्टमानसाः किञ्चिदपि वक्तुमक्षमा अवलोक्य प्रेमोद्दीपनार्थमीषत्कर्णकठोरं वाक्यमाह ॥

रजन्येषा घोररूपा घोरसत्त्वनिषेविता ॥
प्रतियात व्रजं नेह स्थेयंस्त्रीभिः सुमध्यमाः ॥ १९ ॥

रजन्येषेति ॥ युष्माकं मौन्येन कारणाभावो मया ज्ञातः । अकारणं चागमनमुन्मत्तचेष्टितसमम् । तस्माद् वृथाऽऽगमनवदत्रावस्थानस्यानुचितत्वादिह वने न स्थेयम् । यज्जातं तत्तु जातमिति माऽस्तु वृथा चेष्टितमिति भावः । तर्हि किं चेष्टितमित्यपेक्षायामाह ॥ व्रजं प्रति यात गच्छत। गत्वा गृहकृत्यपरता सम्पाद्येति भावः । व्रजमित्यनेनात्रागमनवदन्यत्र गमनस्यापि निष्फलत्वं सूचितम् । ननु भवतु क्षणमात्रं स्थित्वा गमिष्याम इतिचेत् तत्राह ॥ रजनीति ॥एषा उपलभ्यमाना । तथाच सम्यग् नेत्राण्युन्मील्य द्रष्टव्या, एषा रजनी वर्तते, न तु दिनम् । दिनादौ विलम्बेऽपि कृते उत्तरोत्तरप्रकाशबाहुल्यसम्भवान्नास्ति बाधा, रजन्यां तूत्तरोत्तरान्धकारबाहुल्यसम्भवाद्विलम्बो नोचित इति भावः । किञ्च ज्योत्स्नाबहुलाऽपि घोररूपा रात्रित्वादेव । तथाच महानिशीथाऽऽगमे गमनमत्रावस्थानं च दुर्घटं भविष्यतीति भावः । ननु भवत्वेवं तथाप्यकस्मादागताः फलमूलादिकं किञ्चिदादाय

यास्याम इति चेत् तत्राह ॥ घोरसत्त्वैर्व्याघ्रसर्पवृश्चिकादिभिर्नि-षेविता । कालसम्बन्धाद् वृन्दावनेऽपि घोरसत्त्वसम्भावनयात्राव-स्थानं विहरणं वा नोचितमिति भावः । नन्वेवं तर्हि भवताऽपि किमर्थमत्रावस्थीयते, व्रज एव चलनीयमितिचेत् तत्राह ॥ स्त्रीभि-रिति ॥ तत्रापि हेतुः ॥ सुमध्यमाः ॥ सुकुमारमध्यभागा भयोप-स्थितौ पलायनादावसमर्थाः । अत एव कोमलचित्तत्वाद् घोरस-त्त्वं द्रष्टुमप्यक्षमाः । एतेन तव सन्निधौ नास्त्यस्माकं किञ्चिद् दुःखमिति शङ्कापि निरस्ता । अनभिज्ञापक्षे एतच्छ्रुत्वा, अहो द्र-ष्टव्यं धूर्ताधिराजस्य वाग्विलासचातुर्य्यं, लोकोत्तरसौन्दर्य्यक्रीडा-दिकं दर्शयित्वा धैर्य्यकुललज्जादिकं नाशयित्वा सम्प्रति कल-गीतेन स्वयमाहूय कारणं पृच्छतीत्यपाङ्गचालनैरेव परस्परमाच-क्षाणासु तासु अहो मया बुद्धं, देवपूजोपयोगिपुष्पाद्याहरणाय भव-त्यः स्वागताः स्युरतस्तथाचेच्छृणुतत्राह ॥ रजन्येषेति ॥ भोः, चतुर-शिरोमणे! किमत्रमागमनकारणं पृच्छसि । भवानिव वयमपि क्री-डार्थं वने समागता इति छन्नाऽत्रस्थानपरा आलक्ष्याह ॥ रज-न्येषा घोररूपेति ॥ भो विशालनेत्रा, नेदं दिनम् । अत एवंवि-धायां रजन्यां कुलवधूनां युष्माकं प्रासाद एव क्रीडोचिता, न तु बहिरागत्य वने । ननु घोररूपायां रजन्यां प्रासादेऽपि क्रीडा कथं स्यादितिचेत् तत्राह ॥ इह, वने एव घोररूपा, न तु व्रजे। सहाय-बाहुल्यादिति । ननु भोः कमलनयन ! एवंविधज्योत्स्नावत्त्वेन उपलभ्यमाना रजनी किमिति घोररूपेत्युच्यते त्वयेतिचेत् तत्राह ॥ घोरसत्त्वनिषेविता ॥ अतो व्रजं प्रतियात । अहो भवतु, क्ष-णमात्रं विश्रम्य यास्याम इतिचेत् तत्राह ॥ नेति ॥ अवश्यकर्त-व्ये विलम्बो न युक्त इति भावः । ननु भवता कथं स्थीयते इतिचेत् तत्राह ॥ स्त्रीभिरिति ॥ ननु बह्वीनामस्माकं तव सन्निधौ

स्थितानां का भयसम्भावनेतिचेत् तत्राह॥सुमध्यमा इति ॥ यद्वा, ननु त्वमेव भीरुरसि, न तु वयम् । वनमपि साधारणं, न तु तव पित्रा पितामहादिभिर्वा मौल्येन क्रीतम् । अतो वयमत्रैव विहरिष्याम इति चेत् तत्राह ॥ नेति ॥ भवतु, यथेष्टं विहरन्तु भवत्यः, परन्तु रहो मत्पार्श्वे न स्थेयम् । आबालब्रह्मचारिणा मया स्त्रीसङ्गस्य परिहृतत्वात् । तत्रापि बालवृद्धाभिः सहावस्थाने नास्ति दोषः । यूयं तु युवतयः सुन्दर्य्यश्चातो दूरतः परिहरणीया इत्याशयेनाह ॥ सुमध्यमा इति ॥ तथाच सुन्दरीणां युवतीनां सुन्दरेण मया रात्रौ निर्जने वने सहावस्थानं नोचितम् । यद्यपि यूयं परमपतिव्रता, अहं च ब्रह्मचार्य्यग्रगण्यो जितेन्द्रिय एवाऽतः सहावस्थानेऽपि नास्ति विकारशङ्का, तथापि मनसोऽविश्वसनीयत्वादपकीर्त्युद्भवाच्च नेदमुचितमिति भावः । यद्वा। अत्रागमने भवतीनां प्रयोजनमहं न पश्यामि । पृष्टेऽपि तूष्णीम्भावाद् भवत्योऽपि न पश्यन्त्यतो यद् ब्रवीमि तत् कुरुध्वमित्याशयेनाह॥ रजनीति ॥ सम्प्रति व्रजं प्रतियात । यत एषा, दिवा तत्तद्व्यापारवशादलब्धावसरयोर्दम्पत्योः सुखजनकत्वेन बहुशोऽनुभूयमाना रजनी रञ्जनकरी वर्तते । ननु यद्येवं तथापि रजन्यां गन्तुमशक्ता इतिचेत् तत्राह ॥ अघोररूपा ॥ शरत्पूर्णचन्द्रचन्द्रिकया व्याप्तत्वाद् दिनसादृश्यमापन्ना । अतो नास्ति भयसम्भावनाऽपीत्यर्थः । ननु रात्रौ निर्जने वने व्याघ्रादयो यदि स्युस्तर्हि किं कुर्म इति चेत् तत्राहाऽघोरसत्त्वैर्भ्रमरकोकिलादिभिरेव निषेविता, वृन्दावनमाहात्म्यान्न तु घोरसत्त्वैर्व्याघ्रादिभिरित्यर्थः । किञ्च पतिभिः सार्द्धमत्र स्थितौ नास्ति क्षतिरित्याह ॥ नेति ॥ स्त्रीभिः पतिविरहिताभिरिह निर्जने वने तत्रापि मत्पार्श्वे केवलानामत्र परपुरुषसन्निधाववस्थानस्य सुखहान्यपकीर्त्यादिकरत्वात् । मम त्व-

ऽविवाहितस्य पुरुषस्य यत्र कुत्रापि स्थितौ नास्ति काचिद् क्षतिरित्यपि, स्त्रीभिरित्यनेन ध्वनितम् । ननु एकस्यां रजन्यां वियुक्ता एव स्थास्यामस्त्वं कस्मादस्मान् दृष्ट्वा ग्लायस इति चेत् तत्राह ॥ हे सुमध्यमा इति ॥

अहो क्षणान्तरे को वेद किं भविष्यति, एवंविधं सौकुमार्य्यादिकं वृथा न क्षपणीयम् । ममापि भवतीनां सौन्दर्य्यादेर्वृथा नाशसम्भावनया दया ग्लानिर्भवतीति भावः । मानिनीपक्षे, अथैवमुक्ता व्रजं प्रति गन्तुमुद्यता आलक्ष्याह ॥ रजनीति ॥ अहो आगमनकारणं लज्जादिना नोच्यते चेद् तर्हि मा ब्रूत तथापि व्रजं प्रति तु न यात । अत्रापि प्रार्थनायां लोट् । कुत इत्यत आह ॥ एषाऽनुभूयमाना रजनी रञ्जनकरी । एवंविधा पुनर्मिलिष्यति न वेति भावः । यतो ज्योत्स्नाव्याप्तत्वादघोररूपा । पुनश्च क्रीडोपकरणभूतैरघोरैर्भृङ्गमृगादिभिर्नितरां सेविता । यद्वा घोरं सत्त्वं बलं यस्य तेन मया निषेविता । अतो नास्ति भयसम्भावनाऽपीति भावः । यद्वा पित्राद्यागमनभयाविष्टमानसा वयं कथं न याम इतिचेद् तत्राह ॥ घोररूपा ॥ रात्रित्वाद् । पुनश्च घोरसत्त्वनिषेविता, तस्मादत्र कोऽपि नायास्यतीति भावः । अतः सर्वशङ्का विहायेह मत्पार्श्वे स्थेयम् । यतः, स्त्रीभिः । स्त्रीणां हि एवंविधे देशे काले चैवंविधरमणसंनिधाववस्थानं बहुयोग्यमिति भावः । तत्रापि न स्त्रीमात्रस्य अपि तु युष्मद्विधानामित्याशयेनाह ॥ हे सुमध्यमा इति ॥

निवृत्तिपक्षे, ब्रूतागमनकारणमित्युपक्षिप्य कारणाभावमुपपादयति ॥ रजनीति ॥ एषा अद्वैतवाद्यभिमता निर्विशेषा चित्, रजनी रात्रितुल्या । सर्वस्यापि तत्राध्यासाद् । अत एव घोरं सर्वविशेषविनिर्मुक्तत्वादत्यन्तशून्यारण्यवदत्यर्थभयङ्करं रूपं यस्याः सा । अत एव घोरं स्वपरात्यन्तदुःखकरं सत्त्वं बलमन्तःकरणं

वा येषां सर्वनिषेधप्रतिपादनपराणां तैर्नितरां सेविता । अतो व्रजं प्रति यात बहुवेदवाक्यानुसरणं कुरुत । इह निर्विशेषचिति प्रतिपादकतया न स्थैर्यं, स्त्रीस्थानापन्नाभिः श्रुतिभिः । यतो हे सुमध्यमाः! शोभनार्थप्रतिपादनेन सुन्दर्य्यः । अयं भावः । ब्रह्मणि वेदान्ता न प्रमाणम् । तत्र तत्प्रामाण्यस्याशक्यनिरूपणत्वात् । तथाहि । ब्रह्म मानान्तरगम्यं न भवति, किं वा भवति । नाद्यः । मानान्तरविषयत्वयोग्य एव सिद्धे शब्दप्रवृत्तिदर्शनात् । न द्वितीयः । वेदान्तप्रतिपाद्ये ब्रह्मणि मानान्तरानुपलब्धेः । ननु लोकेऽपि न वाक्यार्थे मानान्तरापेक्षा । वाक्यार्थस्य सर्वत्रापूर्वत्वात् । सिद्धबोधि वाक्यमपि न स्वार्थप्रमितौ तदभावशङ्कानिवृत्तये वा मानान्तरमपेक्षते, किन्तु वाक्यस्य वक्तृदोषप्रवृत्ताप्रामाण्यशङ्कानिवृत्तये ब्रह्म त्वऽपौरुषेयवेदान्तलक्ष्यमखण्डसद्वाक्यार्थ एवातस्तल्लक्षकवेदान्तानां न मानान्तरापेक्षा । अतः कथं ब्रह्मणि वेदान्तानामप्रामाण्यमितिचेन्न । अखण्डार्थत्वस्य लोकवेदयोरसिद्धत्वात् । न हि नानापदार्थसंसर्गविषयस्य वाक्यस्यैकप्रातिपदिकार्थविषयत्वं सम्भवति । वाक्यं हि अभिधां, गौणीं, लक्षणां वा वृत्तिमादाय स्वार्थं बोधयतीति प्रसिद्धम् । नचास्वन्यतमयापि वृत्त्या वेदान्ता अखण्डमर्थं बोधयन्ति । मुख्यवृत्त्या पदानामेकार्थवृत्तित्वानुपपत्तेः स्पष्टत्वात् । गौणीलक्षणयोः स्वीकारेऽप्यन्यतरपदवाच्यार्थाल्लक्ष्याद्वा अधिकयोर्लक्ष्यमाणगुणान्यतरपदवाच्यार्थयोः सत्त्वाद्वाक्यार्थस्यैकपदार्थमात्रवृत्तित्वासिद्धिः । ननु पदद्वयेऽपि लक्षणाङ्गीकाराल्लक्षणापक्षे नास्ति दोष इति चेन्न । अर्थभेदाभावे पदानां पर्यायत्वादाकाङ्क्षादेरभावाद्वाक्यत्वभङ्गापत्तेर्वाक्यवैयर्थ्यापत्तेश्च । ननु वाच्यार्थभेदान्न पर्यायिता । वाक्यस्य पदानतिरिक्तत्वेऽपि प्रमितिजनकत्वेनार्थवत्त्वात् । नापि वाक्य-

वैय्यर्थ्यमिति चेन्न । वेदान्तानामनुदितानस्तमितचैतन्यमात्रस्वरूप-परब्रह्मविषयप्रमितिजनकत्वाङ्गीकारेऽविषयसिद्धान्तभङ्गापत्तेः । प्रमाणवैफल्याच्च । तस्मान्न श्रुतिमस्तकप्रतिपाद्यत्वविवाद इति॥२९॥

ननुभवत्प्राप्तीच्छया समागतानां भवद्गीतादिनोद्दीपितस्मराणां विलम्बसहनाक्षमाणां स्वभक्तानामस्माकं त्यागो नोचित इति चेत् तत्राह ॥

मातरः पितरः पुत्रा भ्रातरः पतयश्च वः ॥
विचिन्वन्ति ह्यपश्यन्तो मा कृध्वं बन्धुसाध्वसम् ॥ २० ॥

मातर इति ॥ कासाञ्चिन्मातरः, कासाञ्चित् पितरः, कासाञ्चित् पुत्राः कासाञ्चिद् भ्रातरः, कासाञ्चित् पतयः सर्वे गृहे अपश्यन्तो विंचिन्वन्ति मृगयन्ते, न त्वन्वेषणान्निवृत्ता अतो मात्रादिष्वेकोऽपि यद्यागत्य मत्पार्श्वे युष्मान् पश्येत् तदोभयेषां भयलज्जे स्यातामतोऽत्र स्थित्या बन्धुभ्यः स्वस्य भयं, बन्धूनां मम चाऽपकीर्तिभयं च मा कुरुताऽतो बन्धूनां साध्वसपरिहाराय व्रजं प्रति यात, अन्यत्र वा चलत । तथाच संभ्रमस्ति भवतीनां प्रतिबन्धकमतो मम को दोष इति भावः ।

अनभिज्ञापक्षे, ननु नास्त्यस्माकं किञ्चिदपि भयं समुदायनिविष्टत्वाद् भवत्समीपस्थत्वाच्च । नाप्यपकीर्तिभयम् । संघश आगतत्वादऽज्ञातस्थाने स्थितत्वाच्चेति चेत् तत्राह ॥ मातर इति ॥ भवतीनां नियामिका युष्मान् गृहेष्वदृष्ट्वा विचिन्वन्ति । अतस्तासां साध्वसं मा कृध्वम् । ननु ता अप्येवंविधा एवातः स्त्रीत्वाद्वा नागमिष्यन्तीतिचेत् तत्राह॥ पितर इति ॥ ते स्वकुले कलङ्कपातशङ्कया विचिन्वन्त आगमिष्यन्तीत्यर्थः । ननु ते ऽपि नागमिष्यन्ति, संघश आगतास्त्वस्मासु शङ्कानुत्थानात् । स्त्रीस्वभावस्य तैरपि ज्ञातत्वाच्चेतिचेत् तत्राह । पुत्रा इति । पुत्राणां रक्षणाग्रहे महती लज्जा वर्तते

इति भावः । ननु ते बाला इति चेत् तत्राह ॥ भ्रातर इति ॥ ते ह्यन्वेषणे समर्था लज्जावन्तश्चातस्ते अदृष्ट्वा लज्जया कदाचिच्छरीरमपि त्यजेयुरिति भावः । ननु तरुणास्ते वयं च तरुण्योऽतो लज्जयान्वेषणार्थं नागमिष्यन्तीति चेत् तत्राह ॥ पतय इति ॥ यद्वा, ननु रात्रौ पतिसन्निधौ स्थितिसम्भवानया तेऽन्वेषणाय न प्रवर्तन्त इति चेत् तत्राह ॥ पतय इति ॥ ते रात्रौ भोगापेक्षा भवन्त्यतोऽदृष्ट्वा अन्वेषयन्तोऽत्रागमिष्यन्ति । तस्मात् तदीयो रसोऽन्यस्मै न देयः । भोगसिद्धेस्तत एव सुकरत्वादिति भावः । नन्वेवं तर्हि ते यदा आगमिष्यन्ति तदा तैः सार्द्धमेव गमिष्यामोऽतस्तावत् त्वमस्मत्समीपे तिष्ठेति शङ्कानिरासाय, विचिन्वन्तीत्युक्तम् । तथाच गृहान्निर्गता मध्ये स्फुटितैर्मार्गान्तरैर्गताः सन्तो विचिन्वन्त्येवातोऽत्रागमनं तेषां दुर्घटमतो विचिन्वन्तो ऽतिखेदं मरणं वा प्राप्नुयुरित्यर्थः । नन्वस्तु, किमस्माकं तैरितिचेत् तत्राह ॥ मेति ॥ तैः सार्द्धमेवावस्थानयोग्यानां कुलाङ्गनानां युष्माकं तत्साध्वसोत्पादिका प्रवृत्तिर्नोचितेति भावः ॥ मानिनीपक्षे, ननु किमित्येवं निर्लज्जः सन् बहुपरिवाररक्षिता लज्जावतीरस्मान् प्रति ब्रवीषि, वयमत्र क्षणमात्रमप्यवस्थातुं न शक्नुमः । यतः परमप्रेमास्पदा अस्मानऽपश्यन्तोऽस्मन्मात्रादयोऽन्वेषणाय निःसृताः स्युरतस्तेषां मध्ये यद्येकोऽप्यत्रागत्य वाऽस्मान् पश्येत् तर्हि महाननर्थो भवेत् तस्मात् तदागमनात् पूर्वमेव झटित्येवास्माभिर्गन्तव्यमिति चेत् तत्राह ॥ मातर इति ॥ बन्धुभ्यः साध्वसं मा कुध्वम् । यतस्ते मात्रादयोऽपश्यन्तः सन्तो विचिन्वन्त्येव, न तु गहनेऽस्मिन् वने तेषामागमनं सम्भाव्यत इति भावः । यद्वा, विचिन्वन्ति, न त्वत्रायान्ति, नाप्यायास्यन्ति । हि यतोऽपश्यन्तो न द्रक्ष्यन्त्येव वनस्यास्यातिनिबिडत्वान्मया तामस्या विद्यया एतत्स्थानस्याच्छादितत्वाच्च ।

अतस्तद्भयं विहाय मया सार्द्धं यथेष्टं रमतेति भावः ॥

निवृत्तिपक्षे, ननु निर्विशेषमखण्डं ब्रह्म यथोक्तरात्रिकल्पमिति त्वया कथं ज्ञातमित्याशङ्क्य बहुविद्वत्सम्प्रतिपत्तेरित्याह ॥ मातर इति ॥ ये मात्रादिस्थानापन्नाः सांख्याध्वरमीमांसकादयो विचिन्वन्ति, यथोक्तं ब्रह्म श्रुतिप्रमाणकमस्ति ? न वेति ? विचारयन्ति तथापि न पश्यन्त्येव । तथा च यदि स्यात् तर्हि परमविचक्षणैरन्वेष्यमाणमवश्यमुपलभ्येत, नोपलभ्यते । स्फीतालोकवर्तिघटानुपलब्ध्या घटाभाववत् तदभावो निश्चीयत इति भावः । तस्माद् यथोक्तरात्रिकल्पत्वत्राणाय परमोद्योगवत्त्वादेते वो बन्धवस्तेषां साध्वसं तन्मताननुमोदनेन वेदबाह्यत्वप्राप्तिभयं मा कुध्वम् । स्वरक्षकस्य रक्षणमेवोचितं, न तु भयप्रदानमिति भावः ॥२०॥

एवमुक्ता अहो भगवदनुग्रहालाभान्निष्फलमेवास्माकमागमनं जातमिति विचार्य खिन्नचित्ता आश्वासयति ।

दृष्टं वनं कुसुमितं राकेशकररञ्जितम् ॥
यमुनाऽनिललीलैजत्तरुपल्लवशोभितम् ॥ २१ ॥

दृष्टमिति ॥ युष्माभिरत्रागत्य वनं दृष्टमेव । नन्वेवं चेत् तर्हि कलगीतेन किमर्थमत्र वयमाहूता इत्याशङ्कापि परिहृता । वनं दृष्ट्वा मया विचारितमहो इदं वनं स्वभक्ताभ्योऽपि प्रदर्शनीयमित्याशयेन कलगीतेन मयाऽऽहूता इति भावः । ननु का वाऽत्र दर्शनीयतेति चेत् तत्राह ॥ कुसुमितमिति ॥ ननु कुसुमितवनमेव यद्यस्माकं प्रदर्शयितव्यं तवाभीप्सितं स्थितं तदा दिने एव वयं कुतो नाकारिता इतिचेत् तत्राह ॥ राकेशः पूर्णचन्द्रस्तस्य करैः किरणै रञ्जितम् । तथाच दिने रात्र्यन्तरे वा नास्त्येवंविधा शोभेति भावः । किञ्च, वायुरप्येवंविध समयान्तरदुर्लभ इत्याशयेनाह ॥

यमुनास्पर्शिनोऽनिलस्य वायोर्लीला मन्दगतिस्तया राजन्तः कम्पमानास्तरूणां पल्लवास्तैः शोभितम् । तस्मान्नास्यागमनवैयर्थ्यमिति भावः ॥ अनभिज्ञापक्षे, ननु भवतु, तत्र निकटे न स्थीयते । अन्यप्रदेशे गत्वा स्थास्याम इत्यभिप्रायवतीरालक्ष्याह ॥ दृष्टमिति ॥ एवंविधप्रदेशान्तरं नास्ति । अयं च प्रदेशो दृष्ट एव भवतीभिरतोऽलं वृथा कालक्षेपेणेति भावः । यद्वा, किमेवं मात्रादिबन्धुभयं प्रदर्श्यते, तत्र त्वऽस्माकं दत्तजलाञ्जलिप्रायमेवान्यथा तान् परित्यज्य रात्रौ बहिरागमनं कथं भवेत् । त्वं बिभेषि चेत् त्वमेवेतो गच्छेति प्रणयकोपवतीरालक्ष्याह ॥ दृष्टम् ॥ अहो मयापि ज्ञायते, निर्दोषाणां नास्ति कुतो भयम् । तथापि बुद्धिमतीनां वृथा गृहान्निःसरणस्यायुक्तात्वाद्वनशोभेक्षणार्थमागताः स्युस्तच्च सम्पन्नमितो वृथाऽत्र न स्थेयमिति भावः । यद्वा, तच्छ्रुत्वा लज्जयेतस्ततो विलोकयन्तीरवलोक्याह ॥ दृष्टमिति ॥ अहो ज्ञातं मया, साध्वीनां भवतीनां गृहान्निर्गमनं वनेक्षणाय, तच्च जातमतो गन्तव्यमिति भावः । ननु प्रसङ्गादत्रागताः फलानि गृहीत्वा यास्याम इतिचेत् तत्राह ॥ कुसुमितम् ॥ न तु फलितम् । एतच्छ्रुत्वोदूर्ध्वदृष्टीरालोक्याह॥राकेशकररञ्जितम् ॥ अतः शरत्पूर्णचन्द्रचन्द्रिकाशोभेक्षणाय भवत्यः समागताः स्युस्तदपि जातमिति भावः । यमुनाभिमुखीरालोक्याह ॥ यमुनेति॥ मानिनीपक्षे, ननु तथापि गृहाद् बहिरस्माकं मनो न रमतेऽतः कथमत्र तिष्ठाम इतिचेत् तत्राह ॥ दृष्टमिति ॥ कुसुमितमिदं वनं भवतीभिर्दृष्टम् । तथाच नास्ति गृहेष्वेवंविधकुसुमशोभाऽतोऽत्र कस्य मनो न रमते। प्रत्यक्षोपलब्धस्यापलापो न युक्त इति भावः । किञ्चैवंविधं राकेशकररञ्जनं यमुनानिललीलैजत्तरुपल्लवशोभा च गृहेषु क्वास्ति । तस्मादेतत् सर्वमवलोक्यैव प्रेयस्यो भवत्यो मया

स्मृताः । स्मृत्वा कलगीतेनाहूता भवत्योऽप्यागत्य तथैवं दृष्टवत्यो-ऽतो गमनाग्रहं विहायेह स्थेयम् । गोष्ठं प्रति मा यातेति परेणा-ऽन्वयः ॥

निवृत्तिपक्षे, ननु भवन्तो विवेकचन्द्रानुदयाद्वैराग्यादिरहिता अस्मदभिप्रायं न जानन्ति । विवेकादिसाधनसम्पन्नान्तःकरणास्तु जानन्तीत्याशङ्क्याह ॥ दृष्टमिति ॥ राकेशस्य विवेकचन्द्रस्य करै-र्विचारभेदै रञ्जितं शान्त्यादिलक्षणकुसुमशोभितमन्तःकरणलक्षणं वनं दृष्टमित्युपहासः । नाममात्रे श्रुत्यर्थाभासा ये विवेकादिमन्त इति भावः । यतो यमुनास्थानीयाऽविद्यासम्बन्धिनोऽनिलस्य तत्स्थानीयस्य विक्षेपस्य लीलया तत्तद्विषयलालसया एजन्तस्तरु-स्थानीयस्य वैराग्यस्य पल्लवास्तत्स्थानीया अविचारोत्था वैरा-ग्यभेदास्तैः शोभितम् । यद्वा, यथोक्तयमुनानिललीलया विलासेन एजन्तश्चलन्तः प्रवेपिताः संसारवृक्षस्य पल्लवा विषयप्रवालास्तैः शोभितम् । तथाच श्रुतवेदान्तानामपि यथापूर्वसंसारोपलम्भे तेषां विवेकाद्याभासमवलोक्य तन्मतानुसरणं नोचितमिति भावः॥२१॥

अहो नाद्यापि भगवतस्तोषोऽस्मासु जातो वर्ततेऽतस्तदर्थं क-मुपायमनुतिष्ठाम इति चिन्तयन्तीर्व्याकुलचित्ता अवलोक्य, वर्णा-श्रमाचारवता पुरुषेण परः पुमान् * विष्णुराराध्यते पन्था ना-न्यस्तत्तोषकारणमित्युक्तत्वात् स्वधर्माचरणमेव मम तोषोपायोऽत-स्तत्रैवाभ्यास उचित इत्याशयेनाह ॥

तद् यात मा चिरं गोष्ठं शुश्रूषध्वं पतीन् सतीः ॥
क्रन्दन्ति वत्सा बालाश्च तान् पाययत दुह्यत ॥२२॥

तद् यातेति॥ यस्मादत्रावस्थानं निष्फलं, तत्र गमनं च स्व-धर्माचरणेन मम तोषकरत्वात् सफलं तत् तस्माद् गोष्ठं यात ।

तत्रापि, मा चिरं शुभकार्ये विलम्बो नोचित इति भावः । तत्र गत्वा पतीन् सेवध्वम् । यतो, हे सत्यः! पतिव्रतानां युष्माकमिदमेवानुष्ठेयमिति भावः । यद्वा, सतीः पतिव्रताः श्वश्र्वाद्याः स्त्रीः सेवध्वम् । संसर्गजा गुणदोषा भवन्तीति न्यायाद् गुणवतीनां सेवनेन भवत्योऽपि तथाविधा भविष्यन्तीति भावः । ननु स्वधर्माचरणस्य भवच्चरणाभिमुख्यमेव फलं, तस्य जातत्वात् ततो निवृत्तिरेवाधुना श्रेयसी । आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते * योगारूढस्य तस्यैव शमः कारणमुच्यत* इत्यादिशास्त्रादतस्त्वदाभिमुख्यमसहमानास्ते कथं सेवनीयाः । ततस्तादृशं पातिव्रत्यं त्वदङ्घ्रिपाथोरुहयोर्नीराजनीकृत्य दूरतस्त्यक्तमस्माभिरित्याशङ्क्य, दयया सर्वभूतेष्विति*दयाया मदाराधनाङ्गत्वात् सा त्ववश्यमपेक्षितेत्याशयेनाऽऽह ॥ क्रन्दन्तीति ॥ अतस्तान् गत्वा दुग्धं पाययत, तदर्थं गाश्च दुह्यत ॥ अनभिज्ञापक्षे, एवंव्याजेनोद्दीपयित्वा निषेधेनात्यासक्तिमुत्पादयति ॥ तदिति ॥ हि यद् यस्मादत्रावस्थाने फलं किञ्चिदपि नास्ति तत् तस्माद् गोष्ठं यात । तत्रापि मा चिरं, यतः पतिशुश्रूषासमयो वर्तते इत्याशयेनाह ॥ शुश्रूषध्वं पतीन् ॥ यतो हे सत्यः, अतः क्षणमात्रमपि परपुरुषस्य मम पार्श्वेऽवस्थानं पतिव्रतानां युष्माकं नोचितमिति भावः । यद्वा, कथं भूतान् पतीन्, सतीः।एते युष्मत्पतयः पूर्वजन्मनि पतिव्रताःस्त्रियः स्थिताः पुरुषभावनया पुरुषत्वं प्राप्ता, भवत्यस्तु पूर्वं पुरुषाः स्थिताः स्त्रीषु आसक्तचित्तत्वात् स्त्रीत्वं प्राप्ता, अतः पुनर्वैपरीत्यार्थं पतीन् शुश्रूषध्वमित्याशयः । किञ्च, करुणाऽपि स्त्रीणां स्वाभाविकी भवति । अतः करुणावतीनां युष्माकं बाला वत्साश्च क्रन्दन्तीत्यतो गत्वा तान् पाययत, दुह्यत ॥ मानिनीपक्षे यद् यस्माद् बन्धुभयं नास्ति, वनशोभादिरूपा रमणसामग्री चैतादृशी ततः शीघ्रं मा यात, कि-

न्तु रासानन्तरं रान्त्यन्ते यास्यथेत्यर्थः । ननु पतिशुश्रूषणादिबहुव्यापारस्योर्वरितत्वान्नास्त्यस्माकं चिरतरकालमवस्थानाऽवकाश इति चेत् तत्राह ॥ पतीन् मा शुश्रूषध्वम् । सतीः श्वश्रूप्रमुखा मा शुश्रूषध्वम् । सतीपदवीं वा मा सेवध्वम् । नन्वस्माकं बाला वत्साश्च क्रन्दन्त्यतः कथमत्र स्थेयमित्याशङ्क्य क्षणं नेत्रे निमील्य सकैतवं ध्यात्वाऽऽह ॥ वत्सा बालाश्च मा क्रन्दन्ति ॥ अहमत्र स्थित एव सिद्धकलया जानामि—ते सुखेन वर्तन्ते, न त्वाक्रोशन्ति तस्मान्मा पाययत । दासादिभिः पायितत्वात् तु, मा दुह्यत । तैरेव दोहनस्यापि कृतत्वादित्यर्थः ॥

निवृत्तिपक्षे, यस्मान्निर्विशेषब्रह्मप्रतिपादनं न, तत् तस्मादाशु गोष्ठं क्रियार्थकश्रुतिसमुदायं यात, स्वसमुदायनिविष्टा भवत, क्रियामेव प्रतिपादयत । तदुक्तम्—आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति । ब्रह्मणः परिनिष्ठितरूपत्वात् परिनिष्ठिते वस्तुनि च प्रत्यक्षादीनामपि प्रवृत्तिसम्भवात् तैरसंवादे प्रामाण्यस्य दुर्लभत्वात् सार्थक्याय क्रियामेव प्रतिपादयतेत्याशयः । ननु पौरुषेयवाक्यानि प्रमाणान्तरापेक्षत्वात् संवादविसंवादाभ्यां प्रामाण्यमप्रामाण्यं वा लभन्ते । अपौरुषेयाणां वेदवाक्यानां तु प्रमाणान्तरानधिगम्यविषयतया चक्षुरादिवदनपेक्षमेव प्रामाण्यमिति चेत् । सत्यम् । तथापि अनपेक्षप्रामाण्ययोरपि चक्षुःस्पर्शनयोरर्थे विसंवादाद् यथाऽन्यतरस्याप्रामाण्यं तथा ब्रह्मैकत्वश्रुतीनामहं मनुष्य इत्यादिप्रत्यक्षस्य च परस्परव्याघाताच्छब्दस्याप्रामाण्यम् । तस्मात् तत्रैव स्थित्वा पतीनिन्द्रचन्द्रादिरूपान्, तत्कर्मप्रतिपादनेन शुश्रूषध्वम् । यतो, हे सत्यः ! स्वाध्यायविध्युपात्तत्वादप्रामाण्यशङ्काकलङ्काऽयोग्याः । किञ्च, सर्वमिथ्यात्वसिद्धान्तमाकर्ण्य वत्सबालस्थानीयकर्माधिकारिणः सर्वेऽपि क्रन्दन्ति, अत-

स्तान् पाययत दुह्यत । तत्कर्मफलं सत्यमिति प्रतिपादनेन तत्स-न्तोषं सम्पादयतेत्यर्थः ॥ २२ ॥

एतच्छ्रुत्वाऽत्यन्तखिन्नचित्ता आलक्ष्य, अथवा नास्ति भवतीनां वनशोभेक्षणेच्छा, नापि मदपेक्षयाधिकं पुत्रादौ स्नेहोऽतो मदर्थमत्र समागता इत्याह ॥

अथवा मदभिस्नेहाद् भवन्त्यो यन्त्रिताशयाः ॥
आगता ह्युपपन्नं तत् प्रीयन्ते मयि जन्तवः ॥ २३ ॥

अथवेति ॥ मयि यः स्नेहस्तेन यन्त्रिताशया वशीकृतचित्ताः सत्यो, मद्दर्शनार्थं यूयमागता इति स्यात् । तदेतदुपपन्नमुपपत्ति-युक्तम् । न त्वयुक्तः पक्षः । हि यतः सर्वेऽपि जन्तवो मयि प्रीता भवन्ति । यद्वा उपपन्नं सिद्धम् । यतो मयि दृष्टे जन्तवः प्रीयन्ते अतो भवत्यो मद्दर्शनेन प्रसन्नाः सत्यो गच्छतेति भावः ॥ अनभिज्ञापक्षे, एवं श्रुत्वा संरम्भक्षुभितदृष्टीरालक्ष्य ततोऽप्यधि-कक्षोभमुत्पादयति ॥ अथवा, वनादिकं द्रष्टुं नागताः, ते पक्षा वृथैव मया कल्पिताः । भवत्यस्तु मयि यो योजितः स्नेहः स्वाभा-विकी प्रीतिर्न तु कामाद्युपाधिका, तेन यन्त्रिताशया आगतास्त-दुपपन्नम् । अयमेव पक्ष उपपन्नः । हि यतः सर्वे प्राणिनो मयि प्रीयन्ते । तथाच सामान्यप्रीत्यतिशयवत्यो मद्दर्शनार्थमागताः । तस्यापि जातत्वाद् गन्तव्यमिति भावः । अथवा, यतो मयि ज-न्तवः प्रीयन्ते अतो मत्स्नेहाद् भवत्योऽपि यन्त्रिताशयास्तदेतदु-पपन्नम् । यत आगताः ॥ मानिनीपक्षे, पूर्वं यद्यपि प्रयोजनान्तरार्थ-मागता भवत्यस्तथापि मन्मनोरथपूर्त्यर्थमत्र तिष्ठतेत्युक्तमिदानीं भवतीनां मयि स्नेहातिशयो वर्तते इति चिरकालान्मया बुद्ध्यते।ततः किमर्थं तत्तिरोधानं क्रियत इत्याशयेनाह ॥ अथवा मदभिस्नेहाद्

भवन्त्यो यन्त्रिताशया यत आगताः । भवत्यस्तु योग्या एव । मयि तु सर्वेऽपि जन्तवः प्रीयन्तेऽतो मत्स्नेहाकृष्टचेतसामत्रागमनमुपपन्नम् । बहुयोग्यं जातम् । अतोऽत्र स्थित्या तत्फलं सम्पाद्यमिति भावः ।

निवृत्तिपक्षे पूर्वं श्रुतीनां समस्तानां क्रियापरत्वमुक्तम्।तत्र ब्रह्मप्रतिपादकश्रुतीनां क्रियापरत्वासंभवादानर्थक्यं, हुंफडादिवज्जपमात्रोपयोगित्वं वाऽस्त्विति सूचितम्।इदानीमध्ययनविध्युपात्तानां वेदान्तानामानर्थक्यायोगं, प्रतीयमानार्थस्य प्रत्याख्यानासम्भवं चाभिप्रेत्याऽस्तु वा कर्मापेक्षितकर्तृस्वरूपदेवतादिप्रकाशनेन क्रियाविधिशेषत्वमुपनिषदामिति पक्षान्तरमाह ॥ अथवा मयि अस्मत्प्रत्ययगोचर आत्मनि अभिस्नेहात् प्रतिपादनपरत्वाद्, यन्त्रिताशया आनर्थक्यं जपोपयोगित्वं वा गमयितुमशक्यास्तर्हि, उपपन्नं कर्मणा सम्बद्धं कर्तृदेवतादिरूपमात्मानमागतास्तत्स्वरूपप्रकाशने सङ्गताः । एवं रीत्या प्रतिपाद्यमाने मयि आत्मनि सति जन्तवः सर्वेऽपि लोकाः प्रसन्ना भवन्तीत्यर्थः ॥ २३ ॥

यद्यपि भवत्यो मयि स्नेहातिशयवत्यो मद्दर्शनार्थमत्रागता इत्यहं जानामि, तथापि श्रुतिस्मृतिबोधितस्वधर्मत्यागोऽयमनिष्ट इत्याशयेनाह ।

भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया ॥
तद्बन्धूनां च कल्याण्यः प्रजानां चानुपोषणम् ॥२४॥

भर्तुरिति ॥ भर्तुः शुश्रूषणं स्त्रीणां पर उत्कृष्टो धर्मः । स्त्रीणामिति विशेषणेन, एतावानेव लोकेऽस्मिन् पुंसां धर्मः परः स्मृतः * भक्तियोगो भगवति तन्नामग्रहणादिभिरित्यादिशास्त्रात्

पुरुषाणां साक्षान्मद्भजनमभिहितम् । स्त्रीणां तु स्वपतिरूपस्य ममाराधनमुक्तम् । नैव यज्ञक्रिया काचिन्न श्राद्धं नोपवासकम् * या तु भर्तरि शुश्रूषा तया स्वर्गं जयत्युतेत्यादिशास्त्रात् । तत्राप्यऽमायया कपटराहित्येन । तस्य बन्धूनां स्वश्वश्रूवादीनां च शुश्रूषा, प्रजानां पुत्रादीनां चानुपोषणं स्तनादिदानेन पित्रादिभिः पोष्यमाणानां तदनु स्वेन पोषणमिति वा। हिशब्दो यथोक्तधर्मस्य लोकवेदप्रसिद्धिं द्योतयति । श्रुतिस्मृती ममैवाज्ञे तदुल्लङ्घ्य प्रवर्तते * आज्ञाभङ्गी मम द्वेषी मद्भक्तोऽपि न वैष्णव * इत्यादिशास्त्रात् स्वधर्माविरोधेन मे सेवामार्गः कल्याणकर इति सम्बोधनाशयः ॥ अनभिज्ञापक्षे, ननु मत्स्नेहाकृष्टमानसा मदर्थमागता इति यदि जानासि तर्हि प्रतियात व्रजं, तद् यातेति किमिति निष्ठुरं ब्रवीषि । न हि परमस्निग्धानामियं रीतिरित्याशङ्क्य, पापान्निवारयति योजयते हिताय * इति मित्रलक्षणस्याभिहितत्वाल्लोकद्वयहितार्थमिदं मदीयं वाक्यमतिकोमलमित्याशयेनाह ॥ भर्तुरिति ॥ एतेन त्वयि स्निग्धत्वात् त्वच्छुश्रूषणमधुना कर्तुं प्रवृत्ता अतो भवताऽपि तदनुमोदनं कर्तव्यमिति शङ्कापि निरस्ता । यथायोग्यस्नेहस्य शुश्रूषणस्य च युक्तत्वात् । तथाच भर्तरि कर्तव्यं स्नेहादिकमन्यत्र न कार्यमतो मय्यपि यथा जन्तवः प्रीयन्ते तथा प्रीतिः कर्तव्येति भावः । भवतीनां सर्वेऽपि सन्तीति सम्बोधनाशयः ॥ मानिनीपक्षे, नचात्राऽधर्मः शक्यो, ममैव युष्मद्भर्तृत्वे मत्सेवनस्य परमधर्मत्वादित्याशयेनाह ॥ अमायया भर्तुर्बालभावादारभ्य निष्कपटतया भर्तृत्वेन वृतस्य मम शुश्रूषणं परो धर्मो, न तु बन्धुभिर्बलात्कारेणापादितस्य । भीष्मेणाऽम्बायाः परित्यागेन बलापादितस्य धर्मतो भर्तृत्वासिद्धिज्ञापनायैतत् । तस्मात् कपटागतभर्तृतद्बन्ध्वादिसेवादिकं विहाय, मम मद्बन्ध्वादिसेवनादिकमेव भवतीनां धर्मतोऽपि प्राप्त-

त्वादावश्यकमित्यर्थः । एवं कृते नास्ति कदाप्यकल्याणमिति संबोधनाशयः ॥

निवृत्तिपक्षे, तस्माद् भर्तृस्थानीयस्य प्रतिपाद्यार्थस्य सेवनं तत्परत्वमेव स्त्रीस्थानापन्नानां श्रुतीनां धर्मः शक्त्यादिलक्षणः । ननु तात्पर्येणान्यपरत्वेऽपि स्वार्थपरता न हीयते इति चेत् तत्राह ॥ अमाययेति ॥ यत्परः शब्दः स शब्दार्थ इति न्यायात् । तथाच निर्व्याजेन स्वार्थपरत्वं परमो धर्मः । उभयपरत्वे वाक्यभेदादेकपरत्वमावश्यकम् । सम्भवति स्वार्थपरत्वेऽन्यपरता न न्याय्येति भावः । क्वचिच्छक्यार्थासम्भवे, तद्बन्धूनां शक्यार्थसम्बन्धिनां सेवा प्रतिपादनमपि धर्मः । प्रजानां तत्स्थानीयानां मतानां विद्वद्भाविततर्कैः, पुष्टानामनुपोषणं, तत्रैव प्रमाणतयोपस्थिततया पुनरतिपुष्टत्वसम्पादनं च । यतो हे कल्याण्यः सर्वकल्याणकृत्प्रवृत्तिनिवृत्तिबोधनपरशास्त्ररूपाः । अन्यथा शास्त्रपदप्रतिपाद्यत्वमेव भवतीनां न स्यात् । प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा * पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते * इति शास्त्रलक्षणाभिधात् ॥ २४ ॥

यतः पतिरेव स्त्रियः परमं दैवतं, तदाराधनं च परमो धर्मः, तेनैव च लोकद्वयविजय इति लोके शास्त्रे च घण्टाघोषस्तस्माद् दुःशीलत्वाद्यनेकदोषयुक्तोऽपि न त्याज्यः । किमुत दोषविनिर्मुक्त इत्याशयेनाह ।

दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा ।
पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी ॥ २५ ॥

दुःशील इति ॥ दुष्टं शीलं द्यूतादिव्यसनं यस्य सः । दुर्भगो मन्दभाग्यः । वृद्धो जराजर्जरीभूताङ्गः । जडो मूर्खः । रोगी म-

ह्यारोगग्रस्तः । अधनः स्वोदरपूरणेऽप्यसमर्थः । एवमुक्तदोषेष्वेकैकदोषवान्, किं वा सकलदोषयुक्तोऽपि पतिर्लोकद्वयविजयेच्छावतीभिः स्त्रीभिर्न हातव्यो नैव त्याज्यः। पातकी तु यावत् पातकं तावद्धातव्यः । पतिं त्वपतितं भजेत् * आशुद्धेः सम्प्रतीक्ष्यो वै महापातकदूषित * इत्यादिवचनात् । अनभिज्ञापक्षे, ननु अस्माकं पतयो नास्मदनुकूला अनुरूपाश्चातस्त्यक्ता एवातः किं तत्सेवाद्युपदेशेनेति चेत् तत्राह ॥ दुःशील इति ॥ षड्विधैश्वर्ययुक्तमपि परपुरुषमवलोक्य षड्विधदोषयुक्तोऽपि स्वपतिर्न हातव्यः। व्रजवासी तु सर्वसद्गुणयुतो निष्पापश्चातः कथं त्याज्यो भवेदित्याशयः । मानिनीपक्षे— तस्माद् बलात्कारेणाहृतयाऽप्यऽम्बया स्वमनसा वृतः पतिर्न त्यक्तो, यथा च सावित्र्या पितुर्वाक्यात् सत्यवान्न त्यक्तस्तथान्याभिर्युष्मदादिभिः स्त्रीभिर्मनसा वृतः पतिर्न हातव्यः । तत्रापि षड्विधैश्वर्यसम्पन्नोऽहं, न तु दुःशीलत्वादियुक्तः। वस्तुतः सर्वदोषयुक्तोऽपि न त्याज्यः। पतिरित्येकवचनात्, स्त्रीभिरिति बहुवचनात् स्वस्यैव सर्वासां पतित्वं दृढीकृतम् । तथाच तेषां वस्तुतः पतित्वाभावान्न तत्त्यागे कश्चिद्दोष इति भावः ॥

निवृत्ति पक्षे तत्र दृष्टान्तमाह ॥ दुःशील इति ॥ वाशब्द इवार्थे। तथाच यथा पतिसम्पृक्तत्वं पतिव्रतायाः स्त्रियास्तथा वाचोऽपि स्वार्थसम्पृक्तत्वमिति भावः ॥ २५ ॥

ननु परमेश्वर आसक्तचेतसामस्माकं नास्ति जारपरमनसामिव पतित्यागादिकृतो दोष इत्याशङ्क्य मोक्षार्थं तथा चेदस्तु तथा, रमणेच्छया तु मय्यप्यासक्तानां स्वपतित्यागे दोष एवेत्याशयेनाह ।

अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम् ॥

जुगुप्सितं च सर्वत्र ह्यौपपत्यं कुलस्त्रियः ॥ २६ ॥

अस्वर्ग्यमिति ॥ कुलस्त्रियः सर्वत्र सर्वस्मिन्नपि पुरुषे औपपत्यम् अस्वर्ग्यं परलोकनाशकम् । अयशस्यमेतल्लोकनाशकम् । तत्रापि फल्गु अतिक्षुद्रम् । तथाभूतमपि कृच्छ्रं महाप्रयाससाध्यम् । किञ्च, सम्भोगकालेऽपि भयजनकम् । पुनः साधुकर्मणि प्रवृत्तावपि जुगुप्सितं निन्दितम् । चकाराभ्यां नरकपातजातिबहिष्कारादिसंग्रहः । तस्मान्मदाराधने यदि युष्माकमाग्रहस्तर्हि भगवद्बुद्ध्या तदनुष्ठेयं, न तूपपतिबुद्ध्येति भावः । अनभिज्ञापक्षे, विपक्षे दोषमाह ॥ अस्वर्ग्यम् ॥ ननु नास्माकं स्वर्गापेक्षेति चेत् तत्राह ॥ अयशस्यम् ॥ ननु तदपि नापेक्षितं, यद्वा रहसि नास्ति तन्नाश इति चेत् तत्राह ॥ फल्गु ॥ क्षणिकत्वात् । ननु मिथ्या ब्रवीषि, त्वया सह तस्यानन्तसुखजनकत्वनिश्चयादिति चेत् तत्राह ॥ कृच्छ्रम् ॥ पत्यादिवारणाद् दुःसाध्यम् । ननु निर्जनवने निवारकस्यादर्शनान्नास्ति दुःसाध्यम्, अस्तु वा, तथापि, वामता दुर्लभत्वं च स्त्रीणां या च निवारणात् * तदेव पञ्चबाणस्य मन्ये परममायुधमित्यादिवचनाद् दुःसाध्यता प्रत्युतासक्त्यतिशयहेतुरितिचेत् तत्राह ॥ भयावहम् ॥ लोकशास्त्रनिषिद्धत्वाद् यमराजादिदण्डजनितभयप्रापकम् । ननु त्वदधरसुधालोभात् सर्वमपि भयमस्माभिस्त्यक्तम् । यद्वा, यत्र निषेधविशेषो दुर्लभत्वं च यन्मृगाक्षीणाम् * तत्रैव नागरीणां निर्भरमासज्जते हृदयमिति रसशास्त्रोक्तेर्भयमपि प्रत्युत रसाधायकमेवेति चेत् तत्राह ॥ सर्वत्र स्वपरदेशयोर्व्यवहारपरमार्थयोश्च निन्दितं तत्रौपपत्यं सौख्यम् । ननु स्वाभीष्टसिद्धौ निन्दाऽस्माभिः सह्यत इति चेत् तत्राह ॥ कुलस्त्रियः ॥ कुलस्त्रीभिरेवं न वक्तव्यमिति भावः । अनेन यद्यप्यासक्तचित्तत्वाद्व्रज-

तीभिः किमपि न गण्यते, तथाऽप्युत्तमवंशोद्भवेन मया कुलस्त्रियो नैव कलङ्कनीया इत्यपि ध्वनितम् । हे कुलस्त्रिय इति सम्बोधनं वा ॥ मानिनीपक्षे, पूर्वोक्तरीत्याहमेव मुख्यः पतिस्त एवोपपतय इति तत्सङ्गमसुखमेवाऽस्वर्ग्यादिरूपम् । यद्वोत्प्रेक्षितानि स्मृतिवाक्यानि । अस्माभिस्तु भर्तृसेवादिः परो महानधर्म इत्युच्यते । स्वस्मिन्नासक्तचित्तस्य प्रेष्ठस्य दुःखजनकत्वात् । तथा अपातक्यपि दुःशीलत्वादिदोषविशिष्टः किं न हातव्योऽपि तु हातव्य एव । स्वस्य दुःखजनकत्वात् । तथाचैवंविधपत्युः सामीप्यमस्वर्ग्यादिदोषयुक्तमेवेति नर्मव्यञ्जनपरत्वेन श्लोकत्रयं व्याख्येयम् ।

यद्वा मदासक्तचित्तत्वाद्भर्तृसेवादौ नास्ति भवतीनामधिकार इत्याह ॥ भर्तुरिति ॥ अमायया निष्कपटतया, न तु भवतीनामन्यासक्तमानसत्वेन मायावतीनाम् ॥ तथा पतित्यागनिषेधेऽपि नास्ति भवतीनामधिकारो, मय्यनुरक्ततया लोकद्वयाभिलाषराहित्यादित्याह ॥ दुःशील इति ॥ किञ्चापातकी चेन्न हातव्यो, युष्मद्भर्तारस्तु पातकिन एव । जन्तुमात्रप्रीतिपात्रे जन्मप्रभृतिरक्षापरायणे मयीर्ष्यावत्त्वेन साधुद्वेषपरत्वात् कृतघ्नत्वाच्च । कृतघ्नाश्चातिपातकित्वेनोक्ताः । तदुक्तं, ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा * निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिरिति । ननु तत्सेवादावनधिकारेऽप्यौपपत्यस्य निषिद्धत्वात् तदङ्गीकारे स्वर्गादिबाधस्त्ववश्यम्भावीति चेत् तत्राह ॥ अस्वर्ग्यमिति ॥ कुलस्य ब्राह्मणाद्युत्कृष्टकुलस्य स्त्रियस्तदस्वर्ग्यादिदोषावहं, न तु गोपाङ्गनानां युष्माकम् । तथाच तन्निषेधवाक्यानि तत्पराणीति भावः ॥

निवृत्तिपक्षे यथा कुलस्त्रिय औपपत्यं दोषावहं तथा श्रुतमर्थं परित्यज्याश्रुतार्थपरत्वं श्रुतहान्यश्रुतकल्पनादिदोषावहमित्यर्थः ॥२६

नन्वेतत् सर्वं लोकदृष्ट्या भगवतोक्तम् । वयं तु पुरुषोत्तमे त्वय्यासक्ता अतो नास्माकं स्वधर्मत्यागप्रयुक्तो दोषो, भगवदाराधनस्य सर्वोत्तमधर्मत्वादित्याशङ्क्यैवं तर्हि न लौकिकस्नेहस्योपायो विधेयः । कामशेषस्य लौकिकस्य हीनत्वादिशयेनाह ॥

श्रवणाद् दर्शनाद् ध्यानान्मयि भावोऽनुकीर्तनात् ॥
न तथा सन्निकर्षेण प्रतियात ततो गृहान् ॥ २७ ॥

श्रवणादिति॥आदौ श्रवणं भगवत्प्रतिपादकवाक्यादीनां भगवति शक्तितात्पर्यावधारणम्। पश्चात् तेषामनुकीर्तनम् । अवधारितार्थस्य स्थिरीकरणायाभ्यासो मननमिति यावत् । ततो ध्यानं श्रुते मतेऽर्थे चित्तस्य स्थिरीकरणं निदिध्यासनम् । ततो दर्शनं तदर्थस्यानुभवः । भगवत्कृपया साक्षात्कारस्तस्माद् यो मयि भावः परप्रीतिलक्षणो यथा भवति न तथा सन्निकर्षेण भावो भवति । लौकिकसङ्गेन लौकिक एव कामशेषभूतो भावो भवतीत्यर्थः । ततस्तस्माच्छ्रवणाद्यर्थं गृहान् प्रति यात । यद्वा, न वयं सम्भोगार्थिन्योऽपि तु प्रेमलक्षणभक्तिमात्रेच्छावत्योऽतः सर्वं विहायात्रागता, अतस्तदर्थं भवत्सन्निकृष्टतया स्थास्याम इतिचेत् तत्राह ॥श्रवणादिति ॥ स च मयि भावः श्रवणादिना यथा भवति, न तथा सन्निकर्षेण । ततस्तदर्थं गृहान् प्रति यात। यद्वा अहो भगवत्सन्निधावत्रस्थानेऽपि वयमयोग्या इति खिन्नचित्ता आलक्ष्याह ॥ श्रवणादिति ॥ मन्मुख्यभक्ताः सामीप्यसालोक्यादिकमपि न कामयन्ते, किन्तु श्रवणकीर्तनादिभिरेव रमन्ते तेऽतो युष्माभिरपि श्रवणादिभिर्निरुपाधिको मयि भावः सम्पाद्यः, किं सन्निकर्षप्रार्थनयेति भावः। अनभिज्ञापक्षे, अहो दैव, यस्मिन् वयमनुरक्तचित्ताः

प्रेमाभिकामाः कदापि वियोक्तुमयोग्यास्ताभ्यः स्वाङ्गसङ्गं न प्रयच्छ-ति स्वसन्निधाववस्थानमपि निषेधत्यतः किं कुर्मः क्व गच्छाम इति व्याकुलमानसा लिखितचित्रवदवस्थिता दृष्ट्वा तासां पूर्णभावमा-लक्ष्य तस्य परमदार्ढ्यसिद्ध्यर्थमाह ।। श्रवणादिति ।। परिपाकपर्य-न्तं सम्पादनीयो भावो यथा श्रवणादिना भवति न तथा सन्नि-कर्षेण । सन्निकर्षस्योत्कण्ठाशैथिल्यकरत्वादपक्वे भावे त्वङ्गसङ्गो न रसावहस्तस्मात् तत्परिपाकहेतूत्कण्ठावृद्ध्यर्थं गृहान् प्रतियाते-त्यर्थः । यद्वा, अथवा मदभिस्नेहादिसनेन मयि साधारणप्रीतिमस्यो भवस्य इत्युक्त्वा कामोपाधिकप्रीतौ भर्तुरित्यादिकमुद्भावितवान् अथेदानीं तस्याभिवृद्धावुपायमाह ।। श्रवणादिति ।। यद्यपि वर्त-मानकाले कुलस्त्रीणां युष्माकं निषिद्धो भावो नास्तीत्यहं सम्यग् जानामि तथापि शुद्धभावे दोषप्रवेशभयात् तत्र दोषोद्भावनं मया कृतम् । शुद्धभावश्च श्रवणादिना यथा पूर्णतां गच्छति, न तथा सन्निकर्षेण प्रत्युत सन्निकर्षेण सन्निकटस्थित्या मालिन्यं भजते । तन्निन्दाद्युत्थानेन निवर्तते च । तस्मात् तदर्थं गृहगमनमेव युष्मा-कमुचितं, न त्वत्रावस्थानमिति भावः । यद्वा, कृष्णाङ्गसङ्गोत्क-टोत्कण्ठायुतानां कोटिब्रह्मकल्पपर्य्यन्तकुम्भीपाकादिनरकपाताद-प्यभीतानां सक्तलोकद्वयानामस्माकमाशयमविज्ञाय किममनेन प्रलाप आरब्ध इति कोपेन व्याकुलस्वान्ता आलक्ष्य तत्कोपमन्यथा प्रक-ल्प्याह ।। श्रवणादिति ।। अहो भर्तृशुश्रूषादिधर्मनिधिभूतासु यथो-क्तदोषगन्धेनापि विमुक्तास्वस्मासु दोषमारोप्यायं प्रलपतीति को-पो न कार्यः । उक्तवाक्यस्य प्रासङ्गिकत्वात् । युष्मदभिप्रेतस्तु भावः शुद्ध एवेत्यहं सम्यग् जानामि । स च मपि यथा श्रवणा-दिना वृत्तिं लभते, न तथा सन्निकर्षेणः । ततो गृहान् प्रतियातेत्य-र्थः । मानिनीपक्षे, ननु किमेवं कल्प्यते,सद्भावगृहीतोऽहमेव भव-

तीनां भर्ता, न तु पित्रादिदत्ता गोपा इति । सद्भावस्यापि सम्प्रति सन्निकृष्टेषु तेष्वेव सत्त्वादुत्पन्नस्याप्यसन्निकृष्टे त्वयि सम्प्रति निवृत्तत्वादितिचेत् तत्राह ॥ श्रवणादिति ॥ यथा श्रवणादिना मयि भावो युष्मदन्तःकरणेषु वर्तते तथा सन्निकर्षेण पतिंम्मन्येषु तेषु नास्तीत्यहं सम्यग् जानामीत्यतः किमिति स्वभावतिरोधाने भवत्यः प्रवृत्तास्तस्माद् गृहान् प्रति न यातेति नञोऽनुषङ्गः । यद्वा, ततो गृहानित्यत्राऽकारप्रश्लेषे, अभावे न ह्यऽ नो ना च * इत्यमराद्, अ यात, न प्रतियातेत्यर्थः । यद्वा, ननु मदभिस्नेहाद्भवन्त्यो यन्त्रिताशया इति भवता कथं ज्ञातमितिचेत् तत्राह ॥ श्रवणादिति ॥ अहर्निशं मच्छ्रवणादिना तथा सन्निकर्षेण मन्निकटागमनेन भवतीनां मयि भावो वर्तत इति मया ज्ञायते, ततः कपटेन पतिसेवाद्यर्थं गृहान् प्रति न यातेत्यर्थः । यद्वा, ननु पत्यादिसन्निधावेव सर्वदा स्थास्यामस्तत्सन्निकर्षेण च तत्र भावोऽपि भविष्यति, तत्पूर्वकतत्सेवनादिना धर्म्मादिकमपि सेत्स्यतीति तत्राह ॥ श्रवणादिति ॥ तत्सन्निधाववस्थितानामपि युष्माकं यथा मयि भावो भविष्यति मच्छ्रवणादिपरत्वाद्, न तथा पत्यादिषु तदभावात्। ततो गृहानित्यादि पूर्ववत् । एतेन किमित्येव स्वपत्यादिषु भाववतीनामस्माकं धर्माधिकाराभावं वदसीत्युपालम्भोऽपि निरस्तः ॥

निवृत्तिपक्षे, एवं वेदवचसां भूतेऽर्थे प्रामाण्यं नास्त्यतो वेदान्तवाक्यानामपि क्रत्वर्थकर्त्रादिप्रतिपादनपरत्वमभिहितमधुना तूपनिषदां ब्रह्मणि प्रामाण्यं, तथापि स्वप्रकरणगतमनोव्यापारविधिशेषतयैव । तथाच यथा यूपाहवनीयादीनि अलौकिकान्यपि शास्त्रेण समर्प्यन्ते तद्वद्विधिशेषतयैवोपनिषद्भिर्ब्रह्म समर्प्यत इत्याशयेनाह ॥ श्रवणादिति ॥ आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, आत्मा अपहतपाप्मा, सोऽन्वेष्टव्यः स विजिज्ञासित-

व्यः, आत्मेत्येवोपासीत, आत्मानमेव लोकमुपासीत, ब्रह्म वेद ब्रह्मैव भवतीत्यादिना विहिताच्छ्रवणादर्शनान्निदिध्यासनान्मननाद् यथा मयि आत्मनि भावः कार्यान्वितस्वार्थपरत्वविधया तत्परता प्रामाण्यं भवति, न तथा सन्निकर्षेण = तत्त्वमस्याद्यभेदमात्रबोधनेन सिद्धार्थकथनमात्रेण प्रामाण्यं भवति। तथाच यथोक्तविधानेषु सत्सु, कोऽसावात्मा किं ब्रह्मेत्याकाङ्क्षायां, नित्यः सर्वज्ञः सर्वगतो नित्यतृप्तो नित्यशुद्धबुद्धमुक्तस्वभावो विज्ञानमानन्दमित्येवमादितत्स्वरूपसमर्पणेन सर्वा उपनिषद उपयुक्ताः। तदुपासनाच्च शास्त्रदृष्टो मोक्षः फलं भविष्यति। कर्तव्यविध्यननुप्रवेशे वस्तुमात्रकथने हानोपादानासम्भवात्,—सप्तद्वीपा वसुमती, राजाऽसौ गच्छतीत्यादिवाक्यवदुपनिषद्वाक्यनामानर्थक्यमेव स्यादिति भावः। तस्माद् गृहान् कार्य्यसंसृष्टरूपान् यात गच्छत। तद् युष्माकं न्याय्यमित्यर्थः ॥ २७ ॥

एवं भगवद्वाक्यान्युदाहृत्य ततः किं वृत्तमित्यपेक्षायां गोपिकावाक्यान्युदाहर्तुं श्रीशुक उवाच ॥

श्रीशुक उवाच ॥

इति विप्रियमाकर्ण्य गोप्यो गोविन्दभाषितम् ॥
विषण्णा भग्नसङ्कल्पाश्चिन्तामापुर्दुरत्ययाम् ॥ २८ ॥

इति यथोक्तप्रकारमत एव विगतं प्रियं यस्मात् तद्विप्रियम्। नच प्रियवचनेऽपि विप्रियत्वभ्रमः। यतो भाषितम्। भाष व्यक्तायां वाचीति स्मरणाद् व्यक्तं—प्रतियात व्रजमित्यादि स्पष्टनिषेधरूपम्। ननु यथावदश्रवणे, स्पष्टार्थकमपि वाक्यमन्यथा प्रतीयत इत्याशङ्कानिरासायाह ॥ आकर्ण्य ॥ समन्तान्मनो दत्वा अक्षरशः श्रुत्वा

तत्रापि तात्पर्यावधारणपर्य्यन्तं श्रुत्वा । एतेन तद्वाक्यपरीक्षार्थत्व-मपि वारितम् । तत्रापि गोविन्दस्य, गां वेदादिरूपां वाणीं वि-न्दतीति गोविन्दस्तस्य वेदार्थसम्प्रदायप्रवर्तकस्य सर्वज्ञस्य परमा-प्तस्य भाषितम् । प्रतारकभाषिते हि संशयो भवति—किमभिप्रा-येणानेन प्रयुक्तमिदं वाक्यम् इति, न तु परमाप्तभाषित इति भावः । एताश्च गोप्यः स्वीयत्वात् प्रतारणाऽयोग्यास्तस्माद्यथार्थं गमनमेव वदतीति तद्वाक्यान्निश्चित्य । अहो गृहादिकं त्यक्त्वा वयं समागता वान्ताशनमिव पुनस्तद् ग्रहीतुमशक्ता भगवद्वाक्योल्लङ्घने चाऽक्षमा इति विचार्य्योभयविरोधे शरीरपरित्याग एव कर्तव्य इति निश्चित्य, विषण्णा = विषादम् इतिकर्तव्यतायां मूढतां गताः यतो भग्नः सङ्कल्पो भगवत्सङ्गमानन्दविषयको यासां ताः । दुर-त्ययां जन्मान्तरेऽप्यनिवर्त्यां चिन्ताम्—अहो भगवता किमिदमु-क्तं, परं किं भविष्यतीत्येवंप्रभादिरूपां प्रापुः ॥ अनभिज्ञापक्षे, इति यथोक्तं गोविन्दस्य भाषितं प्रियार्थकमप्युत्कण्ठास्वभावादप्रियमेव निर्धार्य्य । गोवर्द्धनधारणादिना सर्वदा रक्षापरायणस्य महात्मनः स्वामिन इदं वाक्यमतो नानृतमिति तासां चित्ते प्रतीतिर्जातेति बोधयितुं गोविन्दपदम् । नैपुण्यराहित्येन यथाश्रुतार्थमात्रग्रहणस-मर्था इति द्योतनाय गोप्य इत्युक्तम् । ततो विषण्णाः परमखिन्ना, यतो भग्नस्तद्रतिविषयः सङ्कल्पो मनोरथो यासां ता दुरत्ययामनन्ता-श्चिन्तामापुः । अहो कलगीतमाकर्ण्याह्वानभ्रमात् कुलधर्मधैर्य्य-भयलज्जादिकं विहाय वृथैवात्र समागताः, प्रेमार्द्रोऽप्ययमस्मदभा-ग्येन कठोरतां गतः, किं वाऽस्मत्परीक्षार्थं दाक्षिण्यं विहाय वामता-मङ्गीकृतवान्, किं वाऽस्य मनसि प्रेमलेशोऽपि नासीद्, भ्रमादेव जन्मप्रभृति एतस्मिन् वयम् अनुरक्ताः, किं वाऽस्मदीयं कञ्चिदप-राधमनुसन्धाय तद्दण्डदानायोद्यतस्ततः किममुं नत्यादिभिरनुनयामः,

किं वा प्रतिवचनेन व्रजं प्रति निवृत्त्या वैतदाशयं निर्धारयेम, एतदाज्ञापालनं वा करवाम । एतदादिष्टं वान्ताशनसमं पत्याराधनं तु कथं कर्तुं प्रभवाम । किञ्चैतत्समक्षे यमुनाप्रवेशादिना सद्यः प्राणाँस्त्यजेम । एवं चेत् पुनरेतन्मुखसरोजं कथं पश्याम, एतदनुज्ञां विनाऽत्रापि स्थातुं कथं प्रभवाम । अहोऽतिकष्टं, किं कुर्मः, क्व गच्छाम इत्येवमादिरूपां चिन्तां प्राप्तवत्यः ॥ मानिनीपक्षे, इति विशेषेण प्रियं गोविन्दभाषितमाकर्ण्य विषण्णा भग्नसङ्कल्पा इव दुरत्ययां चिन्तां प्रापुरङ्गीकृतवत्यः ॥

निवृत्तिपक्षे, इत्येवं विगतं प्रियं गोविन्दस्य वेदबाह्येभ्यो वेदत्राणाय स्वीकृततत्तद्वादिविग्रहस्य भाषितमाकर्ण्य विषादं प्राप्ताः । यतो भग्नः प्रत्यगभिन्नब्रह्मप्रतिपादनसङ्कल्पो यासां ताः । गोप्यः परमात्मसम्बन्धिन्यः श्रुतयो दुरत्ययां चिन्ताम्, आस्तिका अप्यस्मन्नाशाय प्रवृत्ता, अहो कथं भविष्यतीत्येवंरूपां प्रापुरित्यर्थः॥ २८

चिन्ताप्राप्तौ सत्यामवस्थानमाह ॥

कृत्वा मुखान्यवशुचः श्वसनेन शुष्यद्-
बिम्बाधराणि चरणेन भुवं लिखन्त्यः ॥
अस्रैरुपात्तमसिभिः कुचकुङ्कुमानि
तस्थुर्मृजन्त्य उरुदुःखभराः स्म तूष्णीम् ॥२९॥

कृत्वेति ॥ अवशुचः प्राप्तशोकाः श्वसनेन शुष्यद्बिम्बाधराणि मुखानि कृत्वा । यद्वा मुखानि अव अवाञ्चि अधो मुखानि कृत्वा मुखानां तथा करणं च कासाञ्चिदहोऽस्माकं नास्त्यद्यापि प्रेमोद्रेको, नो चेत् तेन वशीकृतो भगवान्नैवं ब्रूयादित्यभिप्रायेण १. कासाञ्चिदहो परमप्रेमास्पदेन भगवतैवमनङ्गीकृतानामस्मा-

कमूर्ध्वमधो वा क्वाप्यवस्थातुं योग्यता नास्तीत्याशयेन २ कासा-
श्चिदहो सर्वगुणगणालङ्कृतविग्रहस्य करुणासागरस्य सर्वज्ञस्य
भगवत एवंविधोक्तिर्मन्दभाग्याऽस्मल्ललाटदर्शनजन्याऽतः स्वल-
लाटमस्मै न प्रदर्शनीयमित्यभिप्रायेण ३ कासाञ्चिदहोऽस्मदीयं क-
ञ्चिदपराधं स्मृत्वा भगवानेवं वदतीत्यतो नम्रीभूय क्षमापनीय इ-
त्याशयेन ४ कासाञ्चिदहोऽस्माकं वनभूमौ निकृष्टजनवदागमनं
निष्फलमेव सम्पन्नमित्याशयेन ५ । अथः कृतानि मुखानि वि-
शिनष्टि ॥ शुचः शोकादुद्भूतेन शोकसम्बन्धिना वा श्वासवायुना
शुष्यन्तः शोषं गच्छन्तो विम्बफलतुल्या अधरा येषु। शोकानल-
ज्वालाव्याप्तश्वासेन शुष्यन्तः शुचः शुचेराघटस्य श्वसनेन वायुना
शुष्यद्विम्बसदृशा अधरा येष्विति वा । एवंभूतश्वसनेनाधरा-
दिसमस्तशरीरं शोषयित्वा दीपयिष्याम इत्याशयः । चरणेन वामं-
पादाङ्गुष्ठैर्भुवं लिखन्त्यः । काश्चिदहो श्रुत्यादिरूपं तिरोधाय
भूमौ गोपाङ्गनाविग्रहो वृथैव अस्माभिराश्रित इति पश्चात्तापं
सूचयन्त्य इव । अहो किं भूमिभारभूता अस्मानेव निश्चित्यानेन
प्रकारेणास्मन्नाशायाऽयमवतीर्ण इति। काश्चिदहो भगवतीं सीता-
मिवास्मानपि भूमिं प्रवेशयितुं प्रवृत्तोऽसीति । तथा व्याप्तकज्ज-
लैरश्रुभिः स्तनकुङ्कुमानि क्षालयन्त्यः । अहो नास्तीदानीं नेत्र-
स्थकज्जलस्य स्तनस्थलकुङ्कुमस्य च किमपि प्रयोजनमतः क्षा-
लनीयमुभयम् । तत्क्षालनं चास्मिन् समयेऽन्यजलालाभादश्रुज-
लैरेव कार्यम् । कुचेषु च इतः परं मषीलेपो विधेय इति सूचयन्त्य
इव । मृजन्त्य इति वर्तमानापदेशेन मार्जनाय प्रवृत्ताभिरपि, यमा-
ऽनुजाप्रवाहतुल्याभिरश्रुधाराभिस्तन्मार्जनं न सम्पन्नमेवादवानलप्र-
तापसन्तापप्रशोष्यमाणत्वादिति ध्वनितम् । उरुभरपदाभ्यां दुःख-
स्य पराकाष्ठोच्यते । महादुःखातिशयत्रस्तो दुःखसागरनिमग्नाः

सद्यः किञ्चिदपि वक्तुमशक्तत्वात् तूष्णीं तस्थुः स्मामुखस्यावाक्त्वेन भगवदाभिमुख्यस्य, शोकेनाऽन्तःकरणस्य, बिम्बाधरशोषेण कामरसस्य, पदा भूमिलेखने शरीरस्य, अस्रैरिन्द्रियाणां, कुङ्कुमाभावेन कान्तेः, उरुदुःखभरेणानन्दस्य, तूष्णींस्थित्या चैतन्यस्य च तिरोभावाभिधानात् । श्वसनेनेति प्राणपीडाकथनान्मूर्च्छिताः केवलं स्थाणुरिव स्थिता इत्यर्थः ॥ अनभिज्ञापक्षे—मुखानामधःकरणं कासाञ्चिदहो वयमत्रागताः सम्मानार्हा अप्येतेन न सम्मानिताः, प्रत्युत, प्रति यातेत्यादिवाक्यैरेव मानिता इति लज्जासागरनिमग्नहृदयत्वेन। कासाञ्चिदहो पत्यादिकं विहायैवंविधं कर्म कर्तुं प्रवृत्तानामप्यस्माकं प्रवृत्तिर्निष्फला जाता, इतः परं किं करिष्याम इति लज्जाव्याकुलचित्तत्वेन । कासाञ्चिदहो एतेनाऽनाहूता वंशीशब्दमाकर्ण्याह्वानभ्रमेणैव समागता, अतोऽस्माकं मौर्ख्यमेव प्रकटितमिति लज्जया । कासाञ्चिदहो एवंविधां दशां प्राप्ता, इतः परं व्रजं गताः कथं तत्र सखीजनेभ्यो मुखं प्रदर्शयिष्याम इति लज्जया । कासाञ्चिदहो विनाऽऽह्वानमागता, इतः परं दृष्टो भवदीयसौभाग्यदर्प इति वदतोऽस्य कृष्णस्य समक्षे मुखं कथं करिष्याम इति लज्जया । कासाञ्चिदहो सर्वालङ्कारालङ्कृतमप्यस्मदीयं मुखमस्मै न रोचते, एतत्समक्षस्थापनाऽयोग्यमिति लज्जया । कासाञ्चिदहोऽस्मन्मुखमवलोक्याऽस्य महानानन्दो भविष्यतीत्याशया समागतानां परं विपरीतं जातमिति लज्जया । कासाञ्चिदहोऽस्मदन्तःकरणनिविष्टप्रेमातिशयमनवबुद्ध्यैतेनैवमुक्तमतोऽनभिज्ञसमीपे एवमागमनम् अनुचितं जातमिति लज्जया । कासाञ्चिदहो नास्त्ययं कान्तानां सर्वथा नेतिनेतीत्येव वदन्तीनां स्वभाव एवम्भूताऽनर्थकरो योऽस्माभिरङ्गीकृतोऽतस्ताभिरुपहास्या भविष्याम इति लज्जाविष्टचित्तत्वेन। कासाञ्चिदहो इयं मां किं व-

दिष्यतीयं मां किं कथयिष्यतीति परस्परप्राप्तलज्जया । कासाश्चिदहो एतन्मुखनिःसृतैवंविधोत्तप्तनलज्वालया वृथाऽस्मन्मुखदाहो मा भवत्वित्याशयेन । कासाञ्चिदहो यद्यप्ययमेत्रमस्मद्दुःखायाऽनुक्तस्तथाऽपि प्रज्ज्वलिताऽस्मदन्तःकरणान्मुखनेत्रादिद्वारा निःसृताभिरतिप्रचण्डज्वालामालाभिः सन्तापं न प्राप्नुयादित्याशयेन। कासाञ्चिदहो पूर्वं प्रसन्नचेतस्तया वने विहरणपरो वंशीवादनिरतोऽप्यस्मन्मुखं दृष्ट्वैवंविधं क्षोभं गतोऽतोऽस्मै क्षोभकरं स्वमुखं न प्रदर्शनीयमित्यभिप्रायेण । कासाञ्चिदहो नेत्रद्वारा काश्चिन्मोहनशक्तिमस्मदन्तःकरणे प्रवेश्याऽस्मान् व्यामोहयतीत्येतन्नेत्रसमक्षे स्वनेत्रस्थापनं न कार्यमिति भावेन । कासाञ्चिदहो शोकाक्रान्तमस्मन्मुखमवलोक्य कोपाक्रान्तमेतदीयं मुखमिति भ्रान्त्यैतोऽप्यधिकमस्यौदासीन्यं मा गच्छत्वित्याशयेन । कासाञ्चित् तथाभूतोक्तिजन्यशोकोद्भूतसमुद्रकल्पाश्रुजलप्रवाहभाराक्रान्तशिरस ऊर्ध्वस्थापनाऽशक्त्या । कासाञ्चिदेवम्भूतमप्यस्मदीयं मुखमस्य प्रीतिकरं न भवति, किमुताश्रुधारासम्पर्कमलिनीकृतमतः शोकोद्भूताश्रुप्रवाहोऽधः पातनीय इति प्रेष्ठचेतसि प्रीत्युत्पत्त्याशया । कासाञ्चिदहो धिक् स्त्रीचाञ्चल्यं, येन प्रीतिलेशेनापि हीनस्य पाषाणवदतिकठिनस्वान्तस्य समीपेऽतिरभसा समागता, अतः परं त्वस्य स्वयमाहूयैवं वक्तुं प्रवृत्तस्य कृतघ्नस्य मुखमपि नावलोकनीयमित्याशयेन। कासाञ्चिदहो विधातरऽतिकठोरान्तःकरण! परदुःखानभिज्ञ! दुःखपात्रभूता अस्मान् विनिश्चित्याऽतिदुःखं दातुं प्रवृत्तोऽसि, भवतु, शपथोऽस्ति तव, यदि यावत्सामर्थ्यं दुःखं न प्रदास्यसि, तस्मादितोऽप्यधिकं दुःखं यद्यस्ति तव समीपे तर्हि तदप्यस्मभ्यं प्रयच्छ, विलम्बं मा गच्छेदं शिरस्तवाग्रेऽस्माभिः स्थापितमिति विधातरि कोपावेशेन । कासाञ्चिदहो परस्परनेत्रसं-

योगवशात् परस्परभावविपर्ययो जातः—एतस्य कान्तस्य दाक्षिण्य-रूपः स्वभावोऽस्मच्चेतसि प्रविष्टः, कान्तानामस्माकमवहित्थालक्षणः स्वभावोऽस्य मनस्यऽतस्तथा मा भवत्वित्याशयेन । कासाञ्चिद् अहो बहूक्तं त्वया, भवत्वन्यदपि यद् वक्तव्यं तद् वदस्व, इदं शिरस्तवाग्रे स्थापितमित्यभिप्रायेण । कासाञ्चिदहो एवंविधोक्ति-नाराचधारया पुनः पुनः किमर्थमस्मद्वेधने प्रवृत्तोऽसि, यदि मारणीया एव वयं तर्हि सकृदेव तीक्ष्णाऽसिना ग्रीवोपरि निपातितेनाऽस्माकं शिरांसि छिन्धीत्याशयेन ।कासाञ्चिदहो कृतम एवंविध-व्याहारप्रयासेन, तं विनैव नवसौन्दर्य्यशस्त्रोन्मूलितगर्वद्रुमाणामस्माकं सर्वदैव नम्रीभावोऽस्तीति भावेन। कासाञ्चिदहो विधातः त्वया किमेवंविधमस्मदीयं मुखं रचितं, यदस्य गोपालबालस्यापि प्रीत्यजनकत्वात् तत्समक्षे स्थापयितुमयोग्यमिति पश्चात्तापेन । कासाञ्चिदहो मानलेशेनापि विनिर्मुक्तानामेतासां धिक् स्त्रीत्वमिति विमानस्थदेवाङ्गनादिकृताऽवज्ञानभयेन । कासाञ्चिदहोऽयं चोर-चक्रवर्ती वंशीरवेण स्वभृत्येनास्मदीयमनोरत्नमञ्जूषामपहृत्य परम-साधुवदेवं वदतीत्यतोऽस्माद्बिभेतव्यमिति भावेन ।कासाञ्चिदहो किमस्मानेवमुपदिशसि, न वयमुपदेशार्थं तव समीपमागताः, स्वय-मेव उपदिशसि चेत् तर्हि विषसम्पृक्तमिष्टान्नवत् तथाभूतोपदेशे कृते, त्वन्मुखं नावलोकनीयमित्यभिप्रायेण ।कासाञ्चिदहो निरर्थ-कोऽयमुपदेशः, त्वत्सम्बन्धेनाऽधोगमनस्याप्यस्माकमिष्टत्वादिति द्योतनाय । कासाञ्चिदहो गोवर्द्धनाधस्तात् स्वहस्तेन वधार्थमेव किं वयं रक्षिता इति सूचनाय । कासाञ्चिदहो सर्वं त्वत्तोऽधोभूतमेव ज्ञात्वा वयमागता, अतः किमर्थमेवं बहु भाषसे इति ज्ञापनाय । तथा शुचः शोकादुद्भूतेन श्वसनेनोष्णश्वासेन शुष्यन्तः, सूर्य्या-तपेन शोषे सति विगतस्थौल्यैः स्पष्टवलिमद्भिर्बिम्बफलैः सदृशा

ऽधरा येषु । अस्मदधराऽमृतं भियो धास्यतीत्याशया समागतानां तदाशाभङ्गोत्थशोकानलस्तच्छोषणे प्रवृत्त इति भावः । पुनश्चरणेन वामपादाङ्गुष्ठेन भुवं लिखन्त्यः । काश्चिदहो नास्ति तत्रापराधः, किन्त्वस्माकमेव । यतो यस्मिन् काले, याताऽवला व्रजे सिद्धा मयेमा रंस्यथ क्षपा * इति त्वयोक्तं, तदा, कुहकशिरोमणेस्तव वचसि कृतविश्वासाभिरस्माभिर्लेखापयित्वा न स्थापितमतोऽधुना किं कुर्मोऽस्मन्मौर्ख्यमेवास्माकमनर्थकरं सम्पन्नमिति ध्वनयन्त्य इव । काश्चिन्मद्वचनसाक्षी कोऽपि नास्तीति निर्भयता नोचिता, किन्तु सर्वाधारभूता भगवती वसुन्धरा साक्षिभूता विद्यत एवेत्यस्या एव विभेतव्यमिति सूचयन्त्य इव । काश्चिद् भुवनैकसुन्दरेण जारेण गृहीतचेतसां नास्त्यस्माकं तथाविधं पातिव्रत्यं किमर्थमेवं वक्तुं प्रवृत्तोऽसीति बोधनाय जारवतीलक्षणं स्वस्मिन् दर्शयन्त्य इव । काश्चिदहो वृथैव मुखाद्यलंक्रियाऽतः परं मृदमुत्पाद्य तया सर्वाण्यङ्गानि लेपनीयानीति शोकोद्भूतमुत्कटवैराग्यं बोधयन्त्य इव । काश्चिदहो भूमिरपीयमस्मदपेक्षया वरा, यस्यामस्मत्प्रेष्ठपादारविन्दसंस्पर्शः सदैवास्तीति ज्ञापयन्त्य इव । काश्चिदहो यादृशं दुःखमनेनास्मभ्यं दत्तं तादृशं दुःखमस्मै प्रदेयं, तच्चाऽस्मदङ्गसंस्पर्शादेवास्य भविष्यतीत्यत्युग्रं तपः सम्पाद्य भूमिभावं प्राप्य स्वाङ्गसंस्पर्शनेनाऽयं पीडनीय इति ध्वनयन्त्य इव । काश्चिदहोऽस्यामस्मद्व्रजभूमावेवं विधातिकठोरचित्तः कोऽपि नास्त्यऽतोऽयमीदृशः कथमत्र जात इति सूचयन्त्य इव । काश्चिदहो किमेवंविधम् अन्यायं कर्तुं प्रवृत्तोऽसि, किं भूशर्कराद्यपेक्षयाऽप्यस्मदीयानि स्तनाद्यङ्गानि कर्कशानि यत्संस्पर्शजन्मदुःखभयादेवं जल्पसीति सूचयन्त्य इव । काश्चिदहोऽस्मद्दुःखाय यत् त्वयाऽऽचरितुमारब्धं तदस्माभिर्लिखित्वा स्थाप्यतेऽस्मिञ्जन्मनि जन्मान्तरे वाऽस्य

प्रतीकारं करिष्याम इति ज्ञापयन्त्य इव। काश्चिदहोऽस्याश्चर्य्यमेवं-विधमिथ्याप्रतिज्ञमियं भूमिर्धारयत्येतदाधारेण विदीर्णा न भवतीति सूचयन्त्य इव । काश्चिदहो मातर्वसुधे! नास्त्यस्मत्साहाय्यकृत् कश्चिदऽतस्त्वयैवाऽयं बोधनीयोऽस्य त्वयि प्रीत्यतिशयस्य दर्शनादिति भूमिं प्रार्थयन्त्य इव । काश्चिदहोऽस्य पाषाणवदन्तःकरणमतिकाठिनमऽस्मत्प्रेमोद्रेकातिरेकं भूमिर्न जानास्यत एवंविधदुःखम् अवलोक्यापि न द्रवतीति ध्वनयन्त्य इव । काश्चिदहोऽस्य हृदयं पाषाणादपि कठोरं, यत एवम्भूतातिकष्टे सत्यपि न विशीर्यत इति सूचयन्त्य इव । काश्चिदहो नास्तीतः परं जीवनकृत्यमतो, भो मातर्वसुन्धरे कृपया विशीर्णा भव, त्वयि प्रविशाम इति भूमिप्रवेशाऽऽभिमुख्यं बोधयन्त्य इव । पुनश्चोपात्तमषिभिः कज्जलाक्तैरस्रैः कुचकुङ्कुमानि मृजन्त्यः । अहो नेत्रस्य श्यामतैवानर्थकरी, ययाऽतिनिष्ठुरान्तःकरणे कृष्णे स्नेहमुत्पाद्यैवंविधां दशां वयं नीताः। अतो मस्या सह साऽपि निःसारणीया । यत एवंविधचक्षुष्मत्ताऽपेक्षयाऽन्धतैवास्माकं श्रेयस्करीत्याशयः । अनेन त्वत्प्राप्त्याशानिवृत्त्या काष्ठभूतेष्वस्मच्छरीरेषु निःसीमतापक्रकचेन विदारणाय विरहतक्षकृतं श्यामसूत्ररेखाद्वयमित्यपि ध्वनयन्त्य इव । अस्रैरिति बहुवचनेन तत्प्रवाहधारा बोधिता । मृजन्त्य इति वर्तमानापदेशेन नयनोत्थयमुनाद्वयकल्पाऽश्रुधाराद्वयस्य कुङ्कुममार्जनाद्युद्युक्तस्य हृदयोत्थसंतापानलस्य तच्छोषणाद्युक्तस्य विवादे कस्याऽपि जयो वा, पराजयो वा न संवृत्त इति द्योतितम् । उरुदुःखस्य भरो भारो यासां ताः। भारासहिष्णुतयैवं चेतनापगमात् तूष्णीं पाञ्चालिका इव तस्थुरित्यर्थः ॥ मानिनीपक्षे. मुखानाम् अधः करणं कासाञ्चित् परपुरुषमुखावलोकनमप्यस्मभ्यं न रोचते इति सूचनाऽर्थम् । कासाञ्चिदऽस्मन्मुखावलोकनमपि तवाऽतिदुर्लभम्, अ-

न्यत्तु दूरनिरस्तमित्यतिदर्पख्यापनार्थम् । कासाञ्चिदहो न वयं व्यभिचारिण्यः, किन्तु कुलाङ्गनास्तल्लक्षणस्यास्मासु सत्त्वादिति ज्ञापनाय । कासाञ्चिदहो कृष्ण! त्वं त्वतिधूर्तोऽसि, परदारानेवं प्रार्थयन् लज्जालेशेनापि विनिर्मुक्तोऽसि । वयं तु लज्जासागरे निमग्ना इति स्वस्य लज्जावतीत्वबोधनाय । कासाञ्चिदहो अधोगतिसम्पादकमौपपत्यं धर्मशास्त्राभिज्ञानामस्माकं सर्वथा परिहरणीयमिति स्वस्य परलोकभयाविष्टताख्यापनाय । कासाञ्चिदहो वयं लोकमर्य्यादाऽभिज्ञा अधोमुखतापादकं कर्म कर्तुं नार्हाः, किमर्थमेवं बहु जल्पसीति स्वस्यापकीर्तिभयाविष्टताख्यापनाय । कासाञ्चिदन्तःकरणस्थामुत्कण्ठां मुखादिविकासमवलोक्यायं माऽवगच्छत्वित्याशयेन । अहो स्वपतिविरहजनितशोकोद्भूतौष्ण्यव्याप्ताः एतासां श्वास इति प्रतीतिजनकेन श्वसनेन, यद्यप्यस्मदधरपानाऽऽशा तव महती वर्तते तथापि तत्सिद्धिः स्वप्नेऽपि दुर्घटा, प्रबलेन त्वया बलात्कारेणाऽबलानामस्माकमऽधराऽमृतपाने क्रियमाणे तत्स्थं पीयूषं तु न लप्स्यसि, तस्य शोष्यमाणत्वादित्याशयः ॥ चरणेन भुवं लिखन्त्यः ॥ काश्चिदस्मत्पादरजोऽपि तव दुर्लभतरम्, इतरत्तु दूरगतमिति ध्वनयन्त्य इव । काश्चिद् भूमिप्रवेशं करिष्यामस्तव वशीभूतास्तु न भविष्याम इति सूचयन्त्य इव । काश्चिद् बलात्कारेण स्पर्शादिकं करिष्यसि चेत् तर्हि भूमिपतये नन्दाय, कंसाय वा गत्वा कथयिष्याम इति द्योतयन्त्य इव । अहो बलात्कारेणाऽयमस्मान् ग्रहीष्यतीति भयादिव मृषाऽश्रुभिस्त्वदर्थमस्माभिर्नेत्रेषु मषिर्न धृता, तव तथा भ्रमश्चेन्निःसार्यते इत्याशयेनोपात्तमाषिभिः कुचकुङ्कुमानि मृजन्त्यः । न त्वदर्थं कुचेषु कुङ्कुमान्यऽस्माभिरुपलिप्तानि, तव तथा भ्रमश्चेत् तर्हि तानि प्रक्षाल्य तेषु मषिलेपोऽस्माभिः क्रियते इति सूचय-

न्त्य इव । मार्जनादेरकृतत्वान्मृजन्त्य इत्युक्तम् । उरुदुःखभरा इव तूष्णीं तस्थुः स्म ॥

निवृत्तिपक्षे, यथोक्तवाद्युक्तयुक्तिभिः श्रुतीनां महती पीडा जातेत्याशयेनाह ॥ कृत्वेति ॥ चरणेन मूलरूपेण भुवं स्वाद्युत्पत्तिस्थानं परमात्मानं लिखन्त्यस्तत्प्रतिपादने मुख्यतात्पर्य्यवत्यः सर्वाः श्रुतयः, अवशुचः प्राप्तशोकाः सत्यः, श्रुत्यन्तभागलक्षणानि मुखानि, वाद्युक्तस्वार्थलक्षणेन श्वसनेन शुष्यद्बिम्बाधरस्थानीया मोक्षप्रतिपादनभागा येषु तथाभूतानि कृत्वा, अस्रैः स्वरुधिरास्रभूतैर्लाक्षारसैरुपात्तमषिभिस्तत्तद्वादिकरस्थलेखिन्यारूढैः, कुचस्थानीयानां सन्दिग्धकठिनभागानां समीचीनाऽर्थलक्षणानि कुङ्कुमानि मृजन्त्य उरुदुःखभरास्तूष्णीं तस्थुः स्म । उपरुद्धा जाता इत्यर्थः ॥ २९ ॥

ततो विनिवृत्तमूर्च्छास्तूष्णीं स्थितं भगवन्तमालक्ष्य किञ्चिद् विज्ञापयामासुरित्याह ।

प्रेष्ठं प्रियेतरमिव प्रतिभाषमाणं
कृष्णं तदर्थविनिवर्त्तितसर्वकामाः ॥
नेत्रे विमृज्य रुदितोपहते स्म किञ्चित्-
संरम्भगद्गदगिरोऽब्रुवताऽनुरक्ताः ॥ ३० ॥

प्रेष्ठमिति ॥ गोप्यो रुदितोपहते नेत्रे विमृज्य, अहो यद्भवितव्यं तद्भविष्यत्येव, संप्रति भगवद्दर्शनं तु सम्यक् कर्तव्यमित्याशयः । कृष्णमब्रुवत स्म । भगवतः सदानन्दरूपत्वात्, तदाभिमुख्यमेव सदानन्दाविर्भावकरमतः सर्वानर्थकरं तद्वैमुख्यं कथमपि नोचितमिति भावः ॥ प्रेष्ठं परप्रेमास्पदत्वादात्मानं, प्रियेतरमिवाऽना-

त्यन्तं प्रतिभाषमाणं प्रत्याचक्षाणम् । अहो सर्वात्मा सन् किमर्थ-मेवं वदतीति किंचित्संरम्भेण प्रणयकोपेन गद्गदा अस्फुटस्ख-लिताऽक्षरा गीर्यासां ताः । ननु भगवति ईषत्संरम्भोऽप्यनुचितः, तासां मुखाद् भगवद्वाक्यप्रत्युत्तररूपा वाणी च कथं निःसृता इ-तिचेत् तत्राह ॥ अनुरक्ता इति ॥ स्वल्पस्यापि रागस्य भयनिव-र्तकत्वात् परमानुरागवतीनां तासां का भयसम्भावनेति भावः । यतः, तदर्थविनिवर्तितसर्वकामाः ॥ तदर्थं भगवदर्थं विशेषेण त-द्वासनासाहित्येन निवर्तिताः सर्वे कामा याभिस्ताः । तथाच भ-गवदतिरिक्तसर्वकामस्य तदिच्छायाश्च त्यक्तत्वाद्भगवद्विषयकं-कामस्य च मोक्षकामवदकामरूपत्वात् तन्मात्रनिष्ठानां तदनुरक्तचेत-सां नास्ति किञ्चिदपि भयमिति भावः ॥ अनभिज्ञापक्षे, तथाभूतां दशां प्राप्ता अपि ताः, अहो किमित्येवमरण्यरोदनं कर्तुं प्रवृत्ताः, स्वस्थाः प्रसन्नमुखाः सत्यः स्वस्वगृहं तूर्णं किं न गच्छत इत्येवं प्रहसन् यदोच्चैरुवाच तदा तानि वाक्यानि तासां कर्णाऽध्वना-ऽन्तःप्रविष्टानि । ततश्च तैरेवोद्बोधितास्तत्सजातीयवाक्यैर्भगवद्वा-क्यानां प्रत्युत्तरं वक्तुमारेभिर इत्याशयेनाह ॥ प्रेष्ठमिति ॥ बहु-कालमारभ्य परप्रेमास्पदत्वेन निश्चितमिदानीं, प्रियेतरमिव, यथा प्रियेतरः शत्रुर्वदति तथा—प्रतियातेत्यादिवज्रादप्यतिकठोरं प्र-त्याख्यानरूपं वाक्यं भाषमाणम् । प्रियेतरमिव अप्रियवाक्यसदृशं वाक्यमिति वा । तत्रापि, कृष्णं सम्प्रत्यपि वेणुनादेन चित्तरत्नं मञ्जूषाया आकृष्य सौचित्येन स्थितम् । अत एव, तदर्थं विनि-वर्तितसर्वकामाः रुदितोपहते अन्धीभूते नेत्रे विमृज्य, अहो मरणसमयोऽयमस्माकमागतस्तस्मात् सकृदपि प्रेष्ठस्य मुखपद्ममव-लोक्य मरिष्याम इत्याकाङ्क्षयेति भावः । अहो प्रकृष्टत्वेनाश्रितो-ऽयं विनाऽपराधं कथमेवंविधप्राणान्तदण्डं दातुमुद्यत इति संर-

म्भः । स्वस्मिंस्तदङ्गसङ्गायोग्यतां विचार्य्य तच्छैथिल्यमिसतः किञ्चित्संरम्भेणेत्युक्तम्।ननु सर्वथाऽपि प्रेमशून्येन तेनालं भाषणादिनेति चेत् तत्राह ॥ अनुरक्ता इति ॥ अनुरागादन्यविचाररहितत्वात्प्रत्याख्याता अपि पुनस्तत्रैवानुरज्यन्त इति भावः॥ मानिनीपक्षे, वस्तुतः परमप्रियं प्रियेतरमिव प्रतीयमानं वाक्यं प्रतिभाषमाणं कृष्णमब्रुवत स्म । अहो कथमस्मान् परदारानित्थं वदसीति कोपेनाऽन्तःकरणस्थोत्कटोत्कण्ठया शिथिलीकृतत्वात् स्वल्पेन गद्गदभूता गिरो यासां ताः । यथोक्तं प्रार्थनारूपं वाक्यमाकर्ण्य ततोऽप्यधिकमनुरक्ताः ॥

निवृत्तिपक्षे ॥ प्रेष्ठम् ॥ सर्वे वेदा यत्पदमामनन्ति वेदैश्च सर्वैरहमेव वेद्य इत्यादिश्रुतिस्मृतिभ्यो वेद्यत्वेनात्यर्थमभिमतम् । तत्तद्वादिरूपेण श्रुतीनां ब्रह्मणि प्रामाण्यं नास्तीत्येवमादिरूपं प्रियेतरमिव प्रतिभाषमाणं प्रत्याचक्षाणं कृष्णं फलरूपं सदानन्दात्मकं परमात्मानं तदर्थं परमात्मप्राप्त्यर्थं विशेषेण निवर्तिता अधिकारिणां सर्वे कामा याभिः । तथाच श्रुतिः— यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः * तदा मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इत्याद्याः । रुदितेन स्वार्थानभिज्ञवाद्यभिहिततर्ककृतेन रुदितेनोपहते नेत्रे यथाभूतार्थप्रकाशनसमर्थे शक्तिलक्षणालक्षणे विमृज्य किञ्चित्संरम्भेण, अहो आस्तिकरूपेण स्थितोऽपि भगवानित्थं वदतीति ईषत्कोपेन गद्गदाश्छन्दसां गिरो यासां ताः । किञ्च, तस्मिन्नेवाऽनुरक्ताः ॥ ३० ॥ ॥ तदुदाहरति ।

गोप्य ऊचुः ॥

मैवं विभोऽर्हति भवान् गदितुं नृशंसं
सन्त्यज्य सर्वविषयाँस्तव पादमूलम् ॥

भक्ता भजस्व दुरवग्रह मा त्यजाऽस्मान्
देवो यथादिपुरुषो भजते मुमुक्षून् ॥ ३१ ॥

मैवमिति ॥ यद्यपि वयं निकृष्टास्तथापि सर्वोत्तमो भवान् षड्विधैश्वर्य्यसम्पन्नः, प्रतियातेत्येवंरूपं नृशंसं क्रूरमस्मत्प्राणापहरणसमर्थत्वाद् घातुकम् । नृशंसमिति किञ्चित्संरम्भाविष्कारः । यद्यपि भगवता प्रथमं, स्वागतमित्यादिना स्तुतास्तथाप्यऽग्रे,प्रतियातेति प्रतिगमनाभिधानात् तदपि नास्माकं प्रेमातिरेकवर्णनाभिप्रायकमपि तु व्यङ्ग्योत्पत्त्योपहासपरमतस्तदपि नृशंसमेव । परिच्छिन्नस्य परकीयान्तःकरणवृत्त्यनभिज्ञस्यैवंविधोक्तिः कदाचिद् घटते, न तु विभोर्व्यापकस्य सर्वाऽन्तरवस्थितत्वात् सर्वान्तःकरणवृत्तिसाक्षिण इत्याशयेन सम्बोधयति ॥ विभो इति ॥ अत एव व्रजस्याऽनामयं कच्चिदिति प्रश्नोऽपि न संगच्छते । तत्कुशलाकुशलयोरुदासीनभूताऽस्मदन्तःकरणवृत्तिज्ञत्वादित्याशयेनाहुः ॥ संसज्येति ॥ व्रजस्य का कथा, अस्माभिः शब्दस्पर्शादयः सर्वेन्द्रियाणामपि विषयाः सम्यग्वासनोच्छेदपर्य्यन्तं सक्ताः । संसज्य च पादमूलं भक्ताः । तत्त्यागस्तत्र पादमूलभजनार्थमेव, न तु फलाऽन्तरमस्माकमपेक्षितमित्यर्थः । सर्वविषयानित्यनेन त्वद्विषयकः कामः कामो न भवतीति ध्वनयन्ति । अस्मदन्तःकरणात् सर्वे विषया यदि निस्सृता न स्युस्तव पादमूलभक्तिः कथं तत्राविर्भवेत् तथाच सैव तत्त्यागसाक्षिणीत्यप्यनेन द्योतितम् । यच्च भगवतोक्तं— प्रियं किं करवाणि वः, ब्रूतागमनकारणमिति तत्राप्याहुः ॥ भजस्वेति ॥ तथाच भवद्भक्तानामस्माकं स्वीयत्वेन ग्रहणमेवास्मत्प्रियं भगवता कर्तव्यम्, एतदतिरिक्तं किमप्यस्माकं प्रियं नास्त्येतदेवास्मदागमनप्रयोजनमतस्तदेव संपादयेत्याशयः । तस्मात् प्रतिया-

त व्रजं, नेह स्थेयमिति त्यागाग्रहो भगवतो नोचित इत्याहुः ॥ हे दुरवग्रह, मा त्यजास्मान्। मद्भजनं न कर्तव्यमित्येवमाग्रहो दुष्टो भवति। सर्वैः कर्तव्यं भगवद्भजनं, न कार्यमिति दुष्ट आग्रहो जीवानां वर्तते। परमेश्वरस्याऽप्युक्त आग्रहश्चेत् तर्हि कथं जीवानामुद्धारः। तस्मादस्माकमेव केवलमभाग्यवशादुक्त आग्रहो भगवता आश्रित इति सम्बोधनाशयः। ननु न मया स्वभजनं निषिद्ध्यते, किन्तु कामोपाधिकं तदिति चेत् तत्राहुः ॥ देव इति ॥ यथा, देव आदिपुरुषः = अवतारिपुरुषो, ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति * प्रतिज्ञावान् भगवान् यथा मुमुक्षून् भजते तत्तत्फलप्रदानेनाश्रयते स्वस्मिन्नेव स्थापयति, न तु पुनस्तेषां पूर्वावस्थां सम्पादयति तद्वदस्मदाद्यर्थं तदवतारभूतस्त्वमेवमप्यस्माँस्त्वदङ्गसङ्गोत्कण्ठाकाङ्क्षावतीर्मा त्यज, अपि त्वस्मदभिलषितफलप्रदानेनाश्रय। तथाच मोक्षोपाधिकमपि भगवद्भजनं यथा मुमूक्षूणां भगवता शुद्धत्वेनैवाङ्गीक्रियते तथा त्वदङ्गसङ्गोपाधिकमपि तच्छुद्धत्वेनैवाङ्गीकर्तुं योग्योऽसीति भावः। स्वसन्निधित्यागो न कर्तव्य इति वक्तुं स्वभक्तत्यागं च कर्तुं भवान्नार्हति, नाऽपि स उपदेशः सफलो भविष्यतीत्यप्यनेन ध्वनितम्॥अनभिज्ञपक्षे, भो विभो समर्थ एवं गदितुमपि भवान्न, आचरितुं नार्हतीति किमु वक्तव्यमित्यर्थः। यद्यपि परमैश्वर्य्यवाँस्तथापि परमधार्मिकत्वेन प्रख्यातस्य श्रीनन्दरायस्य पुत्रः स्वयं च रसार्द्र इति सूचनाय भवानित्युक्तम्। नृशंसं साक्षान्मारकम्।तथाचास्मदुपदेशाय प्रवृत्तेन त्वया वाङ्नाराचकृताऽसंख्यातस्त्रीवधजनितपातकोत्पत्तिर्न विचारितेति भावः। अथवा, हे विभो! अस्मत्प्राणनाथ।तथाच स्वनाथाऽस्मत्प्राणरक्षणमेव तवोचितं, न तु तन्नाशनमिति भावः। तत्रापि भवान्, मयेमा रंस्यथ क्षपा * इति कृतप्रतिज्ञः। प्रतिज्ञाय करोमीति कर्तव्यं

त्वदकुर्वतः * मिथ्यावचनदग्धस्य इष्टापूर्त्तं विनश्यतीत्यादिशास्त्रज्ञो भवान् । तथाचास्मद्दोषोद्घाटनाय प्रवृत्तस्त्वं स्वमातिज्ञानाशादिबृहद्दोषान्न पश्यसि । तदुक्तं शकुन्तलया—राजन् सर्षपमात्राणि परच्छिद्राणि पश्यसि * आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यसीति भावः । ननु, स्वागतं वो महाभागा इति परमकोमलमपि प्रथमं मयैवोक्तं तत्किमर्थं विस्मर्य्यत इति चेन्न । तस्याप्यलंकृत्य शिरश्छेदनवन्निवर्तनार्थतया नृशंस एवान्तर्भावात् । भवतु भवन्मुखचापनिःसृतवागस्त्रजालेन दग्धप्राणा वयमितः परं परलोकमेव यामो, न तु व्रजं, त्वं त्वसंख्याता अस्मान् हत्वा किं पदं प्राप्स्यसीति न विद्म इत्याशयेनाहुः ॥ संत्यज्येति ॥ वान्ताशनवत् पुनर्ग्रहणायास्माभिः सर्वविषया न त्यक्ता इति द्योतनाय समित्युक्तम् । तथाच, व्रजस्यानामयम् * रजन्येषेत्यादिवाक्यजातं निरर्थकमेवेति भावः । ननु किमित्येवमत्युपालम्भं दातुं प्रवृत्ताः । प्रियं किङ्करवाणि वः * ब्रूतागमनकारणमिति मदुक्तं श्रुत्वा तूष्णीं स्थिता भवतीर्दृष्ट्वा पुनर्गन्तुकामा निष्कामाश्चालक्ष्य, रजन्येषेत्याद्युक्तं मया । ततो माऽस्तु कोपो, यत् प्रार्थनीयं तन्निःशङ्कं प्रार्थ्यतामितिचेत् तत्राहुः ॥ अस्मान् त्वदतिरिक्तविषयकाङ्क्षारहिता भजस्व स्वीयत्वेन समाश्रयस्व । सन्त्यज्येत्यादिना, ननु कथं गोपगृहिणीर्वोऽहं भजामीति शङ्काऽपि निराकृता । तव पादमूलं भक्ता इत्यनेन, न वयं वनशोभादिनिरीक्षणार्थमागता इति—दृष्टं वनमित्याद्युक्तं समाहितम् । पादे, पन्नत्वानुक्त्या किञ्चित्संरम्भेण नृशंसवाक्यपादयोः काठिन्यं व्यञ्जयन्ति । ननु युष्माभिः सर्वं यथार्थमेवाभिधीयते, तथापि नाहं भवतीर्भजामि, स्वतन्त्रत्वादितिचेत् तत्राहुः ॥ हे दुरवग्रहेति ॥ अयमाग्रहो दुष्टो भवति । स्वतन्त्रस्यापि तवैवंविध आग्रहो नोचितः । चतुरशिरोमणित्वात् । दुराग्रहो हि

मूढधर्म इति भावः । अतोऽनन्यगतीरस्मान् मा त्यज, त्यागस्यानिर्वाच्यदोषोत्पादकत्वात् । नन्वस्तु दोषस्तेन मम का हानिरित्याशङ्क्याहुः । अहो किमेवंविधगर्वगिरिशृङ्गमारूढोऽसि । किमाप्तकामादात्मारामात् परमेश्वरादप्याधिक्यं प्राप्तोऽसि, यतः सोऽप्येवं न करोतीत्याशयेनाहुः ॥ देव इति ॥ यथा धर्माद्यनपेक्षः सर्वलोकसंहारकृत् पापाऽसंस्पृष्टः सकलैश्वर्य्यसम्पन्नः स्वयम्प्रकाशो ब्रह्मादिकारणभूतः स्वभक्तान् मुमुक्षून् भजते तत्प्रदानेन सेवते, तथा त्वं स्वतन्त्रोऽप्यस्मन्मनोरथपूर्तिं कर्तुं योग्योऽसीत्यर्थः । मुमुक्षूनित्यनेन ते मुमुक्षवो, न तु तदेकेप्सव इति तेषां स्वतो निकृष्टतां सूचयन्ति । यद्वा, अमुमुक्षून् मोक्षाद्यनिच्छून् । यद्वा, मुमुक्षून् तदन्यत् सर्वं त्यक्तुमिच्छून् शरणागतान् । दुरवग्रह इत्यनेन, हे विषमात्रवर्षकमेघेत्यप्युक्तम् । अवग्रहो वृष्टिप्रतिबन्ध इति पाणिनिस्मरणात् । दुष्टः— अवग्रहो यस्मिन् स प्रतिपिद्धवृष्टिर्मेघः । तस्य दुष्टत्वं च ऊष्मवायुवर्षकत्वात् । तथा चेतरजलस्थानीयस्वपरत्वाभिकाङ्क्षाविनिर्मुक्ता मेघस्थानीयत्वदेकशरणाश्चातकीकल्पा वयं त्वदधराऽमृतपानार्थमागतास्त्वं त्वस्मदभाग्योदयात् सम्प्रति विषं वर्षसि । भवतु, विषमेव पीत्वा मरिष्यामो, न तु व्रजं यास्यामः । चातकीस्वभावत्वात् । तस्माद् अस्मान् मा त्यज । कृतज्ञस्य तव च नेदमुचितमिति भावः । ननु चातकीसमानां भवतीनां मरणेन मम चातक्यपेक्षारहितमेघकल्पस्य का हानिरिति चेद्, न त्वं केवलं जडमेघसदृशः, किन्तु परमाभिज्ञदुःखमोचकमात्रकचेतनरूपपरमात्मसदृशोऽपीत्याशयेनाहुः ॥ देव इति ॥ यद्वा, भक्ता अस्मान् भजस्व दुराग्रहम् आसमन्तात् त्यज । बुद्धेः फलमनाग्रह * इत्युक्तत्वात् परमबुद्धिमतस्तवाग्रह एव नोचितो, दुराग्रहस्तु दूरनिरस्त इति भावः ॥ मानिनीपक्षे, एवं = प्रियं किं करवाणीत्यादिरूपं, नृशंसं

क्रूरं गदितुं नार्हसीति । यद्यपि भवान् सौन्दर्य्यादिगुणसागर-स्तत्रापि विभुः परमसमर्थस्तथापि परदारा एवं न वक्तव्या इति भावः । यदि परदारैरेव तव रमणेच्छा तर्हि याः सर्वविषयान् संत्यज्य तव पादमूलं भक्तास्ता दुरवग्रहं स्वच्छन्दं यथा स्यात् तथा भजस्व । अस्मान् आसमन्तात् सर्वप्रकारेण त्यज । यद्वा अस्मान् दुःसाध्याः प्रति दुराग्रहं त्यज । प्रभवोऽपि भजमानमेव भजन्त इत्याशयेनाहुः ॥ देव इति॥ आदिपुरुषो देवो, यदपेक्षयाऽधिकप्रभुत्वविशिष्टः कोऽपि नास्ति, स इत्यर्थः ॥

निवृत्तिपक्षे, एवं प्रतिरुद्धाः श्रुतयः साक्रोशमाहुः ॥ मैवमिति ॥ एवं ब्रह्मणि श्रुतीनां प्रामाण्यं नास्तीत्येवमादिरूपं नृशंसं सर्वघातुकं गदितुं भवान् नार्हति। ननु नाहं ब्रवीमि, किन्तु शास्त्रतत्त्वाऽनभिज्ञास्ते ते वादिन एवं जल्पन्त्यऽतो नाऽहमुपालम्भविषय इति चेत् तत्राहुः॥ हे विभो! व्यापक। तथाच, अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति श्रुत्या नामरूपात्मकसंसार-विस्तराय तादृशजीवात्मना त्वमेव ब्रवीषीति भावः। यतः, संत्यज्य सर्वविषयाँस्तव पादमूलं भक्ता अस्मान् भजस्व । दुरवग्रहम् आत्यज। नायं मोक्षमार्गः, किन्तु परमानर्थाऽसद्भावप्रापकः । असन्नेव स भवति असद् ब्रह्मेति वेदचेदित्यादिश्रुतेः । तस्माद् यथा मुमुक्षूणां मोक्षः स्यात् तथा करुणां विधेयेत्याशयेनाहुः ॥ देव इति ॥ यथा आदिपुरुषो देवो भवान् मुमुक्षून् भजते मोक्षदाता भवेत् तथाऽस्मान् भजस्व। तथाच परमपुरुषार्थमोक्षलाभाय ब्रह्मण्यस्मत्प्रामाण्यमवश्यमास्थेयमित्यर्थः । अयमाशयः । सर्वान् विषयान् प्रतिपाद्यान् सम्यक् परित्यज्य ब्रह्मणि समन्वितानां श्रुतीनामन्यपरत्वाभिधानं साहसमात्रम् । तत्र श्रुतिवाक्यानां द्विविधा ब्रह्मणि प्रवृत्तिः । एका ब्रह्मात्मनोरेकत्वविषया, अपरा सत्यज्ञाना-

दिलक्षणब्रह्मविषया । तत्राद्या यथा, सोऽयं देवदत्त इति पदत्रयस्यैकस्मिन् देवदत्ते पर्यवसानं तद्वत् । तथाहि । यथोक्तवाक्यं, सोऽयमिति विशिष्टाभिधायिभ्यां पदाभ्यां स्वार्थैकदेशव्यक्तिमात्रलक्ष्यपरम् । तथा, तत्त्वमसिवाक्यमपि विशिष्टाभिधायिभ्यां पदाभ्यां स्वार्थैकदेशचैतन्यव्यक्तिमात्रपरम् । ननु पूर्वतन्त्रे पदार्थानां संसर्गः, संसृष्टाः पदपदार्थो वाक्यमिति वाक्यार्थलक्षणमुक्तम् । तच्च द्विविधमप्यखण्डार्थे न सम्भवति । ततः कथं वाक्यार्थलक्षणशून्यमखण्डं ब्रह्म वाक्यार्थः स्यादितिचेन्न । वेदान्तशास्त्राऽऽचार्यश्रीबादरायणानुयायिभिः, संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः * अखण्डैकरसत्वेन वाक्यार्थो विदुषां मत इति वदद्भिरखण्डस्य वाक्यार्थत्वाभिधानात् । नचैवं सत्युक्तलक्षणस्य तत्राव्याप्तिः । सामान्यलक्षणस्यैव यावद्विशेषव्याप्तिनियमाद् विशेषलक्षणयोरेतयोः परस्पराव्याप्तेरदूषकत्वात् । सामान्यलक्षणं तु वाक्यप्रमेयत्वमत्राप्यस्त्येव । नचाखण्डवाक्यार्थस्य विशेषलक्षणाभावः । अपर्यायानेकपदैरेकप्रातिपदिकार्थमात्रपरत्वस्यैव तल्लक्षणत्वात् । ननु तत्त्वम्पदलक्षितरूपे भिन्ने ? किं वा न ? । आद्ये ऐक्यमभिन्नसम्भवः । द्वितीये पदार्थवाक्यार्थयोरेकत्वापत्तिरिति चेन्न । द्वितीयपक्षोक्तदोषस्येष्टापत्तिग्रस्तत्वात् । नच पदद्वयवैयर्थ्यम् । लक्षणयैकार्थबोधनार्थत्वात् । त्वम्पदस्य वाच्यार्थपरित्यागेन चिल्लक्षकत्वं तत्पदसामानाधिकरण्ये सति घटते । तथा तत्पदस्यापि वाच्यार्थपरित्यागेन चिल्लक्षकत्वं त्वम्पदसामानाधिकरण्य इति न पदद्वयवैयर्थ्यम् । एवं सत्यज्ञानाद्यवान्तरवाक्येऽखण्डार्थत्वम् । यथा केन चित् पृष्टोऽस्मिञ्ज्योतिर्मण्डले कश्चन्द्रो नामेति ?। तस्य प्रतिवचनं— प्रकृष्टप्रकाशश्चन्द्र इति वाक्यस्य । अत्र प्रकृष्टशब्दान्न चन्द्रप्रातिपदिकार्थसिद्धिः । प्रकृष्टं तम इति प्र-

कृष्टशब्दस्य प्रकृष्टसन्तमसेऽपि प्रयोगदर्शनात् । तथा प्रकाशशब्दादपि न तत्सिद्धिः । खद्योतादावपि तत्प्रयोगदर्शनात् । तस्माद्वाच्यार्थपरित्यागेनाऽप्रकर्षाऽप्रकाशविरोधी चन्द्रप्रातिपदिकार्थः पदद्वयेन प्रतिपाद्यत इत्यखण्डार्थत्वसिद्धिः । अन्यथा चन्द्रप्रातिपदिकार्थमात्रप्रश्नोत्तरतया विशिष्टमर्थं बोधयतो वक्तुरनवधेयवचनता स्यात् । तथा, विमतम् अखण्डार्थम् । लक्षणवाक्यत्वात् । प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवदिति सिद्धम् । यद्यपि प्रमाणान्तराभावाद् ब्रह्मण्युपनिषदां प्रामाण्यमुक्तं, किमबाधलक्षणप्रामाण्यं, किं वा प्रमाणान्तरसम्भिन्नार्थविषयत्वात् पौरुषेयं वेत्याक्षेपे प्रामाण्यं, किं वा प्रमाणान्तरयोग्यार्थविषयत्वात् तत्सिद्ध्यर्थानुवादरूपमप्रामाण्यम् । नाद्यः । गृहीतसङ्गतिकस्य पुंसः सत्यादिवाक्यश्रवणे अबाधितानधिगतार्थप्रमितिदर्शनात् । प्रमाणेन हि प्रमीयमाणस्यार्थस्य प्रमाणान्तरासंवादो न मिथ्यात्वापादकः । सर्वप्रमाणानामनधिगतार्थगन्तृत्वात् । अन्यथा चक्षुषा गृह्यमाणस्य रूपस्य त्वचाऽग्रहणान्मिथ्यात्वाशङ्का स्यात् । न द्वितीयः । प्रमाणान्तरसम्भिन्नार्थत्वाभावात् । पौरुषेयवचनप्रयुक्तत्वे हि सम्भेदस्य भूतार्थप्रयुक्तत्वे प्रत्यक्षादीनामपि सम्भेदः स्यात् । नापि तृतीयः । स्पर्शज्ञानयोग्यद्रव्यविषयस्य चक्षुषोऽनुवादकत्वादर्शनात् । एवं सिद्ध उपनिषदां ब्रह्मणि प्रामाण्ये तद्गतानां पदानामर्थान्तरकल्पना न युक्ता । श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । नच तेषां कर्तृस्वरूपप्रतिपादनपरता वक्तुं शक्या । तत् केन कं पश्येत्, एकमेवाद्वितीयमित्यादिना क्रियाकारकफलादेर्निराकृतत्वात् । नापि ब्रह्मण उपासनाविधिशेषत्वं सम्भवति । एतेन हेयोपादेयशून्यत्वेन क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्तेः । यद्यप्यन्यत्र वेदवाक्यानां विधिसंस्पर्शमन्तरेण प्रमाणत्वं न दृष्टं, तथापि ब्रह्मात्मविज्ञानस्य

फलपर्यन्तत्वात् तत्तद्विषयस्य शास्त्रस्य प्रामाण्यं शक्यं प्रत्याख्यातुम् । हितशासनाच्चोपनिषदां शास्त्रत्वमिति सङ्क्षेपः । एतेन, स्वागतमित्याद्याक्षेपो निरस्तः। यत्तु— रजन्येषेत्यादि, तत्तु यथार्थमेव । तत्र निद्रितानामज्ञानामपेक्षया ब्रह्मणो निशातुल्यत्वात् । तदुक्तं— या निशा सर्वभूतानां तस्यां जागर्ति संयमी * इत्यादि । यत्तु— मातर इत्यादि, तदपि तु, असन्नेव स भवति असद् ब्रह्मेति चेद्वेदेत्यादिना मात्रादितुल्यत्वाभिमानिनामास्तिकम्मन्यानामसत्त्वाभिधानेन तेषां भयोत्पादनस्य समुचितत्वात् । योऽपि— दृष्टंवनमित्यादिनोपहासः, सोऽपि साहसनिबन्धनः । अन्तःकरणतद्धर्माणां ह्यसंवेद्यत्वात् । अधिकार्य्यभावे, निचाय्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेनेत्यादिश्रुतीनां निरालम्बनतापत्तेश्चेति दिक् ॥ ३१ ॥

यदप्युक्तं, तद् यात मा चिरं गोष्ठं शुश्रूषध्वं पतीन् सतीः, भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमाययेत्यादि तत्राप्याहुः ॥

यत् पत्यपत्यसुहृदामनुवृत्तिरङ्ग !
स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ॥
अस्त्वेवमेतदुपदेशपदे त्वयीशे
प्रेष्टो भवांस्तनुभृतां किल बन्धुरात्मा ॥ ३२ ॥

यदिति ॥ यत्पत्यपत्यसुहृदामनुवृत्तिः स्त्रीस्वधर्म इति धर्मविदा त्वयोक्तमेतदुपदेशपदे त्वय्येवमेवाऽस्तु । अङ्ग ? हे भगवन्निति कोमलामन्त्रणेन, न वयं प्रातिकूलं वदाम इति सूचयन्ति । त्वं हि उपदेशविषयः । त्वद्बुद्ध्यैव पत्यादिसेवनम् उत्कृष्टफलप्रदमतः साक्षाद्भगवति सति किं परम्परयेति भावः। यत, ईशे, त्रिविदिषा-

वाक्येन सर्वोपदेशानामीशपरत्वावगमादिति भावः । यद्वा, ईशे अन्तर्यामिणि । जीवो हि यत्रान्तर्यामिरूपेण त्वया प्रेर्य्यते तत्रैव प्रवर्तते । अतः स्वसङ्गमार्थं त्वयैव प्रेरिता वयं त्वदाराधनं समीहामहे । तस्मादन्तर्यामिरूपेण स्वाराधने प्रेरणं, प्रेष्ठरूपेण पत्याद्याराधने इत्यस्मद्व्याकुलताऽऽपादिका प्रवृत्तिर्भगवतो नोचिता । अन्तर्यामिकृतप्रेरणस्यैव प्रबलत्वादिति भावः । किञ्च, उपदेशनियोज्य उपदेशविषयश्च त्वमेवातस्त्वदाराधने नास्ति किमपि बाधकमित्याशयेनाहुः ॥ प्रेष्ठः = परमप्रेमास्पदम् । अत एवात्मा, परमप्रेमास्पदस्यैवात्मत्वात् । स च तनुभृतां सर्वेषां तनुर्न तु यस्य कस्य चित् । अतः सर्वेषां बन्धुरूपो भवानेव यः सम्प्रत्यऽस्मदनुग्रहार्थं नन्दनन्दनविग्रहस्तस्मादुपदेशकर्तृतदनुष्ठातृतद्विषयात्मनस्त्वाराधनमेव मुख्यं सर्वाराधनमिति भावः। यद्वा, त्वय्युपदेशपदे धर्मोपदेशकर्तरि सति अस्मासु धर्मं जिज्ञासमानासु सतीषु एतत् त्वयोक्तमेवमस्तु । न तु वयं तथा, नापि भवान्; किन्तु भवानात्मेति । अथवा, एतदुक्तमुपदेशपदे पुरुषेऽस्तु नाम, त्वयि तु ईशे स्वामिनि सति एवं क्व, नैवमित्यर्थः। यद्वा, उपदेशपदे उपदेशेन न निवर्तनीये लौकिकपुरुषे आसक्तचित्तत्वे एतदेवमस्तु, ईश्वरे त्वयि तु नैवमित्यर्थः । यतस्तनुभृतां त्वमात्मा फलरूपः । अथवा एवमेतत् त्वय्येवाऽस्तु । कुतः । उपदेशपदे आराधनीयत्वेनोपदिश्यमानानां पत्यादीनां पदे अधिष्ठाने । यतः, ईशे । न हीश्वरमधिष्ठानम् ऋते कोऽपि पतिपुत्रादिर्नाम । अध्यस्तस्याधिष्ठानानतिरेकात् । तस्मान्न वयमनुचिते कर्मणि प्रवृत्ता इति भावः । यद्वा, यत् त्वयोक्तमेतदेवम् आदावुपदेशकर्तरि आचार्य्ये त्वय्यऽस्तु । आचार्य्यसेवनपूर्वकस्यैवं धर्मानुष्ठानस्य सफलत्वप्रतिपादनात्। तत्रापि ईशे परमेश्वरे । एवमप्याचार्य्यः स्यात् तर्हि किमु

वक्तव्यम् । ईश्वरत्वादेव तनुभृतामात्मा । तत एव प्रेष्ठस्तत एव बन्धुः सुहृत् । सात्मकानामेव पद्मादीनां सेवनं दृश्यते, न तु मृतानां तेषाम् । तद्वाहविधानात् । अतोऽस्मद्भाग्यवशात् सदानन्दाऽऽत्मैव प्रकटितस्तस्मात्त्वत्सेवने प्रवृत्तानामस्माकं किं तैरिति भावः । अनभिज्ञापक्षे, अधिकारमबुद्ध्वैव धर्ममुपदेष्टुं प्रवृत्तोऽसि । निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेध * इत्युक्तत्वाद् ब्रह्मज्ञानामस्माकं विधिनिषेधाधिकाराभावादित्याशयेनाहुः ॥ यदिति ॥ इति यद्धर्मविदा त्वयोक्तमेतदुपदेशास्पदे तदेकस्वभावे एवमस्तु क्रियताम् एवमुपदेशो, न वयं निवारयामः । परन्तु स्वाधिकाराभावान्न तं गृह्णीम इति भावः ॥ धर्मविदेति ॥ धर्मस्वरूपमात्रं वेत्सि, न तु तदुपदेशाधिकारम् । यद्वा, अथापि धर्मविदसि, न तु ब्रह्मवित् । अत एव ब्रवीषीति सोपहासं व्यङ्ग्यम् । यद्यपि निवारणमुचितमधिकारं विनाऽरण्यरोदनप्रायस्योपदेशस्य निषिद्धत्वात् । तथापीश्वरत्वात् तव नास्त्यस्माकं निवारणसामर्थ्यमित्याशयेनाहुः ॥ ईश इति ॥ यद्वा, अधिकारं विनोपदेशकर्तृत्वमनुचितमपि प्रभुत्वान्नो विरुद्ध्यते । ननु, वामैव विभुतेत्युक्तत्वेन विभुतायाः कुटिलप्रवृत्तिजनकत्वावगमाद् अधिकाराऽभावसाधकमात्मानुभवमावेदयन्ति ॥ प्रेष्ठ इति ॥ अस्मत्प्रेष्ठो भवानेव । सर्वेषां तनुभृतां बन्धुर्हितैषी परमात्मा आत्मा च । यद्वा, सर्वेषां परप्रेमास्पदभूतो य आत्मा यश्च सुहृत् परमेश्वरः स, तत्त्वमसिवाक्ये तत्त्वम्पदोपलक्षितो भवानेव । तथाचाखण्डवाक्यार्थबोधवतीनां कुतस्त्वदुक्तधर्मेऽधिकारः, कुतश्चाऽशुभसम्बन्धः । पश्यतः सर्वभूतानि सर्वावस्थासु सर्वदा * ब्रह्मभूतस्य संयोगो नाऽशुभस्योपपद्यत इत्यादिशास्त्रादिति भावः । ब्रह्मज्ञम्मन्यानां पक्षमवलम्ब्येयमुक्तिर्द्रष्टव्या । तेषां तदभिमानेन यथेष्टाचरणे प्रवृत्तिदर्शनात् । तदुदाहरणन्तु—ब्रह्मैव

सर्वमिति वेदविदो वदन्ति तस्मान्न मे सखि पराऽपरभेदबुद्धिः * जारेऽथवा निजवरे सदृशोऽनुरागो व्यर्थं किमर्थमसतीति कदर्थयन्तीत्यादि । यद्वा, स्त्रीणां स्वधर्म इति यत् त्वयोक्तमेतदुपदेशपदे त्वय्यस्तु । एतदुपदेशविषयो भवानेवाऽतो न वयमुपदेशनीयाः । ननु मम कुत उपदेशविषयत्वमित्याशङ्क्य सौन्दर्य्यमाधुर्य्यादिगुणगणालङ्कृतस्यास्मच्चित्तकर्षकस्य तवैवंविधत्वमेवास्मद्धर्मनाशे प्रयोजकमिति भावः । यद्वा, इति यत् त्वयोक्तं तदस्माकं मनसि न प्रविशति । यतस्त्वं धर्मविन्न तु तदनुष्ठाता । यो यस्य धर्मस्यानुष्ठाता न भवति, केवलं धर्मं जानाति, न तद्वाक्यात् कस्यचित् तस्मिन् धर्मे प्रवृत्तिर्भवति । अतः काचिन्महाभागा पातिव्रत्यधर्मानुष्ठानपरा योषिद्धीराऽस्मानुपदिशेच्चेत् तर्ह्यस्मन्मनसि तद्वाक्यं प्रविशेदतः किमर्थं जल्पसीति भावः । अस्मद्वाक्यमेतासां हृदि प्रविशत्विति यदि तत्राग्रहस्तर्ह्येतदुपदेशपदे गुरौ त्वय्यस्तु । तथाच विष्णुना यथा मोहिनीरूपं धृतं तथा त्वमपि स्त्रीरूपमादाय स्त्रीधर्ममाचर, ततोऽस्मानुपदिशेति गुर्वनुष्ठिते कर्मणि शिष्यभूतानामस्माकमपि प्रवृत्तिः सौकर्य्येण भविष्यतीति भावः । नन्वनुष्ठायाऽप्यहं दर्शयामि, परन्तु किं कर्तव्यं !! स्त्रीत्वं नास्ति ममेतिचेत् तत्राहुः ॥ ईश इति ॥ सर्वकलासमर्थे त्वयि स्त्रीभावोऽपि न दुर्घट इति भावः ॥ ननु कपटेन गृहीतस्त्रीभावस्य मम पाणिग्रहीतुरलभ्यत्वात् कथं पातिव्रत्यधर्मानुष्ठानमिति चेत् तत्राहुः ॥ प्रेष्ठो भवान् ॥ स्वभावत एव प्रियो मनोहरात्मा च । तथाच यथा मोहिन्या जानन्नपि कपटस्त्रीभावं, स्वाभाविकस्त्रीभावां परमप्रियामुमां विहाय सन्दग्धकामः परमजितेन्द्रियोऽपि श्रीरुद्रस्तद्ग्रहणायाधावत्, तथा लोकोत्तरसौन्दर्य्यवति त्वयि कपटेनापि गृहीतस्त्रीभावे जानन्तोऽपि कोटिशः स्वस्वदारान् परित्यज्य त्वद्ग्रहणाय धाविष्यन्त्यऽतो न

पतिदौर्लभ्यमिति भावः । अनेनाहो विधात्रा धर्मविनाशायैव त्वं रचितोऽसि । पुरुषत्वे स्त्रीणां धर्मं नाशयसि, गृहीतस्त्रीभावे पुरुषाणां तन्नाशयिष्यसि ।धर्ममनुष्ठातुं तु त्वं कदापि न समर्थोऽसि। यथेदानीं पुरुषधर्ममेकपत्नीव्रतलक्षणमनुष्ठातुमशक्तो, बह्वीनां स्वस्मिन्नासक्तत्वात् । तथा गृहीतस्त्रीभावेऽप्यसंख्यातपुरुषाणामासक्तिजनकत्वात् । तस्मादनुष्ठाय उपदेष्टुमशक्तस्त्वं किमर्थं वृथा कण्ठशोषणाय प्रवृत्तोऽसीत्यपि ध्वनितम् । यद्वा धर्मविदा त्वया इति यदुक्तमेतदुपदेशपदे त्वयि एवमस्तु, त्वदङ्गेष्वेव जीर्णं भवतु । ग्राहकाभावात् । अहो ज्ञातमस्माभिर्नवीनं धर्मवित्त्वं त्वया सम्पादितमतः शिष्याः सम्पादनीयाः । यथोक्तधर्मश्चोपदेष्टव्य इति तव महत्युत्कण्ठा वर्त्तते। ततोऽस्मानेवमुपदेष्टुं प्रवृत्तोऽसि। परन्तु न वयं त्वां गुरुं कर्तुं समागता, अतः किमर्थमपात्रदानात् स्वधनं नाशयसि । अप्रतिपित्सितमर्थं प्रतिपादयन्ननवधेयवचनो भवति । तथाच धर्मविद् यद्यपि जातोऽसि, तथाप्यधिकारानधिकारविवेकलेशेनापि विधुरोऽस्यऽतः सम्प्रत्येतत् त्वयि तिष्ठतु। गुरोः सकाशाद् यथोक्तविवेकमपि लब्ध्वैतदधिकारलाभे सुखेनोपदेशं करिष्यसीति भावः । यतस्त्वमीशः ॥ यथोक्तोपदेशधारणेऽधिकारस्वीकारेऽधिकारिसम्पादने च समर्थः । भवद्यस्तर्हि किमर्थमागता इतिचेत् तत्राहुः ॥ तनुभृतां सर्वेषां चतुर्दशभुवनस्थानां सौन्दर्यादिविशिष्टविग्रहवतां मध्ये भवान् मनोहरस्वरूपोऽतोऽस्माकं प्रेष्ठः । तथाच त्वयि रमणबुद्ध्या समागता वयमतो न यथोक्तोपदेशार्हा इति भावः ॥ मानिनीपक्षे, पत्याद्यनुवृत्तिलक्षणः स्त्रीणां स्वधर्म इति त्वयोक्तम् एतदुपदेशकर्तरि समर्थे त्वय्येवमस्तु । सर्वदैवमत्र त्वया वयमुपदेशनीयाः। धर्मविदेत्यनेन अहो ज्ञातम् अद्यास्माभिः— त्वं धर्मविदसीति सूचितम् । योग्यं चैवमुपदेशकर्तृत्वं तव, यतः स्व-

स्मिन् प्रेमकृतः शुभपथ्येव प्रवर्त्यन्ते सज्जनैरित्याशयेनाहुः ॥ प्रेष्ठ इति ॥ भवान् प्रेमविषयो यतो बन्धुः । यथोक्तोपदेशकर्तृत्वाद् हितैषी। अत आत्मा स्वात्मतुल्यः । तथाच, कः सत्यभर्ता, शुश्रूषणीयः कः, को वा कपटभर्तेत्यादिविवेकवतीनाम् अस्माकमग्रे स्वपाण्डित्यं नोद्घाटनीयमिति भावः । यद्वा इति यत् त्वयोक्तमेतदेवमुपदेशपदे त्वय्यऽस्तु । त्वमपि स्वधर्ममाश्रित्य तिष्ठ, न त्वस्माकं स्वस्य च धर्मं नाशयेति भावः । यतस्त्वमीशो नाशसंरक्षणयोः समर्थः । यदि तु मदभिस्नेहवतीनां नः स धर्मः, कपटपूर्वकत्वादिति तत्राहुः ॥ प्रेष्ठ इति ॥ तनुभृतां सर्वेषां प्राणिनां भवान् आत्मवत् प्रेष्ठः । यतः सर्वेषां हितैषी । तथाच सर्वेषां तनुभृतां यथा त्वयि प्रीतिस्तथाऽस्माकमप्यतो विशेषप्रीतिभ्रमादस्मासु दोषमारोप्याऽस्मद्धर्मं नाशयितुमयोग्योऽसीति भावः ॥

निवृत्तिपक्षे, एवं साक्षाद्ब्रह्मप्रतिपादकश्रुतिभिः स्वस्य ब्रह्मणि समन्वयोऽभिहित इदानीम्, इन्द्रो यातोऽवसितस्य राजा, अग्निर्मूर्द्धा दिव इत्यादिका श्रुतयः स्वाभिप्रायं ब्रह्मण्यावेदयन्ति ॥ यदिति ॥ यत् स्त्रीसधर्मिकाणां श्रुतीनामिन्द्रादिप्रतिपादिकानामस्माकमिन्द्राद्यनुवृत्तिस्तात्पर्येण तत्र प्रवृत्तिः स्वधर्म इति धर्मविदा त्वयोक्तम्, एतदेवं त्वय्यस्तु । यत उपदिश्यमानानामिन्द्रादीनां पदे अधिष्ठाने, यत ईश्वरे सर्वकारणभूते । यतश्च भवान् प्रेष्ठत्वात् तनुभृतां सर्वेषामिन्द्रादीनामात्मा तद्बन्धुस्तत्सम्बन्धीन्द्रादिविग्रहरूपश्च । तथाच किमपि विकारजातं प्रतिपादयन्त्यः श्रुतयः सर्वाधिष्ठानभूतं सर्वात्मानं सर्वस्वरूपं परमात्मानं तमेव प्रतिपादयन्ति । सर्वे वेदा यत् पदमामनन्तीत्यादिश्रुतेरिति भावः ॥ ३२ ॥

सन्मार्गे प्रवृत्ता वयं प्रशंस्या, न तूपालम्भयोग्या इत्याशयेन सदाचारं प्रदर्शयन्ति ॥

कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्म-
न्नित्यप्रिये पतिसुतादिभिरार्तिदैः किम् ॥
तन्नः प्रसीद परमेश्वर मा स्म छिन्द्या-
दाशां धृतां त्वयि चिरादरविन्दनेत्र ! ॥ ३३ ॥

कुर्वन्तीति ॥ कुशलाः कर्तव्याकर्तव्यादिविवेकवन्तः, किं प्रजया करिष्यामो येषां नोऽयमात्मा लोक इत्यादिशास्त्रतत्त्वविदः पुरुषधौरेया नारदादयो, योषिद्वरा गार्गीसुलभाद्याश्च त्वयि रतिं कुर्वन्ति । यतः, स्वे स्वस्वरूपभूते आत्मनि, अत एव नित्यप्रिये । अन्यत् सर्वं यदा स्वात्माऽनुकूलं भवति तदा प्रियं भवति, न तु सर्वदा । स्वात्मा तु सर्वदैव प्रियः । तथाचैवम्भूते त्वय्येव रतिरुचिता । तत्संस्थोऽमृतत्वमेति, यदात्मरतिरेव स्यादात्मतृप्तश्च मानवः * आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते * इत्यादिशास्त्रात् । अतः पतिसुतादिभिः किं मोक्षप्रतिबन्धकैः, किं प्रयोजनम् । बन्धवो दृढबन्धनम् * इत्युक्तत्वात् । प्रत्युतार्तिदैः सम्प्राप्तिवियोगादिना जन्मादिसंसृतिचक्रानिक्षेपणादिना चाऽऽर्तिप्रदायकैः । ये हि संस्पर्शजा भोगा दुःखयोनय एव ते * इत्यादिशास्त्रात् । एवं यथोक्तनिर्दुष्टत्वमुपपाद्य पूर्वदिकस्थाः प्रार्थयन्ते ॥ तदिति ॥ यस्मात् पतिपुत्राद्यनुवृत्तिर्निन्दिता, त्वदनुवृत्तिर्विहिता सदाचारप्राप्ता चाऽतोऽस्माभिर्योग्यमेव कृतम् । तस्मान्नोऽस्मान् प्रति प्रसीद । ननु मयि प्रसन्ने किं भवतीति चेत् तत्राहुः ॥ हे परमेश्वर! ब्रह्माद्यधीश्वरे त्वयि प्रसन्ने पुरुषार्थचतुष्टयमपि सिद्ध्यति । अकामः सर्वकामो वा मोक्षकाम उदारधीः * तीव्रेण भक्तियोगेन यजेत पुरुषं परम् * इत्युक्तत्वात् । ननु भवतु, प्रसन्नोऽहं

युष्मभ्यं मोक्षं ददामीति चेद्, न वयं सम्प्रति मोक्षकामा इत्याशयेन आहुः ॥ मा स्मेति ॥ चिराद् रामाऽवतारादारभ्य त्वयि धृताम् अस्माभिः सह रमणं करिष्यतीत्येवं रूपाम् आशां भवान् मा च्छिन्द्यात् । आशापूर्तिरेव प्रभुभिः क्रियते, न तु तच्छेद इति प्रसिद्धिद्योतनार्थं— स्मेति ॥ ननु सर्वात्मभावं जानतीनां युष्माकं स्वपतिरूपेण मया रमणेन सन्तोषः किमिति न भवतीतिचेत् तत्राहुः ॥ हे अरविन्दनेत्र ॥ अनावृतब्रह्मात्मभावेन तुच्छीकृतकोटिकामविग्रहेण पुण्डरीकाक्षेण भगवता त्वया रमणाभिकाङ्क्षावसो वयं, न त्वावृतब्रह्मात्मभावैर्मलमूत्रादिविग्रहैः स्वपतिभिः । अत एतत्स्वरूपेणैवास्मदाशापूर्तिर्विधेयेति भावः। यद्वा, अरविन्दनेत्र !श्रीरामचन्द्रविग्रहदर्शनजन्यैतद्विग्रहसङ्गमाऽऽशापूर्तिमेतद्विग्रहेणैव कर्तुं योग्योऽसीति सम्बोधनाशयः ॥ वरदेश्वर इति पाठे वरदानामीश्वरः । श्रीरामचन्द्रात्मना वने स्थितस्य तव दर्शनमात्रेणैव वरस्य लब्धत्वादिदानीं तत्साफल्यमपेक्षितमिति भावः ॥ अनभिज्ञापक्षे, यथोक्तात्मज्ञपक्षमवलम्ब्य यदुक्तं तत्र सदाचारं प्रमाणमाहुः ॥ कुर्वन्तीति ॥ कुशला मनीषिणो नित्यप्रिये स्वात्मभूते त्वय्येव रतिं कुर्वन्ति, पतिपुत्रादिभिरार्तिदैः किमिति विचार्य्य, तव तस्मान्नः प्रसीद । यतस्त्वं परमसमर्थः, त्वत्प्रसादो न निष्फल इति भावः । वरदेश्वर इति पाठे, मयेमा रंस्यथ क्षपा*इति त्वया वरो दत्तस्तं सार्थकं कर्तुं समर्थ इति भावः । तस्मादाशाच्छेदोऽसन्तनिषिद्ध इत्याहुः ॥ मा स्मेति ॥ चिराद्, बालभावमारभ्य त्वयि धृतामाशां भवान् मा च्छिन्द्यात् । हे अरविन्दनेत्र ! परमसुन्दर । तथाच लोकोत्तरसौन्दर्य्यादिविशिष्टो भवानेव अस्मदन्तःकरणे प्रविश्याऽऽशामुत्पादितवान् । अतः स्वेनोत्पादितां स्वगुणैर्वर्द्धितां स्वेनैव पूरयितुं योग्यामाशालक्षणां लतां फलकाले कर्णकठोरो-

त्त्यादिकुठारेण च्छेत्तुं नार्हसि । यतो, विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम् * इति न्यायं जानास्येवेति भावः । स्वास्मिन्नात्मज्ञत्वोच्छेषेण यदि त्वं भूतिकामस्तर्ह्याशापूर्तिरूपमस्मत्पूजनमवश्यं कुरु । आत्मज्ञमर्च्चयेद् भूतिकाम इति श्रुतेरिति ध्वनितम् । यद्वा, य एतस्मिन् महाभागा * इत्यादिगर्गोक्तिमनुस्मृत्याहुः ॥ कुर्वन्तीति ॥ कुशला महद्भाग्यलब्धसारासारविवेकास्त्वयि रतिं कुर्वन्ति । यतः स्वीये आत्मनि अन्तःकरणे नित्यप्रिये, यद्वा नित्यप्रिये स्वास्मिन् परस्मिंश्च नित्यप्रिये त्वयि । अतस्तद्विपरीतैः स्वीये आत्मनि चार्तिदैर्दुःखप्रदैः पत्यादिभिरस्माकमपि कुशलानां किं प्रयोजनम् । तत् तस्मान्नः प्रसीद । त्वयि चिराद् धृतामाशां भवान् मा च्छिन्द्यात् । सर्वं परित्यज्य त्वदाशया जीवामः । तदुच्छेदे त्ववलम्बनाभावात् सद्य एव मरिष्याम इति भावः । ननु भवतीनां नाद्यापि तथाविधप्रेमातिरेको दृश्यत इत्यत एवं ब्रवीमीति चेत् तत्राहुः ॥ हे अरविन्दनेत्र ! अहो ज्ञातमस्माभिः, भोः सखे! रजनीयं, भवाँश्चारविन्दनेत्रः । अतो मुकुलितनेत्रकमलत्वादस्माकं प्रेम्णः परां काष्ठां न पश्यसीति सनर्म व्यङ्ग्यम् ॥ मानिनीपक्षे, ननु सर्वेषां प्राणिनामहं प्रेष्ठ इति यदि भवत्यो जानन्ति तर्हि स्वाधिकारानुरूपां रतिं कुतो न कुर्वन्तीत्याशङ्क्याहुः ॥ कुर्वन्तीति ॥ कुशलाः स्वधर्मनिपुणाः साध्व्यः, आर्तिदैः— दो अवखण्डने। दुःखच्छेदकैः पत्यादिभिर्हेतुभूतैः स्वीयेगृहादौ आत्मनि च नित्यप्रिये सति, त्वयि रतिं रमणबुद्धिं कुर्वन्ति किम् ? । अपि तु न कुर्वन्तीत्यर्थः । तत् तस्मान्नः प्रसीद । हे परमेश्वर ! व्रजाधीश्वरपुत्र! त्वां त्वत्प्रसादं प्रार्थयाम इति भावः । पाठान्तरे, हे वाञ्छितप्रद । प्रसादमेवाहुः ॥ चिराद् वयमत्र, मा आस्म = न तिष्ठाम । लटि रूपं छान्दसम् । शीघ्रं गृहान् गन्तुमनुजानीहीत्यर्थः ।

ननु चिरकालमारभ्य ममाऽऽशा वर्ततेऽत एवं न वाच्यमिति चेद् तत्राहुः ॥ आशामिति ॥ चिराद् त्वयि धृतां स्थिताम् । धृङ् अवस्थाने अस्मत्सङ्गाशाम्, अतः परं भवान् छिन्द्याद् । यतो, हे अरविन्दनेत्र ! ॥ कमलवद्विशालनेत्रस्य प्रत्यहमस्माकं स्वधर्मनिष्ठतां पश्यतोऽस्यन्ताऽसाध्येऽर्थे प्रार्थना नोचितेति भावः । यद्वा कुशलाः स्वीये आत्मवन्निसप्रियेऽपि त्वयि पत्यादिभिर्दुःखनिवारकैर्हेतुभूतै रतिं कुर्वन्ति किम् । अपि तु न कुर्वन्ति । समानमन्यद् । यद्वा, साध्वी वलयुता भ्रातृमती भर्तृप्रिया वहु * असाध्या सा भवेन्नारी वर्जनीयाऽपमृत्युदेत्युक्तमसाध्यालक्षणं स्वास्मिन् सूचयन्त्य आहुः ॥ कुर्वन्तीति ॥ अहो कुशला अस्मदाद्याः पत्यादिभिः स्वीये आत्मनि देहादौ निसप्रिये तत्करणीयप्रीतिविषये सति रतिं कुर्वन्ति किम् ? । तत्रापि आर्तिदैः ॥ पापसम्भावनयापि परमपीडाप्रदैः । समानमन्यत् । यद्वा, तिष्ठतु पतित्वविचारः, प्रीतिविचारश्च । अस्माकं तु सर्वतो विरक्तिं सम्पाद्यात्मरतिः कर्तव्येति सतां प्रवृत्तिदर्शनेन सम्प्रति मनीषा वर्तत इत्याशयेनाहुः ॥ कुर्वन्तीति ॥ तु अयि इति च्छेदः । अयि, हे सौम्य ! हि प्रसिद्धम् । कुशलास्तु स्वे वस्तुतः स्वरूपभूते आत्मनि निसप्रिये रतिं कुर्वन्ति, न तु तद्विपरीते देहादौ । नोऽस्माकम् आर्तिदैरपत्यादिभिः किं प्रयोजनमिति विचार्य्य कथं रतिं कुर्वन्तीत्यपेक्षायामाहुः ॥ तदिति ॥ यतः सर्वं दुःखस्वरूपं तस्माद्, हे परमेश्वर ! त्वं प्रसीद । प्रसन्नो भूत्वा वयं विषयाऽऽशया त्वयि मा आस्म । त्वदन्यभूता वयं न स्थितास्तामाशां, हे अरविन्दनेत्र ! भवान् छिन्द्याद् । हे ईश्वर परब्रह्मविषया मा प्रमा छिन्द्यादिति वा । यद्वा, हे अरविन्दनेत्र ! परमेश्वरविषयिणी मा प्रमा चिराद् कालमारभ्य धृतां स्वीकृतां विषयाशां छिन्द्याद् । ततस्त्वयि, आस्म त्व-

दनन्या भवामेत्येवम्प्रकारेण रतिं कुर्वन्तीत्यर्थः । यद्वा, भोः चतुरशिरोमणे, नेयं परदारेषु रत्याशा शोभना । कुशलास्तु स्वपतिभार्यादावपि रतिं विहाय स्वात्मन्येव रतिं कुर्वन्तीत्याशयेनाहुः ॥ कुर्वन्तीति ॥ तस्मात् त्वमपि प्रसीद, किमर्थं ग्लायसीति भावः । प्रसादे सर्वदुःखानां हानिरस्योपजायते * इति प्रसिद्धया प्रसादे सति, हे परम ! हे अरविन्दनेत्र ! ईश्वर ! परमा चिरात् त्वयि अवस्थितां सर्वदुःखनिदानभूतामाशां छिन्द्यादित्यर्थः ॥

निवृत्तिपक्षे, प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म * एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति * पुरुष एवेदं विश्वं कर्म तपो ब्रह्म पराऽमृतम् * एतद्यो वेद निहितं गुहायां सोऽविद्याग्रथिं विकिरतीह सोम्य * तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति * भिद्यते हृदयग्रन्थिरित्याद्याःश्रुतयो वैराग्यादिसाधनसम्पन्नास्त्वय्येवात्मनि परमात्मस्वस्वरूपे प्रत्यगभिन्ने, यतो नित्यप्रिये रतिं, आर्तिप्रदैः पत्यादिभिर्नः किं प्रयोजनमिति विचार्य्य, तस्माद् हे परमेश्वर ! चिरादनादिकालादारभ्य त्वयि धृतामाशामभिप्रायं काश्चिदपि मा च्छिन्द्यात्।छेदनपरः परमेश्वरेण त्वया दण्डनीय इति सम्बोधनाऽऽशयः । यद्वा, तदन्तःस्थितेन त्वया तच्छेदनाय स न प्रेरणीय इत्याशयेनाहुः ॥ हे अरविन्दनेत्र ! सर्वहृत्कमलप्रकाशन ! इति ॥ ३३॥

यदपि वनदर्शनार्थमागतास्तस्य च जातत्वादितः परं प्रतियातेत्युक्तं तत्राऽऽप्याहुः ।

चित्तं सुखेन भवताऽपहृतं गृहेषु
यन्निर्विशत्युत करावपि गृह्यकृत्ये ॥
पादौ पदं न चलतस्तव पादमूलाद्

यामः कथं व्रजमथो करवाम किं वा ॥ ३४ ॥

चित्तमिति ॥ गृहादिषु यच्चित्तं सुखेन निर्विशति तत् त्वयाऽपहृतम् । एवमग्रेऽपि । यद्वा, तदपहारे न भगवतः प्रयास इत्याशयेन आहुः ॥ सुखेनाऽऽनन्दस्वरूपेण । तथाच साक्षादानन्दस्वरूपे त्वयि लब्धावस्थानं चित्तं गृहेऽपि न निर्विशति दूरे वनदर्शनादौ तत्प्रवेशः । तथा करावपि गृहोचितकृत्ये न निर्विशतः । दूरे पुष्पफलाद्युपचयः । न हि तस्करहृतः कस्मिंश्चित् कर्मणि केनचिन्नियुज्यत इति भावः । तथाच तत्र पादमूलात् तत्समीपात् पादौ पदं न चलतः । नाऽन्यत्र गच्छतः । तत्र पादमूलादित्यनेन त्वत्पादसाहित्यं चेत् तदा सर्वत्र गन्तुं शक्ताविति सूचितम् । अतो गमनसाधनाभावाद्व्रजं कथं यामः । ननु भवतीनां पद्भ्यां गमनसामर्थ्यं नास्ति चेत् तर्हि शकटादिना प्रेषयिष्यामीति चेत् तत्राहुः ॥ करवामेति ॥ अथो अथ तत्र गत्वा किं करवाम तत्तद्व्यापारसाधनचित्तादेस्त्वयाऽपहृतत्वादिति भावः ॥ अनभिज्ञापक्षे, न वयं वनशोभाऽऽशादिदर्शनार्थमागता, नापि तत्र सङ्गमार्थमपि तु चोरितं स्वचित्तं ग्रहीतुमागता इति नर्म व्यञ्जयन्त्य आहुः ॥ चित्तमस्माकमपहृतम् ॥ केनेति चेत् तत्राहुः ॥ भवता ॥ चोरचक्रवर्तिना । ननु भवत्योऽत्यन्तं मिथ्यावादिन्यः । वनस्थेन हि मया तदायासरहितेन कथमपहृतमिति चेत् तत्राहुः ॥ सुखेनाऽनायासेन । वेणुरवादिभूत्यसद्भावे तदपहरणे को वा तत्र प्रयास इति भावः । न चेदं स्वल्पम्, एदपहारेण सर्वस्यापि गृहादेर्लुण्ठितत्वाद् इत्याशयेनाहुः ॥ यच्चित्तं गृहेषु सर्वेषु बाह्येषु इन्द्रियरूपेषु च निर्विशेषेण विशति तदपहृतमित्यर्थः । अतः करावपि यौ गृहकृत्येषु निर्विशतः । उतेत्यनेन नेत्रादीनामपि संग्रहः । ननु संप्रति

गच्छत, स्वः परश्वो वा दास्यामीति चेत् तत्राहुः ॥ पादौ तद्विना तव पादमूलात् पदं न चलतः । धृतस्य चोरस्य त्यागो न न्याय्य इत्यपि ध्वनितम् । अथो अतो व्रजं कथं याम, गत्वा च किं करवाम । सर्वसाधनचित्तरूपधनाभावादित्यर्थः । यद्वा, किं वा करवाम । चित्तादः सर्वस्यापहारात् । चौरं भवन्तं प्राप्यापि तदादातुं, त्वां ग्रहीतुं, नेतुं, राजाद्यग्रे, आक्रोशनार्थं गन्तुं चाशक्तत्वात् । स्तम्भनादिमन्त्रज्ञेऽलौकिकचौरे किंकरवामेति भावः । यद्वा, सुखरूपेण भवता चित्तादेरपहृतत्वाद् गृहादीनि ज्वलन्तु, समृद्ध्यन्तु, किमस्माकं तैरतस्तन्नामाप्यस्मदग्रे नोच्चारणीयमितिभावः॥मानिनीपक्षे, ननु तिष्ठतु वादः, संप्रत्यत्र भवत्यः समागता रात्रावत्र विश्रम्य प्रातर्गमिष्यथेति चेत् तत्राहुः ॥ चित्तमिति ॥ सत्यमुक्तं त्वया, तथापि गृहेषु भवता जायमानेन सुखेन चित्तमस्माकमपहृतम् । यद्यस्माद्गृहकृत्येषु निर्विशति, करावपि तत्र निर्विशतः । ननु भवतु तथाप्यतिसुकुमारत्वात् पदमपि गन्तुमशक्ताभ्यां पद्भ्यां कथं गमिष्यथेति चेत्तत्राहुः ॥ पादौ तव पादमूलात् कथं पदं न चलतः, किन्तु चलत एव । ततः कथं व्रजं न याम । अत्र स्थित्वा च किं करवाम । यद्वा, यद्यपि पादौ पदमपि गन्तुं न शक्तौ, तथापि तव पादमूलात् कथञ्चिद् व्रजमेव शनैः शनैर्याम । अन्यथाऽत्र स्थित्वा किं करवामेत्यर्थः ॥

निवृत्तिपक्षे, ननु सर्वासां श्रुतीनां ब्रह्मपरत्वे कर्मणस्तत्तात्पर्याविषयत्वात्तदनुष्ठानादेर्वैयर्थ्यं प्राप्तमित्याशङ्क्य, तत्त्वज्ञानात् पूर्वं तद्वैयर्थ्यमाशङ्क्यते ? तदुत्तरं वा ? नाद्यः । यत्र तु द्वैतमिव भवति तदितर इतरं पश्यतीत्यादिना संसारदशायां क्रियाकारकादेः सद्भावाभिधानात् तद्वैयर्थ्याऽनवगमात् । न द्वितीयः । यत्र त्वस्य सर्वम् आत्मैवाभूत् तत् केन कं पश्येदित्यादिना तदुत्तरं तद्वैय-

र्थ्यस्येष्टत्वादित्याशयेनाहुः ॥ चित्तमिति ॥ सुखरूपेण भवता चित्तं यदाऽपहृतं सच्चिदानन्दघने प्रत्यगभिन्ने परमात्मनि चित्तं यदा लीनं तदा गृहेषु बाह्येष्वभ्यन्तरेषु च न निर्विशति । अत एव करावपि गृह्यकृत्ये न निर्विशतः । पादौ पदमपि न चलतः । तथाच सर्वेन्द्रियव्यापारनिवृत्त्या तत्त्वविदः कर्माधिकाराभावात् तदपेक्षया कर्मानुष्ठानादेर्वैयर्थ्ये नास्ति दोषः । नैव तस्य कृतेना-ऽर्थो नाकृतेनेह कश्चन * नचास्य सर्वभूतेषु कश्चिदर्थव्यपाश्र-य * इत्यादिशास्त्रादिति भावः । अतस्तव पादमूलाद् वयं व्रजं कथं यामः । कर्मकाण्डश्रुत्यानुगुण्यं कथं भजामः । तासामप्यस्म-दनुयायित्वात् । गत्वा च किं करवाम । क्रियाकारकादिप्रतिषेध-बोधिकानामस्माकं तदानुगुण्यासम्भवादिति भावः ॥ ३४ ॥

एवं दक्षिणदिग्गता उक्ताः प्रार्थयन्ते ॥

सिञ्चाङ्ग ! नस्त्वदधराऽमृतपूरकेण
हासावलोककलगीतजहृच्छयाग्निम् ॥
नो चेद् वयं विरहाजाग्न्युपयुक्तदेहा
ध्यानेन याम पदवीं पदयोः सखे ! ते ॥ ३५ ॥

सिञ्चेति ॥ अङ्ग ! हे भगवन्! अस्मद्हृच्छयाग्निं सिञ्च, न तु निर्वापय त्वद्विषयकामस्य परमसुखरूपत्वात् । यतस्त्वयैवोत्पादित इत्याहुः ॥ हासेति ॥ तत्र योऽयं हासपूर्वकोऽवलोकः कलगीतं च ताभ्यां जातो यो हृच्छयः कामः स एवाग्निः । तत्र हासः काम-जनकः, अवलोकः सन्धुक्षणकर्त्ता, गीतं वायुरिव । तत्रापि कल-गीतं सर्वतो वायुः । सिञ्चनं च न वा घृतादिना, स्वर्गस्थाऽमृ-तेन, चन्द्रस्थसुधया वा सम्भवति । तेषां यथाकथञ्चिदुदरप्रवेश-

योग्यानामप्यनभिलषितत्वेन हृदये प्रवेशायोगादित्याशयेनाहुः ॥ त्वदधराऽमृतपूरकेण ॥ अलौकिकेन पूरकेणाऽपि सिञ्चनोक्त्या यथोक्ताग्नेः परममहत्त्वं सूचितम् । सिञ्चनप्रार्थनया भगवद्विषयः काम एवास्मज्जीवनं जठराग्निवदिति ध्वनितम् । अन्यथा स्वस्य यदनुष्ठेयं, तदावेदयन्ति ॥ नो चेदिति ॥ सिञ्चनेन यदि न जीवयसि तर्हि विरहजाग्निना उपयुक्तदेहा दग्धशरीरास्ते पदयोः पदवीम् । अन्तिकं योगिवद् याम प्राप्नुयाम । उपयुक्तपदेन, त्वयोपभोग्यदेहानां यथोक्ताग्निनोपयुक्तत्वमयुक्तमिति ध्वनितम् । ननु सिञ्चनेनातिप्रवृद्धः कामाग्निर्दाहको भविष्यतीत्याशङ्कानिरासाय विरहाऽग्निनेत्युक्तम् । तथाचाऽतिप्रवृद्धोऽपि जाठराग्निर्यथेष्टभोजनलाभे सति न दहति, अनशनादिना तदलाभात्तु दहति । तथा हृच्छयाग्निरपि स्वभोग्यालाभे तदाशानिवृत्त्या विरहाग्निरूपेण परिणतो दहतीति भावः । यद्यपि तव प्राप्तौ नास्त्यस्माकं किञ्चिदपि प्रतिबन्धकं तथापि भगवदुपभुक्तदेहानां भगवत्प्राप्तिरभिलषिता, तद्विपर्यये महद् दुःखमतः सखिरूपेणावतीर्णस्य तव यथाऽस्मन्मनोरथपूर्तिर्भवेत् तथाऽनुष्ठानं योग्यमिति सूचयन्त्यः सम्बोधयन्ति ॥ हे सखे इति ॥ अथवा यद्यप्यस्मन्मरणे तव नास्ति काचिद्धानिस्तथापि सखित्वात् पश्चात्तापस्तु भविष्यत्येवेति सम्बोधनाऽऽशयः ॥ अनभिज्ञापक्षे, अनेन निर्वस्त्राङ्गदर्शनार्थं यथा वस्त्राहरणलीलाऽऽरब्धा, तथा निर्लज्जवचनश्रवणार्थमियं लीला समारब्धेति विज्ञाय विस्पष्टं प्रार्थयन्ते ॥ सिञ्चेति ॥ आदौ क्रियापदप्रयोगेणोत्कण्ठाधिक्यं सूचयन्ति ॥

अङ्ग ! हे प्रिय ! नः कामाऽग्निं सिञ्च । निर्वापय । यतस्तव हासाऽवलोककलगीताभ्यां जातश्चोद्दीप्तः । तथाच अस्मद्हृदयशयमेव कामाग्निं हासावलोकाभ्यां कलगीतलक्षणेन मन्थानदण्डेन प्रबोध्य

वाचः पेशैः प्रदीप्य तत्रास्मान् अस्मत्प्राणान् दग्धुमवक्रान्तोऽसि । नेदमुचितमतस्तज्जनितपापाद् बिभेषि चेत् तर्हि तं निर्वापय। येनैवाऽग्निः प्रदीप्यते तेनैव पश्चात्तापेन झटिति यदि निर्वाप्यते तर्हि तदैव तत्पापं निवर्तते इति भावः । ननु सम्प्रति ममान्तिके जलपूर्णभाजनाभावात् कथं सिञ्चामि तथा चेद् भवतीनामाग्रहस्तर्हि यमुनासन्निधौ चलनीयमिति सोपहासमाशङ्क्याहुः ॥ अमृतेन, तत्राप्यग्नेः परममहत्वात् तत्पूरकेण । स्वार्थे कन् । ननु जलमपि यत्र दुर्लभं तत्राऽमृतं कुतस्त्यं; तद्बिन्दोरपि दुर्लभत्वात् तत्पूरः कुत इत्याशङ्क्य कथमस्मज्जीवनसाधनं गोपायसि !! प्रत्यक्षोपलभ्यमानस्य गोपनाऽयोगादित्याशयेनाहुः ॥ त्वदधरेति ॥ अहो नाल्पेनाऽमृतसमुद्रेणापि तच्छान्तिरतोऽस्तु तद्दौर्लभ्यं, येनाऽमृतेन तच्छान्तिस्तत्र तव मुखचन्द्र एवास्त्यऽतो नास्ति तव कोऽप्यायास इति भावः । अनेन ज्वालनोपशमनयोरुभयोरपि स्वायत्तत्वादुभयविधा क्रीडोचिता, न त्वेकविधा । दुर्लीलाकर्तृषु राजकुमारेष्वपि तथा दर्शनादित्यपि ध्वनितम् । हृच्छयाग्निरित्यनेनान्तरोऽयं दाहात्मको रोगविशेषस्त्वदधराख्यपात्रविशेषं मुखे निधाय पीतेनाऽन्तःप्रवेशसमर्थेन तत्रस्थाऽमृतपूरकेणैवोपशान्तिं गमिष्यति, न तु अन्यैः कोटिभिरभ्युपायैरिति ध्वनितम् । ननु मम स्वाभाविकैर्हासादिभिर्यदि युवत्यो ज्वलेयुस्तर्हि कुत्र कति वा स्वाधराऽमृतदानेन चिकित्स्या इति चेत् तत्राहुः ॥ नो चेदिति ॥ यदि न सिञ्चसि तर्ह्ययमेकोऽग्निस्तेन शोषितदेहास्तथा विरहजाग्निना दग्धशरीरास्ते पदयोः पदवीं सान्निध्यमधुनैव ध्यानेन प्राप्नुयाम । अन्ते मतिः सा गतिरिति न्यायात् प्राणान् विहायाऽपि प्रेष्ठसन्निधानं संपाद्यमिति स्वप्राणेभ्योऽपि स्नेहाधिक्यं सूचयन्त्यः संबोधयन्ति ॥ हे सखे इति ॥ यद्वा, पूर्वजन्मन्यऽकृततपस्का वयमतो वि-

रहाग्निना प्राणान् जुहुमः । ततस्तत्र पादयोः पदवीं मार्गं प्राप्नुयामस्तद्रूपा भविष्यामः । ततोऽनिच्छतोऽपि तव पादौ अस्मत्स्तनेष्वेव पतेतां, न तु भूमौ । ततश्च त्वत्पादभारेणैवोपशान्तहृच्छयाग्नयो वयं सिद्धमनोरथा भविष्यामः । त्वं चानिच्छन्नप्यस्मत्कुचस्पर्शं सुखं प्राप्नुवन्नपि स्त्रीवधानुतापमेव भूयांसं प्राप्स्यसि । तथाच सखीरस्माँस्त्वमेव संतापयसि चेत् तर्हि वयम् अपि त्वां सखायमेवं कथं नानुतापयामः । परन्तु प्रेमहतकस्तदनुतापदुःखमपि कोटिगुणीकृत्य अस्मभ्यमेव दास्यते इति जानीमः । किं कुर्मोऽस्माकं दग्धललाटमेवंविधमेव विधात्रा सृष्टम् । तस्माद् भोः ! परिणामादर्शन कृपासागर स्वानुतापवल्लीबीजं किमर्थं वपसि, कथं वा फलभोगाभागिनीरस्माँश्च करोषि । मुक्त्वाऽसदाग्रहमङ्गीकुरु अस्मानित्याशयः । यद्वा, अकर्त्तव्यप्रार्थनामाकर्ण्यापि विमुखमालक्ष्याहुः ॥ नो चेद् वयमिति ॥ नन्वेतावत्पर्यन्तं कामाऽग्निना कथं न दग्धा इत्याशङ्क्य तत्सिञ्चनाऽऽशया संजीविता वयमितः परं तन्निवृत्त्या सोऽग्निर्विरहाजाऽग्निश्चेत्यग्निद्वयसत्त्वे जीवनं दुर्लभमिति भावः । नन्वस्तु, तेन मम का हानिरिति चेत् तत्राहुः ॥ ध्यानेनेति ॥ तथाच निरवधि दुःखं दातुं प्रवृत्तोऽसि । तादृशं दुःखं तुभ्यं दातुं नास्माकं सामर्थ्यम् । अस्मद्विरहेण तव दुःखानुदयात् । संयोगस्य तादृशदुःखजनकत्वेऽप्यस्मिञ्जन्मनि तस्य दुर्लभत्वादिदं शरीरं दग्ध्वा तव पादयोर्मार्गभावं याम। तेन च सर्वदा स्वसंयोगेनैवंविधं तव दुःखं दास्याम इति भावः । तथापि परस्परदुःखप्रदानं न सख्यधर्म इत्याशयेनाहुः ॥ हे सखे इति ॥ यद्वा, नन्विदानीमिदं दुर्घटं जन्मान्तरे स्यादित्याशङ्क्याहुः ॥ नो चेद्, इदं दुर्घटमेवेति चेत् तर्हि ध्यानेऽपि ते पदयोः सान्निध्यं न याम । यतो विरहजाग्नेरेवोपयुक्ता उचिता, न तु संयोगाऽमृत-

योग्या देहा यासां ताः । अधुनेव जन्मान्तरेऽपि विरहस्यैव निश्चयादिति भावः । तस्मात्त्वया सम्पादितं सख्यं वृथैव सम्पन्नमिति सम्बोधनाशयः ॥ मानिनीपक्षे, अङ्ग! हे लम्पट ! नोऽस्माकं सहजेन हासादिना जातो यस्तव कामानलस्तं त्वदधराऽमृतपूरकेणैव सिञ्च । तादृशाग्न्युपशामकतादृशाऽमृतदानयोग्यायाः कस्याश्चिदस्मास्वभावात् । इष्टे मधुरादिवस्तुनि दुर्मिले दृष्टे सति स्वोष्ठपुटी लोके यथा लिह्यते तद्वदिति नर्मव्यञ्जनम् । यद्वा, नोऽस्मत्तस्त्वऽन्यासामेवाधाराऽमृतपूरकेणेत्यर्थः । बलात्कारमालक्ष्याहुः ॥ नो चेद्, बलादस्मदधराऽमृतपानाय प्रवर्त्स्यसे चेत् तर्हि वयं स्वपतिविरहजाग्न्युपयुक्तदेहा भवेम, म्रियेमहि । तथापि ध्याने चिन्तनेऽपि ते पदयोर्मार्गमपि, न याम = न यास्याम । आलक्षसख्यादऽस्मत्स्वभावं जानासीति सम्बोधनाशयः ॥

निवृत्तिपक्षे, तरति शोकमात्मवित्, ब्रह्मविदाप्नोति परं, नाऽन्यः पन्था विद्यतेऽयनाय इत्यादिश्रुत्या परमपुरुषार्थोऽनन्यसाधनतत्त्वज्ञानस्यास्मदवलोकनादिना यथाकथञ्चिदपि जातस्य करुणाऽमृतधारयाभिषिञ्चनेन वर्द्धनम् उचितमिति प्रार्थयन्ते ॥ सिञ्चेति ॥ अङ्ग हे परमात्मन्! नोऽस्माकं श्रुतीनां हासपूर्वकं प्रसन्नतापूर्वकमऽवलोकनं = श्रवणपूर्वकं मननम् । कलयति सर्वतश्चित्तवृत्तीराकर्षतीति कलं, तच्च तद् गीतं गानं = निदिध्यासनं च, ताभ्यां जातो यो हृच्छयस्य सवासनस्य कामादेर्दाहकत्वादग्निस्तं ज्ञानाग्निं त्वदोष्ठपुटनिःसृतवाङ्मयाऽमृतपूरकेण कृष्णद्वैपायनाद्यात्मना त्वं सिञ्च वर्द्धय । यथा यथोक्ताग्निस्तत्तद्वादिकल्पितकुतर्कजलप्रवाहैर्नोपशाम्येत तथा कुर्विंत्यभिप्रायः । कृष्णाद्यात्मनाऽवतीर्णस्य भगवतो वचनाऽमृतत्वमुक्तम् । प्रपन्नपारिजाताय तोत्रवेत्रैकपाणये * ज्ञानमुद्राय कृष्णाय गीताऽमृतदुहे नमः * । जयति पराशरसूनुः

सत्यवतीहृदयनन्दनो व्यासः * यस्यास्यकमलगलितं वाङ्मयममृतं जगत् पिबतीत्यादिना ज्ञानस्याग्निरूपत्वमुक्तं भगवता। यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुते तथा * ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन * यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः * ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः * इत्यादिना तत्सेचनं तेनैव कृतम्। न हि ज्ञानेन सदृशं पवित्रमिह विद्यते * तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते * उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतमित्यादिना । विपक्षे दोषमाहुः॥ नो चेद्, न सिञ्चसि चेत्, तर्हि वयं, तत्तद्वादिप्रतिपादितेन— श्रुतिषु प्रत्यगभिन्नपरमात्मनिरूपणं नास्तीत्यादिरूपेण तव विरहलक्षणाऽग्निनोपयुक्तदेहा भक्षितस्वरूपा नष्टा भवेम । तथापि ते पदयोः पदवीं तत्त्वं, ध्यानेन याम = तत्राभिप्रावयसो भविष्यामः। वस्त्वऽन्यथाभावस्य वादिसहस्रैरपि कर्तुमशक्यत्वादिति भावः । यस्माद् वागर्थयोः सख्यं वर्ततेऽतस्तौ कदापि न वियुक्तौ भवत इति सम्बोधनाशयः ॥ ३५ ॥

ननु यद्यपि निःसीमप्रेमवत्सो भवत्यस्तथापि मर्य्यादापालनार्थं पत्यादिसान्निधौ स्थित्वैव मदाराधनं कर्तव्यमिति चेत् तत्राहुः

यर्ह्यम्बुजाक्ष तव पादतलं रमाया
दत्तक्षणं क्वचिदरण्यजनप्रियस्य ॥
अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमङ्ग ! (१)
स्थातुं त्वयाऽभिरमिता बत पारयामः ॥ ३६ ॥

यर्हीति ॥ हे अम्बुजाक्ष ! यर्हि यत्प्रभृति तव पादतलं वयम्

(१) अञ्ज इति पाठान्तरम् ।

# विज्ञापनम् ।

## बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य कृते ।||) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैः कानिचित् खण्डानिसंग्राह्याणि तैश्च प्रत्येकं खण्डानां कृते १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

### तत्र मुद्रिता ग्रन्थाः ।

| | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ६ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्डानि ३। द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहित खण्डानि ३ ) | ६ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |

| | | |
|---|---|---|
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ८ | ८ | ० |
| वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ | ३ | ० |
| टुप्टीका खण्डानि ४ | ४ | ० |
| पातञ्जलदर्शनम्।श्रीरामानन्दयतिकृतमणिप्रभाऽख्यवृत्ति स० | १ | ० |
| व्याकरण मिताक्षरा। श्रीमदन्नंभट्टप्रणीता खण्डानि १० | १० | ० |
| रसमञ्जरी। व्यङ्ग्यार्थकौमुद्या प्रकाशेन च सहिता ख० ३ | ३ | ० |
| भेदधिक्कारः व्याख्यासहितः श्रीमदप्पयदीक्षितकृत उपक्रम पराक्रमसहितः खण्डे २ | २ | ० |
| बोधसारो नरहरिकृतः तच्छिष्यदिवाकरकृतटीकया स० ख० | १० | ० |
| ब्रह्मसूत्रदीपिका श्रीमच्छङ्करानन्दभगवद्भिर्विरचिता खण्डे २ | २ | ० |
| दैवज्ञकामधेनुः अर्थात् प्राचीनज्योतिषग्रन्थः खण्डानि ३ | ३ | ० |
| श्रीमदणुभाष्यम्। श्रीश्रीवल्लभाचार्यविरचितम्। गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितभाष्यप्रकाशाख्य-व्याख्या समेतम् खण्डानि १५ | १५ | ० |
| तत्त्वशेखरः। श्रीभगवल्लोकाचार्यप्रणीतः। तथा—तत्त्वत्रयचुलुकसंग्रहः। कुमारवेदान्ताचार्यश्रीमद्वरदगुरुविरचितः। | १ | ० |
| श्रीभाष्यवार्तिकम्। श्रीमद्रामानुजाचार्यविशिष्टाद्वैतसिद्धान्तप्रतिपादनपरम्। | १ | ० |
| गूढार्थदीपिका। श्रीमद्भागवतदशमस्कन्धस्थरासपञ्चाध्यायी-व्याख्या। | १ | ० |

ब्रजभूषण दास और कम्पनी
चांदनीचौक के उत्तर नई सड़क बनारस सिटी



BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

G. THIBAUT, PH. D.

*No. 142.*

श्रीमद्भागवतदशमस्कन्धस्थरासपञ्चाध्यायीव्याख्या।

# गूढार्थदीपिका।

पण्डितवर—श्रीधनपतिसूरिकृता।

श्रीमदाचार्यश्रीवल्लभाधीश्वर—श्रीविठ्ठलनाथदीक्षितशुद्धाद्वैत-
संप्रदायविदुषा रत्नगोपालभट्टेन परिशोधिता।

# GÛDHÂRTHADÎPIKÂ,

A Commentary on Râsa Panchâdhaâyî
of the Tenth Chapter of Śrîmad Bhâgawata,

BY PANDIT DHANAPATI SÛRI

EDITED BY RATNA GOPÂL BHAṬṬA.

*Fasciculus II.*

BENARES:
*Published by the Proprietors Messrs. Braj B. Das & Co.*
AND SOLD BY H. D. GUPTA,
*Secretary, Chowkhamba Sanskrit Book-Depot.*

Printed at the Vidyâ Vilâs Press.
BENARES.

1908.

## सूचीपत्रम् ।

| | रु० | आ० | पा० |
|---|---|---|---|
| गणपाठः | ० | ४ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ० |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( शिला -) ) | ० | २ | ० |
| धातुरूपावली | ० | १ | ६ |
| परिभाषापाठः | ० | ० | ६ |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ८ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ७ | ० | ० |
| मुहूर्तमार्तण्डः | ० | ८ | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लघुकौमुदीभाषाटीका (पं० मथुराप्रसादमिश्र कृत) ( टिप्पणीसहित ) | ४ | ० | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| विष्णु सहस्रनाम | ० | १ | ० |
| व्याकरणकौमुदी (उपक्रमणिका का दूसरा भाग ) | १ | ० | ० |
| शब्दरूपावली | ० | ० | ९ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| सिद्धान्तकौमुदी ( पं० वामनाचार्येण संशोधिता ) | २ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | २ | ८ | ० |
| उपसर्गवृत्ति | ० | १ | ० |
| क्षेत्रकौमुदी | ० | ६ | ० |
| क्षेत्रसंहिता | १ | ० | ० |

अस्माक्षम स्पृष्टवत्यस्ततःप्रभृति अन्यस्य समक्षे स्थातुमपि न पारयामः शक्नुमः । इतः परं तत्समक्षे स्थितिः कोटिनरकखेदादप्यऽधिकखेदं करोतीति सूचनाय वतेत्युक्तम् । किञ्च, नैतावन्मात्रम्, अपि तु त्वयाभिरमिता बालभावमारभ्य त्वया सार्द्धं त्वत्प्रसादात् क्रीडामपि लब्धवत्यः। अम्बुजमन्तःकरणकमलमश्नुते व्याप्नोतीत्यम्बुजाक्षः । तथाचान्तःकरणवृत्तिज्ञस्त्वं सर्वं जानन्नपि किमेवमाग्रहं करोषीति सम्बोधनाशयः । स्वस्य भगवत्पादतलस्पर्शयोग्यतामपि सूचयन्ति ॥ क्वचिदरण्यजनाः प्रिया यस्य । तथाच वयमप्यरण्यजनत्वात् क्वचिदस्प्राक्ष्मेति भावः । इतः परमन्यत्र क्वापि स्थातुमशक्ता इत्यत्र हेतुमाहुः ॥ रमाया लक्ष्म्या दत्तोत्सवं दत्तावसरं वा । तदपि क्वचिदेव, न सर्वदा । तथाच रमाया अपि यत् प्रार्थ्यं दुर्लभं चेदं पादतलं स्पृष्ट्वाऽन्यसमक्षे स्थातुमस्माकं का शक्तिरिति भावः । यद्वा, हे अम्बुजाक्ष दृष्ट्यैव तापनिवारक, यथा लक्ष्म्या चाञ्चल्यं विहायैतत्प्राप्तं तथाऽस्माभिरपि सर्वतश्चाञ्चल्यं परित्यज्य तत्प्राप्तये तदेकनिष्ठतैव संपादनीयेत्याशयेनाहुः ॥ रमाया इति ॥ किञ्च, अरण्यजनप्रियस्य सर्वसङ्गविनिर्मुक्तेषु वने स्थित्वा तवाराधनपरेष्वेव तव प्रीतिदर्शनात् तत्प्रीत्यर्थं तत्साम्यमेवास्माकमपि संपादनीयमित्याशयः । किञ्च, स्वान्ये सर्वदा त्वयाऽभिरमिता अपि जाताः । अन्यथा जीवनस्यैव दुर्लभत्वात् । तस्माद्वयमन्यत्र गन्तुं प्रेषयितुं च न समुचिता इति भावः ॥ क्वचिदज्ञ इति पाठस्तत्राज्ञः सर्वभावेन स्थातुमित्यर्थः । अनभिज्ञापक्षे, ननु कामाग्नितप्तानां यदि गृहकृत्येषु नास्ति शक्तिस्तथापि कुलाङ्गनानां युष्माकं पतिसन्निधावेव स्थातुमुचितमतः स्वपतीनेवोपगच्छत, त एवैनं कामाग्निमपि सिञ्चेयुरिति चेत्तत्राहुः ॥ यर्हीति ॥ हे अम्बुजाक्ष ? तव नेत्रकमलदर्शनक्षणमारभ्यैव वयं भ्रमरीभूय स्थिताः

स्मेत्युत्पन्नचक्षूरागेण लब्धचित्तासङ्गादिकाः किमेवं ब्रवीषि। चक्षूरागः प्रथमं चित्तासङ्गस्ततोऽथ संकल्प * इति रसशास्त्रं किं न जानासीति भावः। तत्राऽपि यर्हि अस्मद्भाग्योदयक्षणे कदाचिदेव क्वचिदपि दुर्लभे गोवर्द्धनादिकुञ्जप्रदेशे त्वया अभिरमिता निजभावव्यञ्जनया भिनन्दितस्त्यस्तव पादमूलमस्प्राक्ष्म करेण संवाहनाऽऽद्यर्थं कुचाभ्यां वा स्पृष्टवत्यो, यतो रमायाः, जातावेकवचनं, रमणीनां दत्तोत्सवम्। यद्वा, यद्वाञ्छया श्रीर्ललनाऽऽचरत्तप * इति नागपत्नीनां मुखाच्छ्रुतत्वाद् रमाया वैकुण्ठवासिन्या लक्ष्म्या नारायणप्रियाया अपि रमणाभिकाङ्क्षिण्या उत्सवदायकम्। तथास्माकं तदभिलापे, किं चित्रमिति भावः। स्वस्य योग्यत्वेन दुर्लभत्वमाशङ्क्याहुः॥ अरण्यजना गोपादय एव प्रिया यस्य । यद्वा, रमणीनामुत्सवजनकस्य कादाचित्कत्ववर्णनमसङ्गतमित्याशङ्क्याहुः॥ अरण्यजनाः पुलिन्द्यः प्रिया यस्य । तथाच पुलिन्द्यादिषु दर्शनादिना प्रीतिजनकस्य पादतलस्पर्शोऽस्माकं दुर्लभ इति भावः। अहो रमण अस्मान् विहाय तादृशानां प्रीतिं प्रयच्छसीत्युपालम्भोऽपि व्यज्यते। तत्प्रभृति अन्यदर्शनमपि न रोचते । तथाच कोऽप्युच्चाटनमन्त्ररूपस्तत्र पादतलमात्रस्पर्श एवेति भावः । अञ्ज इति पाठे, ननु भो मिथ्यावादिन्यो व्रजं वसथैवेति चेद् तत्राहुः ॥ अञ्जः = अनायासेन, तथाच तत्र बलाद् वसामो, न तु प्रीत्येति भावः ॥ मानिनीपक्षे, नन्वङ्गस्पर्शादिना कामाग्निमुद्दीपयित्वा संप्रत्येवं वक्तुं प्रवृत्ता इत्याशङ्क्याहुः ॥ यर्हीति ॥ बाल्ये त्वदङ्गस्पर्शः कदाचित् कृतः स्यात्, परन्तु यत्प्रभृति तव पादतलं रमणीनां दत्तक्षणं जातं तत्प्रभृति कथञ्चिदपि कदाचिदपि नाऽस्प्राक्ष्म। यतो वाऽरण्यजनप्रियस्य वानरादिप्रियस्य सतः, त्वया कथादिना अभिरमिता अपि। अत एवान्येषां श्वश्रूप्रमुखानां समक्षं स्थातुं पारयाम । अन्यथा

तैर्द्विष्येमहीति भावः । अम्बुजवद्विशालनेत्रस्यास्मत्स्वभावं पश्यतो नैवं प्रार्थनमुचितमिति संबोधनाशयः । यद्वा, यदि तव पादतलं वयमस्प्राक्ष्म तर्हि तत्प्रभृति अन्यसमक्षं स्थातुमपि न पारयाम । वतेति खेदे । तथा सति महान् खेदः स्यादिति भावः। न तु तथा जातमतो महत् कुशलमित्यर्थः । पादतलस्पर्शमात्रस्य यदा इयं कथा तदा त्वयाऽभिरमितानां जायमानस्तु खेदो वाचामप्यगोचर इत्यभिप्रायेण त्वयाभिरमिता इत्युक्तम् । ननु मदङ्गस्पर्शवतीनां मयाभिरमितानां प्रतिदिनमानन्दास्वादनपराणां तत्समक्षावस्थाने किं प्रयोजनमित्याशङ्कानिवृत्त्यर्थमुक्तं, रमाया दत्तक्षणम् । तथाचैवंविधपादस्य तवगर्वावश्यम्भावादखर्वगर्ववतीभिरस्माभिः सङ्गतः स्थायित्वासम्भवात् तादृशस्य सुखस्य तथाविधदुःखकारणत्वसम्भवान्मैवमिति भावः । तत्राप्यरण्यजनप्रियस्य रमणविरोधिभाववत्तस्तथाचोभयभ्रष्टत्वसम्पादकं तव पादतलस्पर्शादिकमिति भावः ॥

निवृत्तिपक्षे, ननु मया सिक्तोऽपि यथोक्तवादिकल्पितदुस्तर्कैर्निर्वापणं यास्यतीति चेत् तत्राहुः ॥ यर्हीति ॥ हे अम्बुजाक्ष सर्वहृत्कमलव्याप्त ! यदा तव प्रसादोदयकाले प्राप्तसाधनसम्पदाधिकारिणा विचारिता वयं तव पादतलमस्प्राक्ष्म तत्प्रभृति नान्यसमक्षं स्थातुमपि पारयाम । ब्रह्मातिरिक्तं किमपि पारमार्थिकं न प्रतिपादयामः । आपाततोऽर्थान्तरप्रतीतावपि अन्तस्तात्पर्येणान्यपरत्वं नास्तीत्यर्थः । तत्रापि त्वया परमात्मना अभिरमिता त्वय्येव समन्वयं प्राप्ताः । ननु तथापि, यतो वा इमानि भूतानि जायन्त इत्यादिश्रुतीनां सविशेषपरत्वमेवावसीयते । निर्विशेषस्य निर्व्यापारस्य जगत्कर्तृत्वाद्यसम्भवादित्याशङ्कानिरासायोक्तं—क्वचिद्रमाया आपातरम्याया महामायाया दत्तक्षणं, न तु सर्वत्र सर्वदा च । तथा शाखाग्रन्यायेन तासां सविशेषे वा, निर्विशेष एव

तात्पर्यम् । यश्चोरः स स्थाणुरितिवद् यो जगत्कर्तृत्वादिविशिष्टः स निर्विशेषः परमात्मेति जगत्कर्तृत्वादेर्निर्विशेषब्रह्मलक्षणकत्वे नास्ति कश्चिद्विरोधः। दृग्दृश्यसम्बन्धानिरूपणान्मायासम्बन्धो ब्रह्मणि न वास्तव इति भावः । ननु श्रुतवेदान्तानामपि यथापूर्वसंसारानुवृत्तिदर्शनात् कथमुच्यते पुनरन्यपरत्वमस्माकं नास्तीत्याशङ्कानिवृत्त्यर्थमुक्तम्—अरण्यजनाप्रियस्य ॥ तथाच विवेकवैराग्यादिसाधनविधुरत्वच्चरणारविन्दानभिमुखस्येयं कथा, न तु सर्वसाधनसंपदलंकृतस्येति भावः ॥ ३६ ॥

ननु रमाया दत्तक्षणमित्युक्त्या, तद्वद् अस्मानप्यङ्गीकुर्विति भवतीभिः सूचितम् । परन्तु लक्ष्म्या दैवगत्या जातो यः सम्बन्धः स तु प्राथमिको, भवतीनां तु न तथेत्यतः किं करोमीतिचेत् तत्राहुः ॥

श्रीर्यत्पदाम्बुजरजश्चकमे तुलस्या
लब्ध्वापि वक्षसि पदं किलभृत्यजुष्टम् ॥
यस्याः स्ववीक्षणकृतेऽन्यसुरप्रयास-
स्तद्वद्वयं च तत्रपादरजः प्रपन्नाः ॥ ३७ ॥

श्रीरिति ॥ श्रीर्यथा यत्पादाम्बुजरजश्चकमे कामयते स्म, तद्वद्वयमपि तव पादरजः प्रपन्नाः । तथाच श्रीरपि न दैवगत्या भवन्तं प्राप्तवती, किन्तु महता तपसेति भावः । तत्रापि तुलस्या सपत्न्या सह । न चाङ्गसङ्गालाभात् सापत्न्यमप्यङ्गीचकार, अपि तु भक्त्यतिशयादेवेत्याशयेनाहुः ॥ वक्षसि पदं लब्ध्वाऽपि तुलस्या एवासाधारणमिति वा । तथाच परमोत्कृष्टस्वतन्त्रस्थलं प्राप्यापि तादृशं रजो यच्चकमे तद्भक्त्यतिरेकविजृम्भितमिति भावः । ननु

कुत एवमित्याशङ्क्य रजसो माहात्म्यमाहुः ॥ भृशैर्नारदादिभिः स-र्वैरपि तदेवानन्यतया सेवितम् ॥ किलेति प्रसिद्धम् । नाऽत्र कि-चिद्वक्तव्यम् । रज एवैवंविधसामर्थ्यं, यत् तत्र संलग्नचेतसः पुन-रन्यत्र गमनासम्भवसम्पादनं, नान्यस्यातो लक्ष्मीर्वक्षसि पदं ल-ब्ध्वापि कदापि चेतसोऽन्यत्र प्रवृत्तिर्न भवेन्नाप्यन्यस्य कस्यापि स्पर्श इति मनसि निधाय यद्रजश्चकम इति भावः । ननु लक्ष्म्याः कुत एतावद्भयमित्यत आहुः ॥ यस्या लक्ष्म्याः स्वस्य वीक्षणकृते श्रीरस्मान् करुणया पश्यत्वित्येतदर्थमन्येषां सुराणां ब्रह्मादीनां प्रयासः । सर्वपुरुषार्थानां तदधीनत्वात् । तथाच बहवो मां प्रार्थ-यन्ते । कश्चित् कदाचिदत्यन्तं यदि तपः कुर्यात् तर्हि स को वेद किं कुर्यादिति विचारवशात्तस्यास्तावद् भयमिति भावः । तद्वद् वयमपि प्रार्थनावतां बहुत्वमालोक्य तद्भयात् प्रथममेव तव पाद-रजः प्रपन्नाः । तस्मादस्मदर्थमेवावतीर्णो भवानात्मानं न गोपय गोपनाऽसम्भवादतो माऽस्त्वाग्रह इति भावः । यद्वा, तव पादस्पर्श-स्य को वा तादृशो महिमेति चेत् तत्राहुः ॥ श्रीरिति ॥ यद्वा, ननु चरणस्पर्शादेव भवत्यः कृतार्थाः किमर्थमङ्गसङ्गार्थं विकलचित्ताः। किञ्चाङ्गसङ्गमवाप्य पुनश्चरणस्पर्शो भक्तिर्न भविष्यति । नचैवं का हानिरिति भ्रमितव्यम् । तस्या एव परमपुरुषार्थत्वादित्या-शङ्क्याहुः ॥ श्रीरिति ॥ तथाच भगवत्पादरज एव तथाविधं यथा वक्षःस्थलनिवासिनी श्रीरपि तदेव चकमे। परमभक्तायास्तुलस्याश्च तदेवाऽसाधारणं स्वाश्रयैश्च सर्वैर्भृत्यैस्तदेव जुष्टम् । तस्मात् तत्प्र-तिबन्धकमङ्गसङ्गाभिलाषं निवर्त्य तदेकशरणत्वमेवाश्रयिष्याम इति भावः ॥ अनभिज्ञापक्षे, ननु सौन्दर्य्यादिगुणसम्पन्नाः शोभन-कुलोत्पन्ना महिषीपदयोग्याः किमेवं ब्रूयेत्याशङ्क्य महिषीपदापेक्ष-येदमुत्कृष्टमिति लक्ष्मीदृष्टान्तेन समाधानमाहुः ॥ श्रीरिति ॥ यद्

यस्माल्लक्ष्मीर्नारायणस्य पदाम्बुजरजो यथा चकमे तद्वद्वयं नारायणसदृशस्य तव पादरजः प्रपन्नाः । यद् यस्य नारायणस्य तद्वत् तत्तुल्यस्य तवेति वा । नारायणसमो गुणैरिति * गर्गोक्त्या तव नारायणसमत्वेऽस्माकं लक्ष्मीसमत्वमर्थादागतमिति भावः । तत्रापि वक्षसि परमोत्कृष्टस्थले पदं रमणीभावं लब्ध्वाऽपि तुलस्याः सपत्न्याः पदमपि भृत्यैर्जुष्टं पुरुषजनसमुदाययुक्तमपि । तथाच तस्या यथा प्रेयसीभावसमुचितां लज्जां स्वन्यूनतां चाविगणय्य दासीभावोऽभिलषितस्तथैवास्माकमपि । यद्यप्येवं न, तथापि त्वं नारायणवन्नाचरसि, वक्षःस्थलोद्वहनयोग्या अस्मान् स्वपादतलसन्निधौ स्थातुमपि न ददास्यतो दग्धललाटा वयं किं कुर्म इति भावः। ननु लक्ष्मीवत्त्वमपि युष्मासु प्राप्तमित्याशङ्क्याह ॥ यस्या इति ॥ तथाच या पुत्रतुल्यान् सुरादीनपि ययाकयाचिच्छक्त्याऽनुगृह्णाति सा चञ्चलेति मूर्खप्रवाद इति भावः । श्रीः पदाऽम्बुजरजश्चकमे, वयं तु पादरज इत्युक्त्या श्रियः स्ववासस्थानोपमसादृश्योपाधिकसेवनमस्माकं तु निरुपाधिकमिति व्यज्यते । यद्वा, ननु स्वस्वपतिवक्षःस्थलरमणयोग्याः कथं दासीभावं प्रार्थयन्ते ? इत्याशङ्क्य, यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन * इति न्यायमवलम्ब्य समाधानमाहुः ॥ श्रीरिति ॥ स्वभर्तुर्नारायणस्य वक्षसि पदं लब्ध्वापि लब्धनारायणपादसम्बन्धया तुलस्या सह, यस्य तच्च वृन्दावनसम्बन्धि पदाम्बुजरजश्चकमे । तत्सेवनाऽर्थं वृन्दावनशोभारूपेण प्रेयोवक्षसि रेखारूपेण श्रीरत्रास्ते । तुलस्यपि वृन्दाख्यदेवीरूपेण वृन्दारूपेण चाऽऽस्ते इति भावः । तस्मात् परमपतिव्रताया लक्ष्म्या यदैवं दशा तदानीं वयं कथं, भर्तुः शुश्रूषणमित्याद्युपदेशार्हा इत्यपि ध्वनितम् ॥ मानिनीपक्षे, ननु श्रीवृन्दे अपि स्वपतिं त्यक्त्वाऽत्र वने मम सन्निधौ तिष्ठतः, यूयं किमित्येवंविधं

मानं कर्तुं प्रवृत्ता इति चेत् तत्राहुः ॥ यद्यपि श्रीर्वृन्दया सहाऽत्र स्थितं ते पादरजश्चकमे तद्वद्वयं किं पादरजः प्रपन्नाः !! अपि तु नेति काक्वा योज्यम् । तयोरेव तद्युक्तं नास्माकमिति भावः । यद्वा, यस्य नारायणस्य पदाम्बुजरजः श्रीश्चकमे, तद्वद्वयं = तेन नारायणेन तुल्या वयम्, अत एव तादृशलक्ष्म्यादिप्रार्थनीयं पादरजः सम्पन्नास्तत्र लक्ष्म्यादिसदृशस्य तुल्या आराधनीया इति भावः ॥

निवृत्तिपक्षे लक्ष्म्यादिवत् स्वस्य भगवत्परायणत्वमाहुः ॥ श्रीरिति ॥ तथाच ब्रह्मादिसमस्ताराध्यपादपद्मे समस्तश्रुतितात्पर्य्यविषये परमात्मनि सर्वभावेन रतिः सम्पाद्येति भावः ॥ ३७ ॥

तथाच भगवदेकभोग्यशरीराणामस्माकं मनोरथं पूरयेति पश्चिमदिग्गताः प्रार्थयन्ते ॥

तन्नः प्रसीद वृजिनार्दन तेऽङ्घ्रिमूलं
प्राप्ता विसृज्य वसतीस्त्वदुपासनाऽऽशाः ॥
त्वत्सुन्दरस्मितनिरीक्षणतीव्रकाम-
तप्तात्मनां पुरुषभूषण ! देहि दास्यम् ॥ ३८ ॥

तन्न इति ।। यस्माद्वयं भवत्पादरज एव प्रपन्नाः । प्रपत्तिश्च भवत्प्रसादं विना दुर्लभा । तस्मात् प्रसीद प्रसन्नो भव । त्वयि प्रसन्ने किमपि नावशिष्यत इति भावः । ननु दुःखप्रदं मत्सङ्गमप्रतिबन्धकं दुरदृष्टं भवतीनां वर्तते। तत्र मया किं कर्तव्यमिति चेत् तत्राहुः ॥ हे वृजिनार्दन ॥ सकलदुःखनिदानभूतदुरितविनाशन स्मरणादिनापि समस्तपापतृणदावानलस्य तत्राभिमुख्यं प्राप्तानामस्माकं पापनिवारणे को भार इति भावः।एतेन स्वपत्यादित्याग-

कृतमपि पापं नाशयेति सूचितम् । सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज * अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः * तावद्रागादयः स्तेनास्तावत् कारागृहं गृहम् * तावन्मोहोऽङ्घ्रिनिगडो यावत् कृष्ण न ते जनाः * इत्यादिशास्त्रात् । अथ स्वस्य प्रसादादियोग्यतामाहुः ॥ तेऽङ्घ्रिमूलं प्राप्ता इति ॥ ननु स्त्रीणां स्वभावः—ईश्वरादपि प्रसन्नाद् गृहस्थाश्रमसुखमेव प्रार्थयन्ति । ततस्तदनुकूलः किं प्रसादोऽपेक्षित इतिचेत् तत्राहुः ॥ वसतीर्विसृज्येति ॥ गृहस्थाश्रम एवास्माभिस्त्यक्तो, न तु गृहमात्रमिति सूचनाय वसतीरिति बहुवचनम् । यतो वयं, त्वदुपासनाऽऽशाः भगवदुपासनां करिष्याम इत्येवंविधा आशा यासां ताः । न तु तज्जन्यं सुखमस्माकमपेक्षितम् । तथाच गन्धपुष्पादिनोपासनपराणामनन्यभक्तानामिवावर्जनीयतया प्राप्ते सुखोपभोगे न कश्चिद्दोष इति भावः । यद्वा, तवोपासस्योपासनस्य नाशो यासु ता वसतीः । तथाचाभीप्सितानुकूल एव प्रसादो युक्तो, न तु तत्प्रतिकूलः । तस्मादितः परं गृहसम्बन्धिवार्ताऽपि न विधेया । तत्र प्रेषणं तु दूरनिरस्तमिति भावः । एवं भगवन्तमभिमुखीकृत्य प्रार्थ्यमावेदयन्ति ॥ त्वदिति ॥ हे पुरुषभूषण दास्यं देहि । अधिकारिभेदेन दास्यस्यानेकविधत्वात् तद्रूपं स्वतापोक्त्याऽभिव्यञ्जयन्ति— तव सुन्दरं परमानन्दजनकं यत् स्मितपूर्वकं निरीक्षणं तेन तीव्रो यः कामस्तेन तप्तान्तःकरणानामस्माकम् । तथाचैतत्तापनिवर्तकदास्यं देहीति भावः । दास्यस्य स्वव्यापारसाध्यस्य, देहीति प्रार्थनया यथोक्ततापनिवृत्तेस्तद्द्वारत्वात् तस्याश्च त्वदधीनत्वाद् यथाऽस्माकं तन्निवृत्त्यर्थं त्वदपेक्षा तथा तवास्मदपेक्षायां स्वयमुद्यम्यास्मदुपभोगः कार्यः । प्रभुणा ह्यपेक्षितवस्तुनि दत्ते दास्यं भवतीति भावः । ननु किमिदं कामोपाधिकं दास्यं प्रार्थ्यते, शुद्धमेव तव प्रार्थ्यतामिति

चेत् तत्राहुः ॥ पुरुषभूषणेति ॥ पुरुषो भूत्वा भूषणरूप ! तथाच भूषणं यथा कण्ठादौ धार्य्यते तथा पुरुषाकारभूषणरूपस्त्वमपि धारणयोग्यस्तस्मान्मणिखचितभूषणधारणे लाक्षाधारणवन्मध्ये कामोपभोगो, न तु तदुपाधिकृतं दास्यमिति भावः । यद्वा, तत् तस्मान्नः प्रसीद । हे वृजिनार्दन ! स्वप्राप्तिप्रतिबन्धकं पापं नाशय । यतः ॥ प्राप्ता विसृज्य वसतीरिति ॥ तस्मात् तव सुन्दरस्मितस्य नितरामीक्षणेन चिन्तनेन तीव्रो भजनाभिलाषस्तेन तप्तात्मनां तपःसपन्नचित्तानां दास्ये लब्धाधिकाराणामस्माकं लक्ष्म्या इवाऽस्मद्योग्यं दास्यं देहि । यतो हे पुरुषेषु भूषण! तवापीदमेव योग्यम् । अस्माकं च कामोपाधिकृतोऽपि तव सम्बन्धोऽलङ्कारायैवेति भावः ॥ अनभिज्ञापक्षे, नारायणसमो गुणैरित्युक्तत्वात् त्वं नारायणगुणधारणे योग्यो, वयं च तद्भक्तगुणधारण इत्याशयेनाहुः ॥ तदिति ॥ यस्मात् त्वं नारायणसमस्तस्मान्नस्तद्भक्ततुल्या अस्मान् प्रसीद । ननु प्रसन्न एवाहमस्मि, स्वस्मिन्मम कोपो भवतीभिः कदा दृष्ट इति चेत्, तत्राहुः ॥ हे वृजिनार्दन, दुःखविध्वंसकर । ननु नाऽस्ति भवतीनां किमपि दुःखम् । गृहाद्युपद्रवजनितदुःखहेत्वऽसुरादिविनाशाय ममोद्युक्तत्वात् । तस्मात् किमित्येवं दैन्यमाविष्कुरुतेति चेत्तत्राहुः ॥ त इति ॥ तथाच गृहादिकं महाग्निज्वालया प्रज्वलतु, तिष्ठतु वा । नाऽस्ति अस्माकं तत्प्रयुक्तं किमपि दुःखं, सुखं वेति भावः । ननु भवत्वेवं, यदर्थं वसतीर्विसृज्य मदङ्घ्रिमूलं प्राप्तास्तादेव याच्यतामिति चेत् तत्राहुः ॥ त्वदुपासनाऽऽशाः ॥ तवोपासनायां सेवायां श्लेषेण, उप आसङ्गेन स्थितिरूपा आशा यासां, नतूपासनया दास्यमाने कस्मिँश्चित्सुखे ताः । त्वत्सुखार्थमङ्गसङ्गदानादिरूपोपासनापराणामस्माकमप्यवर्ज्जनीयतया प्राप्तेन सुखोपभोगेन, को दोषः इति भावः । ननु तादृशमुपासनं तु स्वपतेरेव

संभवति। न चाऽहं युष्माकं पतिः। नन्वस्तु संप्रति विवाह इति चेन्न। उपनयनरहितस्य मम सम्प्रति विहानधिकारात्। विवाहितानां भवतीनामपि तद्योगाच्चेत्याशङ्क्याहुः ॥ त्वदिति ॥ तादृशकामतप्तात्मनामप्यस्माकं दास्यं दासीभावमेव देहि। तथाच न वयं विवाहार्थिन्यः, किन्तु दास्यार्थिन्य एवाऽतस्तवोपनयनादिरहितत्वेऽस्माकं च कन्यात्वे परोढत्वे वा न काऽपि हानिः। सर्वथाऽपि दास्यसम्भवादिति भावः। यद्वा, हे व्रजिनार्दन! अस्माकं विरहदुःखदानमनुचितमिति भावः। न चाऽस्त्यस्मद्दुःखनाशे कश्चन तव प्रयास इत्याशयेन सम्बोधयन्ति ॥ हे सुन्दरस्मितनिरीक्षण ॥ एतावतैवास्मद्दुःखनिवृत्तिरिति भावः। यतस्त्वत्त त्वत्त एव यस्तीव्रः कामस्तेन तप्तात्मनाम्। अतस्तत्तापनिवृत्त्यर्थं विकसितमुखपङ्कजो भूत्वा दास्यमात्रं देहि, न तु बहु प्रार्थयाम, यद्भयादेवं स्वरूपमात्मानं कृतवानसीति भावः। किञ्च, काममहोदधिभूतत्वादेव स्त्रीलम्पटस्य तवास्माभिर्युवतिभिः स्वाङ्गैरुपासनं सुखजनकमतस्तत्सेवनप्रार्थनाऽपि त्वदर्थमेवेत्याशयेन सम्बोधयन्ति ॥ हे पुरुषभूषण ॥ यद्वा गौराङ्गीनामस्माकमलङ्कारार्थं पुरुषाकारमिन्द्रनीलमणिमयं भूषणं विधात्रा रचितम्। तस्मात् स्वोत्पत्तिसार्थक्यायाऽस्मत्कण्ठसंलग्नता त्वयाऽवश्यं सम्पाद्येति नर्म व्यञ्जयन्ति ॥ हे पुरुषभूषणेति ॥ मानिनीपक्षे, ननु लोकोत्तरपरमसौन्दर्य्याकृष्टचेतसः स्त्रियो मद्दास्यं प्रार्थयन्ति। भवत्यस्तु स्वामित्वमपि मत्प्रार्थनयापि नैवाङ्गीकुरुथेति महानन्याय इत्याशङ्क्याहुः ॥ तदिति ॥ तत् तस्मान्नः प्रसीद। अहंग्रहमसुमर्थं च त्यज। हे वृजिनार्दन। सर्वदुःखच्छेदकस्यापि दुःखानुच्छेदनमनुचितमिति भावः। यद्वा, वृजिनार्दनस्य तव स्वदुःखानिवारणमनुचितमिति भावः। यद्वा वृजिनं दुःखमर्दयति प्रार्थयतीति। तथाच दुःखोदर्कं वस्तु न प्रा-

ऽर्थनीयमिति भावः। यतो निरपेक्षाऽपेक्षा केवलं दुःखायैव भवतीत्याशयेनाहुः ॥ नेति॥वसतीर्विसृज्य त्वदुपासनाऽऽशा वयं तवाङ्घ्रिमूलं न प्राप्ताः। तस्मात् त्वत्सुन्दरस्मितनिरीक्षणतप्तात्मनामेव दास्यं देहि, न त्वस्माकं स्वामिनीभावमप्रार्थितत्वात् । न ह्यप्रार्थितमनुत्तममपि वस्तु कस्याचिदुपादेयं भवतीति भावः । पुरुषानेव भूषयति । तथाच त्वत्कामसन्तप्तचित्तो यदि जातोऽसि तर्हि गोपवंधूरूपेण गोपान् भूषयेति भावः । यद्वा, शरीरमात्रमस्माकं तव सविधे वर्तते, मनस्तु स्वस्वगृहमेव प्रविष्टम् । अत एवाग्रहेणात्रावस्थाने कृतेऽपि नास्ति किञ्चित्फलमित्याहुः ॥ तदिति ॥ तत् तस्मादितः परमस्मासु प्रसाद एव विधेयो, न तु वृथाग्रहः । न चेदं तवोचितं, स्वपरदुःखजनकत्वादस्य कर्मण इत्याशयेन सम्बोधयन्ति ॥ हे वृजिनार्दनेति ॥ मत्सन्निधावेता स्थिता इति न भ्रमितव्यम् । वयं तु तेऽङ्घ्रिमूलं विसृज्य, वसतीः प्राप्ताः। नन्वतच्चित्तानां त्वदुपासनं सम्भवति । यतस्त्वदुपासस्य समीपावस्थानादिरूपोपासनस्य नाशो यास्तु । अतः स्वाभाविकास्मत्सुन्दरस्मितादिना तीव्रकामाक्रान्तता तव नोचितेति सूचयन्त्यः सम्बोधयन्ति ॥ हे सुन्दरस्मितनिरीक्षणतीव्रकाम ॥ नेदं पुरुषरत्नानां लक्षणमपि तु पुरुषापसदनामतः पुरुषभूषणस्य तव नेदमुचितमिति भावेन सम्बोधयन्ति ॥ हे पुरुषभूषणेति ॥ तस्मात् पुरुषभूषणस्य तव त्वदर्थं तप्तात्मनामपि स्त्रीणां स्त्रीभावदानमयोग्यम् । किञ्चिद्दानावश्यकत्वे दास्यमात्रं दातुमुचितमित्याशयेनाहुः ॥ त्वत् त्वद्वियोगात् तप्तात्मनामपि दास्यमात्रं देहि । सर्वथा विमुखाभिस्तु भाषणमपि तव नोचितमित्यर्थः ॥

निवृत्तिपक्षे, अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य

यथा कप्यासं पुण्डरीकमेवमक्षिणी, तस्योदिति नाम, स एष सर्वे-भ्यः पाप्मभ्य उदित, उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदे त्याद्याः श्रुतयः परमात्मानमेवोपास्यमावेदयन्ति ॥

तदिति ॥ यस्मात् सर्वश्रुतितात्पर्य्यविषयो भवानेव तस्माद् उपासनापरा अस्मानपि प्रसीद । अस्मत्तात्पर्य्यविषयत्वमात्मनः स्वीकुरु। यतो हे वृजिनार्दन ! सर्वपापासंस्पर्श ! निर्विशेष-त्वात् तथात्वेनोपासितस्त्वमुपासकस्य दुःखमात्रवीजभूतं पापमात्रं नाशयसि। स एष सर्वेभ्यः पाप्मभ्य उदित इति सर्वपाप्मापगम उक्तः।स च परमात्मन एव सम्भवति । आत्माऽपहतपाप्मेत्यादि-श्रुत्यन्तरात्। उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदेति तदु-पासनात् सर्वपापनिवृत्तिः कथितेति भावः। ननु हिरण्यश्मश्रुरि-त्यादिरूपश्रवणाद, य एषोऽन्तरादित्ये पुरुष इत्याधारश्रवणाच्च कथं रूपादिप्रतिपादनपराणां श्रुतीनां परमात्मपरत्वमऽशब्दमस्प-र्शमरूपमव्ययं, स भगवः कस्मिन् प्रतिष्ठतः स्वे महिम्नि, आकाश-वत् सर्वगतश्च नित्य इत्यादिश्रुत्या रूपादिराहितब्रह्मस्वरूपावगमा-दित्याशङ्क्याहुः॥ तं इति॥ वसतीरापाततः प्रतीयमानपरमेश्वरा-तिरिक्तप्रतिपाद्यरूपा विसृज्य तेऽङ्घ्रिमूलं प्राप्ता, यतस्त्वदुपासना-याम् आशा आशयो यासां ता वयम्।तथाच परमेश्वरस्यापीच्छा-वशात् साधकानुग्रहार्थं मायामयरूपादिस्वीकारो न विरुद्ध्यते। प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया * माया ह्येषा मया सृष्टा यन्मां पश्यति नारद * सर्वभूतगुणैर्युक्तं न मां पश्यन्ति सूरय इत्यादिस्मृतेः । अशब्दमित्यादिशास्त्रं निरस्तसर्वविशेषज्ञेय-ब्रह्मपरम् । सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः हिरण्यश्मश्रुरि-त्यादिशास्त्रमुपास्यब्रह्मपरम् ।तथा स्वमहिमप्रतिष्ठस्याधारविशेषोप-देशोऽप्युपासनार्थो न विरुद्ध्यत इति भावः । तस्मादनुग्रहाऽर्थं

प्रकटितलावण्यसागरविग्रहस्य तव सुन्दरस्मितस्य निरीक्षणे यो तीव्रकामोऽभिलाषस्तेन तप्तात्मनां जीवानां, हे पुरुषोत्तम दास्यं देहि । त्वदनुग्रहं विना तव दास्यस्य दुर्लभत्वात् । तेन त्रिनोद्धाराऽसम्भवात् । तत्प्रदानेन जीवानुद्धरेति भावः । यद्वा, तव सुन्दरं यत् स्मितं चराचरात्मकं निरीक्षणं भूतात्मकं च जगत् तत्र तीव्रो यः कामस्तेन तप्तात्मनाम् । तथाच तादृशतापनिवृत्त्यर्थं स्वदास्यं देहीत्यर्थः । निःश्वसितमस्य वेदा वीक्षितमेतस्य पञ्च भूतानि * स्मितमेतस्य चराचरमस्य च सुप्तं महाप्रलय इत्यभियुक्तवाक्ये चराचरादेर्भगवत्स्मितादिरूपेण निरूपणं द्रष्टव्यम् ॥ ३८ ॥

ननु यदि निरुपाधिकप्रेमवशो भवत्यस्तर्हि सालोक्यादिफलं प्रार्थ्यतां, किमर्थं दास्यं प्रार्थ्यत इत्याशङ्क्याहुः ॥

वीक्ष्यालकावृतमुखं तव कुण्डलश्रि
गण्डस्थलाधरसुधं हसितावलोकम् ॥
दत्ताऽभयं च भुजदण्डयुगं विलोक्य
वक्षः श्रियैकरमणं च भवाम दास्यः ॥ ३९ ॥

वीक्ष्येति ॥ इदं सर्वं वीक्ष्य दास्य एव भवाम । तत्र सारूप्यं नास्माकमपेक्षितम् । यतोऽलकैः समानरूपैस्तदुपलक्षितैः । समानरूपैर्भ्रमरैश्चावृतं मुखम् । तथाच सारूप्यं गतानामपि या भक्तिरवशिष्यते तदर्थिन्यो वयमिति भावः । तथा सामीप्यापेक्षामपि वारयन्ति ॥ कुण्डलाभ्यां श्रीः शोभा यस्य, तयोःश्रीर्यस्मादिति वा । तथाचाऽत्यन्तसमीपयोस्तत्र प्रमाणभूतसांख्ययोगरूपयोः कुण्डलयोरपि यदा मुखावलोकनपरत्वं तदान्यस्य का कथेति भावः । गण्डौ विशालौ सुधापानार्थं स्थले यस्मिन्, तथा अधरे

सुधा यस्मिन्, गण्डस्थलं च तदधरसुधं च । कुण्डलयोः श्रीर्ययो-स्ते गण्डस्थले यस्मिन्निति वा । एतेन सालोक्यापेक्षा निवारिता । सालोक्यं प्राप्तयोरपि कुण्डलयोर्मुखनिष्ठाधराऽमृतपानाभिलापेण लोलत्वदर्शनात् । किञ्च, हसितपूर्वकमवलोकोऽवलोकनं यस्मिँस्तद्धसितावलोकम् । अनेन सायुज्यापेक्षाऽप्यस्माकं नास्तीत्युक्तम् । यथोक्तमुखावलोकनजन्यानन्दस्य पृथक्स्थितिं विनाऽनुभवासम्भवात् । किञ्चेन्द्रादिपदमप्यस्माकं नापेक्षितमित्याशयेनाह ॥ दत्ताऽभयं च भुजदण्डयुगं विलोक्येति ॥ तथाचासुरादेर्बिभ्यत इन्द्रादेरप्यभयप्रदं लोकपालास्पदम्, अपराधिजनदण्डरूपभुजाद्वयाऽवलोकनपराणामस्माकमिन्द्रादिपदाभिलाषो नोपपद्यते । इन्द्रादीनामपि भुजदण्डयोर्निविष्टत्वादिति भावः । ऐहिकैश्वर्य्यवाञ्छाऽप्यस्माकं नास्तीत्याशयेनाहुः ॥ वक्षः इति ॥ श्रिय एकं मुख्यं रमणं वक्षःस्थलं विलोक्य । चकाराद् धर्मस्यापि संग्रहः । तथाच सर्वतः संप्लुतोदकह्रदवदन्तर्भूतसर्वपुरुषार्थं दास्यमेव प्रार्थयामः । तुलयाम लवेनाऽपि न स्वर्गं नाऽपुनर्भवम् * भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिष इति भगवत्सङ्गिसङ्गस्यापि यदैवं माहात्म्यं तदा साक्षाद्भगवत्सङ्गस्य माहात्म्यं किमु वक्तव्यमिति भावः । एतेन भर्तृत्यागस्य पापरूपत्वं प्रकृते न सम्भवति दुःखरूपफलाजनकत्वात् । भवन्तमवलोक्य लोकद्वयस्यापि त्यक्तत्वाच्चेत्यपि सूचितम् । यच्च, अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम् * जुगुप्सितं च सर्वत्र ह्यौपपत्यं कुलस्त्रिय इति षड्दोषाभिधानं तदपि प्रकृते नोपपन्नम् । भगवतो यथोक्तषड्विधगुणत्वादित्यपि ध्वनितम् । यद्वा, ननु किमवलोक्य दास्यभावः प्रार्थ्यत इत्याशङ्क्याहुः ॥ वीक्ष्येति ॥ श्रियैकरमणमिति मुखस्यापि विशेषणम् । तथाच लोकोत्तरसौन्दर्य्यम् अवलोक्य दास्यो भवाम । ननु दृष्ट्वैव वाञ्छा न विधे-

था । प्रीत्ययोग्यानामापातरम्याणामपि वहूनां पदार्थानां सत्त्वादि-
त्याशङ्कानिरासायोक्तम् ॥ वीक्ष्येति ॥ भगवद्दास्यमेवं सर्वापेक्षयो-
त्कृष्टम् । अत्रैवंविधविग्रहप्रादुर्भावोऽस्माकं दास्यपददानायैव भगव-
ता कृत इति च सम्यग्विचार्य्येत्यर्थः ॥ श्रियैकरमणमित्यनेन सर्वो-
त्तमा चतुरशिरोमणिभूता श्रीर्यत्र सर्वभावेनासक्ता तत्र का वयं वरा-
क्यो दास्येऽप्यनधिकारिण्योऽतः श्रियैकरमणं मुखादिकमवलो-
क्याऽत्र यद्विचारणीयं तल्लक्ष्म्यैव स्वयंवरकाले विचारितमिति
विचार्य्यम् । तदुक्तम् । नूनं तपो यत्र न मन्युनिर्जयो ज्ञानं क्वचित्
तत्र न सङ्गवर्जितम् * कश्चिन्महाँस्तस्य न कामनिर्जयः स ई-
श्वरः किं परतो व्यपाश्रयः * धर्मः क्वचित् तत्र न भूतसौहृदं
त्यागः क्वचित् तत्र न मुक्तिकारणम् * वीर्य्यं न पुंसोऽस्त्य-
जवेगनिष्कृतं न हि द्वितीयो गुणसङ्गवर्जितः * क्वचिच्चिरायु-
र्न हि शीलमङ्गलं क्वचित्तदप्यास्ति न वेद्यमायुषः * यत्रोभयं
कुत्र च सोऽप्यमङ्गलः सुमङ्गलः कश्चन काङ्क्षते हि माम् * एवं
विमृश्याव्यभिचारिसद्गुणैर्वरं निजैकाश्रितसद्गुणाश्रयम् * वव्रे
वरं सर्वगुणैरपेक्षितं रमा मुकुन्दं निरपेक्षमीप्सितमिति । तस्माद-
स्मत्प्रवृत्तिर्नाऽविचारप्रयुक्ताऽतो नोपदेशसहस्रैरपि निरोद्धुं श-
क्येति भावः सूचितः ॥ अनभिज्ञापक्षे, ननु दास्यं देहीति भव-
तीभिरुक्तं, तत्र मूल्यं श्रुत्वा यत् कर्तव्यं तत् करिष्यामीत्याशङ्क्य
लब्धाऽनल्पमूल्या एव वयमतो मास्तु भवतस्तद्दानाचिन्तेत्याशयेनाहुः
वीक्ष्येति ॥ अलकैः ॥ केशप्रान्तभागैः शोणवक्रोष्णीषधारणसमये
तदधोभागे लसद्भिरावृतमनाच्छादितम् । चूडाबन्धनवर्हापीडधारण-
समये कुञ्चितैरनतिदीर्घैरलकैरीषदावृतमाच्छादितम् । अभ्यङ्गोद्वर्तना-
दिसमये आसमन्ताद् वृतमाच्छादितं मुखं वीक्ष्येक्षणाभ्यां सम्य-
गास्वाद्य । अनेन मुखोर्द्ध्वभागशोभोक्ता । तथा कुण्डलयोः समय-

भेदेनाऽलकैरनावृतयोरीषदावृतयोः सम्पूर्णावृतयोश्चपलयोरीष-च्चपलयोरत्यन्तचपलयोश्चालङ्काररमातिविम्बरूपा श्रीर्ययोस्ते गण्डस्थले यस्मिंस्तत् । अनेन पार्श्वयोः शोभोक्ता । अधरे सुधा यस्मिंस्तच्च हसितं मन्दहसितपूर्वकमवलोको यस्मिंस्तद्, हसितं चावलोकश्चेति द्वन्द्वैक्यं वा । अनेन मध्याधोभागशोभाः । तथाचैतावदेव मूल्यं कोटिचिन्तामणिविचित्ररत्नखचितमन्दिरससलोकादिलभ्याऽमृतादेरप्यधिकमस्माकम् । तव च सहजत्वादनायाससाध्यमिति । यथोक्तमूल्येन जातं चास्माकं दास्यं न किञ्चिदपि वक्तव्यं, कर्तव्यं वा शिष्यत इति भावः । लोभविशेषोत्थानात् सौरभ्यविशेषाघ्राणाद्वाऽधरे सुधानुमानम् । ननु नैवं वाच्यं,युष्मत्पतिभ्यो राज्ञश्च विभेम्यहमित्याशङ्क्य, किमेवं प्रत्यक्षोपलब्धस्वसामर्थ्यं गोपायसीत्याशयेनाहुः ॥ दत्ताऽभयं च भुजदण्डयुगम् ॥ तथाचान्याऽभयङ्करभुजदण्डालङ्कृतस्य तव नाऽस्ति भयसम्भावनेति भावः । अनेन गोवर्द्धनधारणादिना दत्ताभयेभ्योऽस्मत्पत्यादिभ्यस्तेनैव दत्तात्यन्तभयेभ्य इन्द्रादिभ्यश्च भयाऽभावात् तव दास्ये स्वीकृते नास्त्यस्माकं लोकद्वयेऽपि भयशङ्केत्यपि ध्वनितम् । गाढालिङ्गनेन कामभयहारित्वमप्यत्र व्यङ्ग्यम् । दण्डपदेन सुवृत्तत्वादिशोभोक्ता । एवं व्यञ्जितेन वीररसेन शृङ्गाररसोऽपि पुष्टो भवति । ननु तथापि परदारसम्बन्धलाञ्छनान्निष्कलङ्कोऽहं विभेमीत्याशङ्क्य श्रीरेखोपरि तर्ज्जनीं धृत्वा पृच्छन्त्य इवाहुः ॥ वक्ष इति ॥ श्रिया कर्त्र्या एकं श्रेष्ठं रमणं यस्मिंस्तत् । तथाच, हे निष्कलङ्काग्रगण्य, यदि कलङ्काद् बिभेषि तर्हि श्रीमन्नारायणभार्यां लज्जया गृहीतरेखारूपां किमिति वक्षस्युद्वहसि । तस्मान्नैवं वोचस्त्वं तु ब्रह्माण्डस्यान्तर्बहिर्वावस्थितस्य कस्यापि कामपि नारीं न रक्ष्यसीति सम्यग् जानीमो वयम् । अतस्तादृशं स्वसामर्थ्यं माऽवलोपयेति भावः ।

क्रियाद्वयं च स्वानुरागवैशिष्ट्यस्य, मुखे चुम्बनं, भुजवक्षसोरालिङ्गनमिति प्रयोजनद्वयस्य च ध्वननाय । अत्र वीनां पक्षिणामीक्षणीयेतिश्लेषेण स्वनेत्राणां खञ्जनत्वम् । तत्रालककुण्डलपाशयोस्तद्बन्धः । गण्डयोः पाशस्थानत्वम् । सुधाया आहारत्वम् । हसितावलोकमिति तन्नेत्रयोः स्वनेत्रखञ्जनाकर्षखञ्जनत्वम् । भुजवक्षसोः सञ्चारदेशत्वं च व्यज्यते । तथाच यथोक्तस्वरूपदर्शनजनितासक्तिमदन्तःकरणानां महाजालबद्धनयनखगानाम् अस्माकं, प्रतियात, नेत्यादिवाग्वज्रप्रहारेण हृदयानि मा विदारयेत्याशयः । मानिनीपक्षे, ननु कथं तर्हि ममाङ्गानि निरीक्षमाणा एव तिष्ठतेति चेत् तत्राहुः ॥ वीक्ष्येति ॥ विलोक्यापि किं वयं दास्यो भवामेति काका, नैवेत्यर्थः । यद्वा, ननु साहसं मा कुथ, ममाङ्गानि विलोक्य विचार्य्य च वक्तव्यमित्याशङ्क्याहुः ॥ वीक्ष्येति ॥ तथाच न वयं तव समकोटिखिङ्गैरपि धैर्य्याच्चालयितुं शक्या इति भावः । यद्वा यदि तवास्मान् दासीकर्तुं महत्युत्कण्ठा वर्तते तर्हि योपिद्रूपस्य तव विश्वासाभावात् स्वपतिं कञ्चन दर्शय, भवतु, तं दृष्ट्वा वयं दास्यो भविष्याम इति नर्म व्यञ्जयन्त्य आहुः ॥ वीक्ष्येति ॥ वक्षसि स्वश्रिया युक्तो यस्तत्र एको रमणः कान्तस्तं, दत्ताभयं भुजदण्डयुगवन्तं विलोक्य वयं दास्यो भविष्यामः । तेषां बहुत्वख्यापनायैकेत्युक्तम् । सोऽस्माकं प्रदर्शनीय इत्युपहासोक्तिः ॥

निवृत्तिपक्षे, चित्तैकाग्र्यास्पदस्य मुक्तानुग्रहार्थं गृहीतलीलाविग्रहस्य भगवतो मुखादिकं विचार्य्य तथैवालोक्य च वयं तवैव दास्यं प्रतिपादयाम इति, वीक्ष्य इति ॥ तथाच समस्तोपासनाविधायिश्रुतितात्पर्यगोचरस्यैवंविधस्वरूपस्य भगवतो दास्येनैवोद्धारो, नान्यथेति भावः ॥ ३९ ॥

ननु युष्माकमपि भावोऽपेक्षितः, स च यथा मच्छ्रवणादिना

भवति, न तथा मत्सन्निकर्षेणेति मयोक्तमेवातः किमर्थं लोकविद्विष्टमार्गानुसरणं कुरुत, गृहे गत्वा मच्छ्रवणादिकमेवाचरतेतिचेत् तत्राहुः

का स्त्र्यङ्ग! ते कलपदाऽमृतवेणुगीत-
संमोहिताऽऽर्यचरितान्न चलेत् त्रिलोक्याम् ॥
त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं
यद् गोद्विजद्रुममृगाः पुलकान्यऽबिभ्रन् ॥ ४० ॥

केति ॥ शक्तस्यैवाधिकारश्रवणात् स्त्रीणां चैतदुपदिष्टार्थाऽनुष्ठानेऽशक्तत्वाद्यथोक्तोपदेशो न युक्तः । तस्मात् पुरुष एवैवमुपदेष्टव्य इति द्योतनाय, का स्त्रीत्युक्तम् । किञ्च, समाहिता एव धर्माधर्ममर्यादा विचारयन्ति, न तु मोहिताः । सम्यग् मोहिताश्चेत् किमु वक्तव्यमित्याशयेनाहुः ॥ त इति ॥ तत्र समस्तजीवसंमोहकमायाशक्तेर्यत् कलपदाऽमृतमयं गीतं तेन संमोहिता । तत्र वेणुगीतमिति सर्वेन्द्रियाणाम्, अमृतेति प्राणस्य, कलपदेत्यन्तःकरणस्य व्यामोह उक्तः । आयतेति पाठे, कलानि अव्यक्तमधुराऽक्षराणि पदानि यस्मिंस्तद् आयतं दीर्घमुच्छ्रितस्वरालापभेदस्तेन सम्यग् मोहिता का वा स्त्री आर्यचरितात् शिष्टाचारान्निजधर्मान्न चलेत् । या स्त्री न चलेत् तथाविधा चतुर्दशभुवनेषु काऽपि नास्तीत्यर्थः । तथाच सर्वाऽविशिष्टदोषेणाऽस्माकमुपालम्भो न युक्तः । किञ्च, विद्यते न खलु कश्चिदुपायः सर्वलोकपरितोषकरो यः * सर्वथा स्वहितमाचरणीयं, किं करिष्यति जनो बहुजल्प * इत्युक्तत्वाद् दुराराध्यलोकाराधनार्थमेवंविधफलत्यागो न युक्तः । अन्यथा सर्ववान्धवजनानभिमतसंन्यासोऽपि केनचिन्न क्रियेताऽतः परलोकाविरोधि कर्म नानुष्ठेयम् । नच परब्रह्मणस्तवाराधनेन स-

र्वकर्मफलभूतो नास्ति परलोकबाधः । त्यक्त्वा स्वधर्म्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत् ततो यदि * यत्र क्व वाऽभद्रमभूदमुष्य किं, को वाऽर्थ आप्तोऽभजतां स्वधर्मतः * न वै जनो जातु कथञ्चनाव्रजेन्मुकुन्दसेव्यन्यवदङ्ग संसृतिम् * स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो जन इत्यादिशास्त्रात् । संभावितस्य वाऽकीर्तिर्मरणादतिरिच्यत इत्यादिशास्त्रं तु जिजीविषुपरलोकद्वयविरुद्धकर्मनिन्दापरम् । शिष्टनिन्दापरं च । तत्र वयं त्यक्तसर्वैषणसंन्यासिसदृशा न त्वच्चरणसङ्गमरहितजीवनाभिलाषा, नाऽपि परलोकविरोधिकर्मपरा, नाऽपि भगवत्स्वरूपाभिज्ञशिष्टविनिन्द्याचाररता इति भावः । का स्त्रीत्यनेन, यन्मोहिताः पुरुषा अपि चलितास्तन्मोहिता स्त्री का न चलेदित्यपि सूचितम् । किञ्च यथा सूर्येण दिनं, चन्द्रमसा रात्रिस्तथा त्रैलोक्यस्यापि सुभगत्वं सौन्दर्य्यं येन भगवद्रूपेण तव त्रैलोक्यसौभगमिदमनुभूयमानं रूपं च निरीक्ष्य यद् यतो गोद्विजद्रुममृगाः पुलकानि अबिभ्रन् अबिभरुः । गवादीनामनभिज्ञाशिरोमणीनामपि यद्दर्शनानुरागो दृश्यते । तेन त्वत्स्वरूपाऽभिज्ञानरसज्ञानामस्माकं स्वधर्मत्यागे किं चित्रम् । तत्रापि त्वद्वेणुकशब्दश्रवणमात्रेणापि निजधर्मत्यागो युक्तः, किं पुनस्त्वदनुभवेनेति भावः ॥ अनभिज्ञापक्षे, ननु नेयं लक्ष्मीः, किन्तु मद्वक्षसि सहजा लक्षणविशेषरूपा स्वर्णरेखा विराजते । तां दृष्ट्वा पतिव्रताशिरोमणिभूतां लक्ष्मीमपि, स्वयं दुष्टोऽन्यानपि दूषयतीति न्यायमनुसृत्य दूषयितुं प्रवृत्तास्तस्या मत्तश्च भयं न कुरुतेत्याशङ्क्य, न वयं कामपि दूषयामः, किन्तु सर्वधर्मध्वंसनाय त्वमेव विधात्रा सृष्टोऽसीति सरोषविभ्रममाहुः ॥ केति ॥ अङ्ग हे कृष्ण, तव कलपदाऽमृतवेणुगीतसंमोहिता आर्यचरितात् पातिव्रत्यलक्षणान्निजधर्मात् का स्त्री न चलेदपि तु सर्वाऽपि चलेद-

व । अतस्त्वत्कर्तृकं गीतमेव दूषयति । धर्मत्याजनलक्षणं चञ्चलत्वे प्राप्स्यत्येवेति भावः । न केवलं तव गीतमेवैवंविधम्, अपि तु रूपपमीत्याहुः ॥ त्रैलोक्यसौभगमिति ॥ ननु नास्ति मम गीतादेरयं स्वभावः, किन्तु स्त्रीणामेवायं स्वभावो यद् यत्किञ्चिदपि गीतादिकमुपलभ्य मोहिता भवन्तीति चेत् तत्राहुः ॥ यदिति ॥ याभ्यां गीतरूपाभ्याम् । यद्वा, नन्वेवं पतिव्रताभिरुपहसनीया भविष्यथेत्याशङ्क्य, तव गीतादिप्रसादाच्चतुर्दशभुवने उपहासकरा काऽपि न भविष्यति । सर्वासां मोहावश्यम्भावादित्याशयेनाहुः ॥ केति ॥ किञ्च चराचरात्मकं सर्वमपि तव गीतादिना मोहितम् । अतः का उपहासशङ्केत्याशयेनाहुः ॥ त्रैलोक्येति ॥ मानिनीपक्षे, ननु यदि मदीयगीतादिकं भवतीनां न क्षोभकरं, तर्हि किमर्थं चलितुमिच्छथेति चेत् तत्राहुः ॥ केति ॥ गीतमोहिताऽपि आर्यचरिताद्धेतोस्ते त्वत्तः सकाशात् का स्त्री न चलेन्नापयायात् । किञ्च, यस्माद् गवादयोऽपि सपुलकास्तदिदं त्रैलोक्यसौभगं रूपं दृष्ट्वा च सदाचारभङ्गभिया का नापयायात् । सुन्दरीणां सुन्दरसन्निधौ स्थितिर्निन्दानिदानमिति मोहिताऽपि यदि चलेत् तर्ह्यमोहिता वयं कथं नापसराम इति भावः । यद्वा, तवास्ति स्वगीतादिप्रयुक्तवशीकार इति वयं जानीमस्तथापि तेऽस्मान् प्रत्यऽकिञ्चित्करतेत्याशयेनाहुः ॥ केति ॥ मोहितानामेव वशीकारो भवति । या तु तव तादृशगीतेन न मोहिता सा स्त्री का आर्यचरिताच्चलेत् । तादृशी काऽपि नास्तीत्यर्थः । किञ्च, यतो गवादयः सपुलकास्तदिदं त्रैलोक्यसौभगं स्वीयं रूपं तु निरीक्ष्य स्वरूपोत्कर्षाभिज्ञा का सदाचाराच्चलेदिति ॥

निवृत्तिपक्षे, तस्मात् त्रिलोक्यां नास्ति तथाविधा श्रुतिर्या त्वां न प्रतिपादयेदित्याहुः ॥ केति ॥ तव, सर्वे वेदा यत्पदमामनन्ति,

सदेव सोम्येदमग्र आसीदित्यादिरूपं यत् कलपदाऽमृतत्वेणुगीतं तदेव, समा=सम्यक्प्रमाणम् । प्रत्यगभिन्नपरमात्मपराणामुपनिषदां विषयस्य कालत्रयाबाध्यत्वात्तद्विषयकप्रमाणस्य पारमार्थिकतत्त्वावेदकत्वरूपप्रामाण्यवत्त्वात् सम्यक्त्वम् । तदितरप्रमाणानां व्यवहारदशायां बाधाभावात् । व्यावहारिकतत्त्वावेदकप्रामाण्यकत्वादसम्यक्त्वम् । तथा, ऊहितो मनननिदिध्यासनपूर्वकमवगतो यः प्रत्यगभिन्नः परमात्मा तस्य चरितात् सृष्टिकर्तृत्वादिलक्षणात् काऽपि स्त्री तदनन्यपरा श्रुतिर्न चलेन्न प्रचलति । अयमर्थः । सृष्टिप्रतिपादकश्रुतीनां सृष्टिमुपन्यस्य तन्निषेधाभिधानादऽविचिकित्समद्वितीयत्वं प्रतिपादितं भवतीति परम्परया निरस्ताखिलद्वैतविभ्रमे अखण्डे सच्चिदानन्दैकरसे परमात्मनि तात्पर्य्यम् । अन्यथा वायौ प्रतिषिद्धस्य रूपस्यान्यत्र सत्त्ववद् ब्रह्मणि प्रतिषिद्धस्य द्वैतस्यान्यत्र सत्त्वशङ्का स्यात् । उपासनाप्रकरणपठितसगुणब्रह्मप्रतिपादिकानां तूपासनाविध्यपेक्षितगुणारोपमात्रपरत्वं, न गुणपरत्वम् । निर्गुणप्रकरणस्थानां निषेधविध्यपेक्षितनिषेध्यसम्पादकत्वेन विनियोगः । कर्मप्रकरणपठितानां संयोगपृथक्त्वन्यायेन विविदिषायामुपयोग इति काऽपि श्रुतिः परमात्मचर्य्यावर्णनान्न चलतीति । ननु महेन्द्रादिप्रतिपादनपरतयोपलभ्यमानानां तासां कथं परमात्मपरत्वमितिचेत् तत्राहुः ॥ त्रैलोक्येति ॥ इदमनुभूयमानं रूपं सत्तास्फूर्त्त्यात्मकं, येन सेश्वरं जगत् सुन्दरं दृश्यते तदालोच्य तत्तद्देवादिप्रतिपादनपराणां मध्ये च काऽपि न चलति । यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्ज्जितमेव वा * तत्तदेवाऽवगच्छ त्वं मम तेजोंऽशसम्भवमिति भगवत एव इन्द्रादिरूपेणावस्थानाभिधानादिति भावः । इदमेवोदाहरणैः स्पष्टयति ॥ यदिति ॥ येन रूपेण, सर्वतःपाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् * सर्वतः श्रुतिमल्लोके

सर्वमावृत्य तिष्ठतीति सर्वात्मभावप्रतिपादनादिति भावः ॥ ४० ॥

अथोत्तरदिग्गताः प्रार्थयन्ते ॥

व्यक्तं भवान् व्रजभयार्त्तिहरोऽभिजातो (१)
देवो यथादिपुरुषः सुरलोकगोप्ता ॥
तन्नो निधेहि करपङ्कजमार्त्तबन्धो
तप्तस्तनेषु च शिरःसु च किङ्करीणाम् ॥ ४१ ॥

व्यक्तमिति ॥ आदिपुरुषो देवो भवान्, यथा वामनादिरूपेण सुरलोकगोप्ता जातस्तथेदानीं व्रजभयार्तिहरोऽभिजातः प्रकटित इत्यस्माकं व्यक्तं विस्पष्टमस्ति ज्ञानम् । वसुदेवगृहेऽवतीर्णस्य सद्यो व्रजप्रवेशात् । एवं मुख्यमवतारप्रयोजनं जानीमः । तत्र व्रजस्थानां गोपादीनां भयं भगवता नाशितम् । सम्प्रति तप्तानामस्माकमार्तिहरणमवशिष्यते । तदवतारसार्थक्याय तवावश्यकमिति भावः । ननु तथापि मर्यादयैवार्तिहरणं युक्तमतः कामार्त्तिज्ञानेन हरिष्यामीत्याशङ्कानिरासायोक्तम् ॥ देवः ॥ यथादिपुरुषः ॥ सर्वकारणभूतः । ततश्च देवासुरादिषु समोऽपि इन्द्रादिस्वभक्ताभिलाषानुसारेणोपेन्द्रादिदेवो भूत्वा दैत्यान् मारयन् वैषम्यमङ्गीकरोति तथाऽस्मदर्थं गृहीतगोपालविग्रहः स भवानस्मदार्तिहरणाय मर्यादोल्लङ्घनमपि करोत्विति भावः । तस्माद्, ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति स्वप्रतिज्ञामनुसरेत्याहुः ॥ तदिति ॥ यस्मान्मनोरथाऽनुसारिफलप्रदातृत्वेन भवान् प्रसिद्धस्तस्मान्नोऽस्माकं स्तनेषु कामार्तिनाशाय करपङ्कजं निधेहि । तत्र योग्यं सम्बोधनम् ॥ हे आर्तबन्धो ! शिरःसु च निधेहि । कामोपाधिका-

(१) व्रजजनार्तिहर इति पाठान्तरम् ।

ऽपीयं भवतीनां भक्तिः शुद्धायामेव तस्यां पर्यवस्यतीत्याश्वसनाऽर्थमिति भावः। यद्वा, अस्माकमेव भयार्तिहरणं तवाऽवतारस्य मुख्यं प्रयोजनम्। तेनास्माकं हृदयतापनिवृत्त्यर्थं स्तनेषु करपङ्कजम् अमृतस्राविवात् तापनाशकं निधेहि। संसारभयनिरासार्थं च शिरःसु तन्निधेहीत्यर्थः। यतो वयं किङ्कर्योऽतोऽस्मद्भयार्तिनाशनयार्तबन्धोस्तव योग्यमेवेत्याहुः॥ किङ्करीणामिति॥ अनभिज्ञापक्षे, तस्मादलं चातुरीनिबन्धनैर्वाग्विलासैः, सर्वथाप्यस्मदभिलषितं सम्पादयेत्याहुः॥ व्यक्तमिति॥ यथा अदित्यां जात आदिपुरुषो देवः सुरलोकगोप्ता तथा व्रजस्य दावादिभयं वातवर्षादिपीडां च हर्तुं व्रजेश्वर्यां भवानभिजातः। नारायणसमो गुणैरित्युक्तत्वात्। व्यक्तमिदं, न तु गुप्तमतोऽस्माकं कामादिभयार्तिहरणमपि स्वव्रतरक्षणायावश्यकमिति भावः। नच युष्मदङ्गीकारेण युष्मत्पतीनां भयार्ती भविष्यतस्तद्धरणार्थमभिजातस्य तत्प्रदानमनुचितमिति शङ्क्यम्। अग्रहणे सत्यस्मन्मरणावश्यम्भावादस्मत्पत्यादीनां तत्कृतभयार्तिनाशस्यास्मद्ग्रहणं विनाऽसम्भवात्। भवतु, स्वस्याभीप्सितमावेद्यतामित्यपेक्षायामाहुः॥ तदिति॥ यस्मादेवं तस्मात् तप्तेष्वस्माकं स्तनेषु करपङ्कजं, निधेहि=सम्यक्स्थापय। तत्र हस्तस्य पङ्कजरूपत्वात् सूर्यतापेन कमलस्येव तस्यास्मत्स्तनतापेन सुखमेव भविष्यतीति व्यङ्ग्यम्। यतो, हे आर्तबन्धो नो चेदिदं नाम निरर्थकं भविष्यतीति भावः। सदैन्यमाहुः॥ किङ्करीणां शिरःसु च निधेहि॥ इतः परमेतावन्मात्रेणास्मान् दासीः कुर्विति भावः। यद्वा, शिरःसु करपङ्कजस्थापनेन त्यागभयं निवर्त्तय। यतो वयं किङ्कर्यः। त्वं चार्तबन्धुः। तस्मादस्माकमार्त्यादिकं त्वन्निबन्धनम्, अन्यनिमित्तं वा नोपपन्नमिति भावः। यद्वा नास्तीदमनुचितम्। यतो वयं किङ्कर्यस्ततः परीक्षार्थे वा तथा

कर्तव्यमिति रसोक्तिः ॥ मानिनीपक्षे, बलात् स्तनादौ हस्तं धर्त्तुं प्रवृत्तमालक्ष्याहुः ॥ व्यक्तमिति ॥ व्रजस्य भयार्त्योर्हरणाय जातस्त्वमस्माकमुभयसाधने कर्मणि नियोजयितुं नार्हसीति भावः । तस्मात् करपङ्कजं, हे आर्तबन्धो धर्मभङ्गभयार्तिनाशक, हे तम ! कामाग्नितापित, किङ्करीणां दासीनामपि, किमुत सतीनामस्माकं शिरःस्वपि नो निधेहि, किमुत स्तनेषु नो निधेहीति । यद्वा, व्रजभयार्त्तिहरणायाभिजातस्य तस्य तव तद्द्वारहरणादिना तत्प्रदानं नोचितमिति भावः । यद्वा, बलात्कारेण यद्यस्मान् स्पृशसि तर्हि प्राणान् वयं त्यक्षामस्तेन सर्वेषां भयार्ती भविष्यतस्तच्च तथाभूतस्य तव नोचितमिति भावः । हे कामार्त, किङ्करीणामपि त्वदभिलापरहितानामतप्तेषु स्तनेषु शिरःसु च करपङ्कजं न निधेहि । यद्वा, या नः किङ्कर्य्यस्तासां तप्तस्तनेषु करपङ्कजं निधेहि । उक्तिप्रत्युक्तिमद्वाक्यं संलाप इति कीर्त्यते * इत्युक्तत्वात्, स्वागतमित्यादि, एतदन्तं प्रकरणं संलापाख्योऽनुभावः ॥

निवृत्तिपक्षे, किञ्च, जगत्कारणत्वेन प्रतिपादितो भवान् सर्वाधिष्ठानभूतोऽतस्त्वय्यध्यस्तस्य प्रतिपादनं त्वत्प्रतिपादनमेवेत्याशयेनाहुः ॥ भगवान् देवः स्वयम्प्रकाशचिदानन्दस्वरूपः । तथा च मन्त्रवर्णः, एको देव इति । अत एवादिपुरुषः । सोऽकामयत बहु स्यामित्यादि । जगत्कारणत्वेन प्रतिपादितोऽभिजातः । सच्च त्यच्चाभवत्, तत् सृष्ट्वा तदेवाऽनुप्राविशदित्यादिना सर्वस्वरूपापन्नत्वेन निरूपितो यथा सुरलोकगोप्ता तथा व्रजस्य काण्डत्रयात्मकस्य वेदस्य भयार्तिहरोऽपीति व्यक्तं निश्चितम् । यद्वा, यथा आद्यपुरुषो देवो भगवान् वामनादिरूपेण सुरलोकगोप्ताऽभिजातः । तथा मत्स्यरूपेण व्रजभयार्तिहरोऽप्यभिजात इति व्यक्तम् । यद्, वादिकृतवेदभयार्तिहरणार्थं कृष्णद्वैपायनादिरूपेण प्रकटित

इति व्यक्तमित्यर्थः। यस्मादेवं तव तस्मात् करपङ्कजम् । करोतीति व्युत्पत्त्या करशब्देनाज्ञानमुच्यते । तल्लुक्षणात् पङ्काज्जातमधिकार्यन्तःकरणं नोऽस्माकं श्रुतीनां शिरःसु शिरोभागेषु वेदान्तेषु निधेहि तद्विचारार्थं प्रवर्तय । यथा तप्तस्तनेषु ब्रह्मपरत्वाभावप्रतिपादनेन तप्तेषु स्तनस्थानीयेषु कर्मोपासनद्वारा ब्रह्मपरभागेषु च निधेहि । वेदैश्च सर्वैरहमेव वेद्य इत्यादिप्रेरणेनेति भावः । यतो वयं सर्वा अपि भवतः किंकर्य्यस्त्वय्येव तात्पर्य्यवत्यो, भवाँश्चार्तबन्धुस्तत्तद्वादिभिरसुरैश्च दत्तपीडानामस्माकं संसारार्तानां मुमुक्षूणां च बन्धुरतो योग्यमिदमिति संबोधनाशयः ॥ ४१ ॥

ततः किं वृत्तमित्यपेक्षायामाह ।

श्रीशुक उवाच ॥

इति विक्लवितं तासां श्रुत्वा योगेश्वरेश्वरः ॥
प्रहस्य सदयं गोपीरात्मारामोऽप्यरीरमत् ॥ ४२ ॥

इतीति ॥ इत्युक्तप्रकारेण तासां त्रिविधानां गोपाङ्गनानां विक्लवितं प्रेमपारवश्यमिलितप्रार्थनोपालम्भनिषेधरूपं भाषितं श्रुत्वा तच्छ्रवणाभिलाषं पूरयित्वा प्रहस्य प्रहासेनापि वैकल्यमुत्पाद्य। यद्वा सुष्ठूक्तं भवतीभिरित्यपि तदुक्तानुमोदने रत्याख्यभावव्यञ्जनाय प्रकर्षेण हसित्वा। यद्वा, प्रहासेनाऽभिज्ञाः प्रति—युष्मन्निष्ठया प्रीत्याऽत्यर्थमहं प्रसन्नोऽस्मीति। अनभिज्ञाः प्रति—अहोऽद्यैकस्मिन्नेव दिने मया गृहीतेनाऽवहित्थाभावेन ता भवत्यो लज्जायाः श्राद्धं कृतवत्य इति ॥ मानिनीः प्रति, अहो अतिकठिना भवत्यो, जितं युष्माभिरिति सूचयित्वा सदयं यथा भवति तथा, गोपीररीरमत् रमयामास । अभिज्ञापक्षे, सदयं सकरुणम् । अनभिज्ञापक्षे, सस्नेहम् ॥ मानिनीपक्षे, सन् अयः शुभावहो विधिर्यत्र तद् गोपीररम-

यदित्यनेन तासां मनोरथानुसारेण भगवान् प्रेष्ठ आसक्त इत्येवं प्रतीतः सन् रमयामास, स्वयं त्वसङ्ग एवेति सूचितम् । पूर्णकामस्याऽसङ्गनिर्विकारस्य परमात्मनो रमणे दयैव हेतुर्न तु कामनेति बोधनाय सदयमित्युक्तम् । आत्मारामोऽपीत्याश्चर्यबोधनाय । अहो तासां प्रेमप्राबल्यम् । सनकाद्यात्मारामवशीकरणगुणगणोऽपि स्वयमात्मारामोऽपि ताभिर्वशीकृत इति । ननु आत्मनि आरामः क्रीडा यस्य तस्य निरिन्द्रियस्याऽसङ्गस्यैकस्य असंख्याताभिस्ताभिः कथं रमणं सम्भवतीत्याशङ्क्याह ॥ योगेति ॥ योगाः सौभर्य्यादयस्तेषामीश्वरा रुद्रादयस्तेषामपीश्वरः । तथा अघटितघटनासमर्थे अज्ञानिप्रतीत्यनुसारेण प्रपञ्चभानवत् तत्प्रतीत्यनुरोधेन रमणोपकरणभानस्याप्यनिरुद्धत्वादिति भावः । यद्वा, अरीरमदपि, वस्तुत आत्माराम एव । यतो, योगेश्वरेश्वरः । यद्वा, ताभिः रममाणोऽप्यात्मरूपाभिस्ताभिरारामवत् क्रीडा यस्येति, न तस्य लौकिकरमणमिति भावः ॥

निवृत्तिपक्षे, इति यथोक्तप्रकारेण तासां श्रुतीनां सदैन्यप्रार्थितं श्रुत्वा, प्रहस्य प्रसन्नो भूत्वा, सदयं यथा स्यात् तथा आत्मारामोऽपि स्वप्रकाशचिदानन्दस्वरूपत्वात् प्रमाणप्रवृत्त्ययोग्योऽपि गोपीः श्रुतीररीरमत् । अतन्निरसनद्वारा तद्विषयतामगच्छत् । यतो योगेश्वरस्य सकलघटनाघटनसमर्थस्याव्याकृतस्य मायादिशब्दप्रतिपाद्यस्येश्वरः । तथाच । जगज्जन्मादिकारणत्वप्रतिपादनेन श्रुतयो मयि पर्यवस्यन्तीत्यधिकारिचेतसि दृढतरनिश्चयमुत्पादितवानिति भावः ॥ ४२ ॥

रमणप्रकारमाह ॥

ताभिः समेताभिरुदारचेष्टितः
प्रियेक्षणोत्फुल्लमुखीभिरच्युतः ॥

उदारहासद्विजकुन्ददीधिति-
र्व्यरोचतैणाङ्क इवोडुभिर्वृतः ॥ ४३ ॥

ताभिरिति ॥ यथोडुभिस्ताराभिर्वृत एणाङ्कः पूर्णश्चन्द्रः शोभते तद्वत् ताभिर्वृतोऽच्युतो व्यरोचत । विशेषेण शोभितः । अनेन दृष्टान्तेन अन्योन्यापेक्षया शोभावत्त्वम् । गोपीनां तन्वीत्वं, स्वर्णवर्णत्वं व्यज्यते । ताभिः समीपमागताभिरादौ समेताभिर्मिलिताभिर्भगवाँश्च ॥ उदारचेष्टितः ॥ उदाराणि अलौकिकानि निर्मलानि मुक्त्यादिफलदानि चेष्टितानि करस्पर्शनपुष्पार्पणकटाक्षादिरूपाणि यस्य । तस्य तादृशचेष्टितैस्तासां रसोदयमाह ॥ प्रियकर्तृकमीक्षणं, स्वकर्तृकं वा तदीक्षणं तेनोत्फुल्लानि विकसितानि मुखानि यासाम् । अनेन भगवन्मुखस्य चन्द्रत्वं, तन्मुखानां कुमुदत्वं बोधितम् । अथ भगवतोऽपि रसोदयमाह ॥ उदारो हासो यया सा दन्तलक्षणकुन्दपुष्पकान्तिर्यस्य सः । उदारहासेन द्विजकुन्देषु दीधितिर्यस्येति वा । तादृशीभिस्ताभिः, मनस्यपि रसोदयेऽपि च्युतिर्न जातेति ज्ञापनाय अच्युत इत्युक्तम् । यद्वा, तथान्वयेऽपि स्वस्वरूपादप्रच्युत एवासीदित्यच्युतपदेन ध्वनितम् ॥

निवृत्तिपक्षे ताभिः सर्वाभिः, गतिसामान्यादिति न्यायादेकस्मिन्नद्वितीये ब्रह्मणि तात्पर्येण समन्विताभिः श्रुतिभिः । उदाराणि सृष्टिकर्तृत्वादीनि चेष्टितानि यस्य सः । प्रियस्यानन्दरूपस्य परमात्मन ईक्षणाय तद्विषयकप्रेमोत्पत्तये उत्फुल्लानि विकसितानि तत्प्रतिपादनोन्मुखानि मुखस्थानीयानि पदानि यासां ताभिः । उदारो यो हासः = महामाया । हासो जनोन्मादकरी च माया * इत्युक्तत्वात् । स्नेहकला द्विजानि * इत्युक्तत्वाद्, द्विजपदेन स्नेहकला उच्यते । स्नेहकलालक्षणा द्विजा दन्ता यस्य, स चाऽसौ

कुन्दो मुकुन्दः । स एव दीधितिः प्रतिमारूपापन्ना कीर्तिर्यस्य सः । कुन्दो माघ्ये मुकुन्दे च भ्रमिनिध्यन्तरे पुमानिति मेदिनी । कुमुदः कुन्दरः कुन्द इति भारते ॥ ४३ ॥

अथोदारलीलाभिर्वनमपि शोभयन् व्यचरदित्याह ।

उपगीयमान उद्गायन् वनिताशतयूथपः ॥
मालां बिभ्रद् वैजयन्तीं व्यचरन् मण्डयन् वनम् ॥ ४४ ॥

उपगीयमान इति ॥ ताभिरुप समीपे गीयमानः । भक्तपराधीनत्वप्रेयसीजनमनोऽनुरञ्जकत्वमानवतीमानोद्दीपकत्वादिगुणगणालङ्कृतकृष्णनाम्ना पुनः पुनर्गीयमानः, स्वयं च शरच्चन्द्रादिमयं गोपीजनप्रेममयं च गीतमुद् ऊर्ध्वब्रह्मलोकपर्यन्तगामि गीतं गायन्, तदुक्तं विष्णुपुराणे— कृष्णः शरच्चन्द्रमयं कौमुदीकुमुदाकरम् * जगौ गोपीजनस्त्वेकं कृष्णनाम पुनः पुनरिति । ततश्चानुरक्तस्त्रीशतयूथपस्तत्पतिः कामिनीरत्नानां पालक इति वा, तदधरपानकर्त्तेति वा । पुनश्च, वैजयन्तीं मुक्तामाणिक्यमरकतेन्द्रनीलवज्राख्यरत्नरचितां स्वाभाविकीमैश्वर्य्यबोधिकां कीर्त्तिमयीम् । पञ्चवर्णा वैजयन्तीति वचनात् । पञ्चवर्णपुष्पग्रथितां वा मालां बिभ्रद् वनमेव सर्वं मण्डयन् अलङ्कुर्वन् व्यचरत् तासां कामोद्दीपनाय लीलागतिं कृतवान् । वनान्तरं गतवानिति वा ॥

निवृत्तिपक्षे, उपगीयमानो मुनिभिः, स्वयं च कृष्णादिरूपेण, मत्तः परतरं नाऽन्यत् किञ्चिदस्ति धनञ्जय * मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव । क्षेत्रज्ञं चाऽपि मां विद्धि सर्वक्षेत्रेषु भारत । अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते । इत्यादिना स्वात्मानमुद्गायन् वनितास्थानीयश्रुतिशतयूथपस्तदर्थत्वात् तत्पतिः । तथाच सूत्रस्मृतिश्रुतिलक्षणप्रस्थानत्रयगम्य इत्यर्थः । तत्त्वमयीं

वैजयन्तीं मालां बिभ्रत् तदवच्छिन्नः सूत्रत्वादिरूपः सः । पञ्चरूपा तु या माला वैजयन्ती गदाभृतः * सा भूतहेतुसंघाता भूतमाला च वै द्विजेति विष्णुपुराणे । अन्तःकरणलक्षणं वनं मण्डयन् व्यचरत् । सर्वासु तद्वृत्तिषु स एवाऽस्फुरदित्यर्थः ॥ ४४ ॥

नद्याः पुलिनमाविश्य गोपीभिर्हिमवालुकम् ॥
रेमे तत्तरलानन्दिकुमुदामोदवायुना ॥ ४५ ॥

ततश्च नद्याः श्रीयमुनायाः पुलिनमाविश्योपविश्य तस्योपवेशनयोग्यतामाह ॥ हिमवालुकम् ॥ हिमवालुकः कर्पूरस्तद्वद्वालुका यत्र । शाकपार्थिवादिवत्समासः । तस्या नद्यास्तरलैस्तरङ्गैरानन्दयुक्तस्तत्करः । स चाऽसौ कुमुदामोदवाँश्च वायुस्तेनोपलक्षितम् ॥ आनन्दीति मान्द्यम् । शैत्यसौरभ्ये स्पष्टे । यद्वा, यथोक्तवायुना हेतुना हिमवालुकम् । यद्वा, तत्तरलानन्दीति पृथक् पदं पुलिनविशेषणम् । तत्रोपविश्य गोपीभिः सह रेमे । जुष्टमिति पाठे रमयाञ्चकारेति परेणान्वयः ॥

निवृत्तिपक्षे, नद्या बुद्धिलक्षणायाः, पुलिनं सात्त्विकं प्रत्ययमाविश्य प्रविश्य तत्तदारूढेति यावत् । ना पुरुषः परमात्मा गोपीभिः श्रुतिभिः सह रेमे तदुक्तं भगवता । तेषामेवानुकम्पार्थमहमऽज्ञानजं तमः * नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वतेति । तत्तद्विषयाभिकाङ्क्षालक्षणतापस्य निवृत्तत्वाद्धिमवालुकस्थानीयं शान्तम् । अत एव, तस्या नद्यास्तरलास्तृष्णादिलक्षणास्तरङ्गास्तत्तरलास्तैः शान्ततरलैरानन्दि आनन्दाविर्भावसाधनम् । यतः कुमुदामोदवायु, कुं पृथिवीं भारावतारणादिना मोदयतीति कुमुदः परमात्मा कुमुदपुष्पस्थानीयः । तत्सम्बन्धिहर्षो गन्धस्थानीयः । तद्युक्तो वायुस्थानीयो निरूढः प्राणवायुर्यत्र तत् ॥ ४५ ॥

एवं सर्वप्रकारेण तासां जातस्मरकेलित्वं सम्पाद्य सोपकरणं रसविलासचरित्रमाह ॥

बाहुप्रसारपरिरम्भकरालकोरु-
नीवीस्तनालभननर्मनखाग्रपातैः ॥
क्ष्वेल्यावलोकहसितैर्व्रजसुन्दरीणा-
मुत्तम्भयन् रतिपतिं रमयाञ्चकार ॥ ४६ ॥

बाहुप्रसारेति ॥ तत्राष्टविधालिङ्गनमादौ दर्शयति । दूरे स्थिताऽवयवविशेषः स्वयं बाहुप्रसारस्ततो बलादपि परिरम्भ आश्लेषस्ततः करादीनामालभनान्यालिङ्गनानि । तत्र कराऽऽलभनं हस्तेन हस्तग्रहणम् । एवं कचोन्नयनार्थम् अलकानां स्पर्शः । बाहुबन्धार्थमूरुस्पर्शः । रसोद्गमनार्थस्तत्तत्क्षतताडनादयः कामयुद्धनिरूपकाः । नखक्षतादिभिस्तत्तत्स्थाने स्थितस्य कामस्योद्बोधायाभिधानात् । क्ष्वेल्या प्रस्तोभनादिः । तत्पूर्वकान्येवावलोकनानि हसितानि च तैः रसस्थापकैर्व्रजसुन्दरीणां रतिपतिं कामम् उद्दीपयन् रमयाञ्चकार । ता रमयामास । संयुक्तः कामो रतिपतिर्वियुक्तस्त्वग्निरूपः । तत्राऽपि तासां सुखमेव प्रकटितवान् । न तु कामान्तेन विरतिमुत्पादितवानिति भावः ॥

निवृत्तिपक्षे, अविवेकावस्थायां बाहुप्रसारादिभिर्जातो यो रतिपतिः कामस्तमुत्तम्भयन् नमयन् व्रजसुन्दरीणामुपनिषदः । कर्मणि षष्ठी । रमयाञ्चकार । अधिकारिचेतसि कामनिवृत्तिपूर्वकनिबोधितमखण्डैकरसानन्दस्वरूपमात्मानं प्रकटितवानिति भावः ॥ ४६ ॥

एवं संयोगशृङ्गारमुपपाद्य, न विना विप्रलम्भेन संयोगः पुष्टिमश्नुते * कषायिते हि वस्त्रादौ भूयान् रागोऽभिवर्द्धते इ-

ति भरतेनोक्तत्वात् तत्पुष्ट्यर्थं विप्रयोगमुपपादयितुं पीठिकां रचयति ॥

एवं भगवतः कृष्णाल्लब्धमाना महात्मनः ॥
आत्मानं मेनिरे स्त्रीणां मानिन्योऽभ्यधिकं भुवि ॥ ४७ ॥

एवमिति ॥ एवं पूर्वोक्तप्रकारेण भगवतः सर्वदानसमर्थात् सदानन्दस्वरूपात् कृष्णात् परिपूर्णत्वेन न्यूनतामतिरहितत्वान्महात्मनो लब्धो मान आदरो याभिस्ताः सत्यः । सम्प्रति मानवत्यो बभूवुः । भुवि स्त्रीणां समाजमध्ये प्रत्येकं सर्वा एवात्मानमऽभि सर्वप्रकारेणाधिकं च मेनिरे । स्त्रियः प्रतिगर्वितमानसा बभूवुः । दम्पत्योर्भाव एकत्र सतोरप्यनुरक्तयोः * स्वाभीष्टाश्लेषवीक्षादिविरोधी मान उच्यते । अहेरिव गतिः प्रेम्णः स्वभावकुटिला ततः । सनिमित्तोऽथवा यूनोर्मानोदय उदीरितः । तथाचास्मत्समाना सती अन्या नास्त्यतोऽस्मान् यदि प्रार्थयिष्यति तदा रसं दास्यामस्तथा सत्यस्मत्प्रार्थनया यथा भगवानस्मद्दर्शने जातस्तथा तत्प्रार्थनया वयमपि भविष्याम इति रसार्थमेव भावो, न तु दोषरूपः । भगवद्भावनया कृतत्वादिति भावः ॥

निवृत्तिपक्षे, इत्थं प्रत्यगभिन्नस्य परमात्मन औपनिषदत्वं प्रतिपाद्य ताभिरपि दुर्ज्ञेयतयैव प्रतिपादितमिति बोधयितुं दुर्ज्ञेयताप्रतिपादनमुपक्रमते ॥ एवम् उक्तप्रकारेण प्रतिपादिताद्भगवतो निरङ्कुशैश्वर्यवतः कृष्णाच्छुद्धात् सच्चिदानन्दरूपान्महात्मनः प्रत्यगऽभिन्नात् परमात्मनो लब्धं मानं प्रामाण्यं याभिः । ततश्च, अस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेद इत्यादिश्रुत्या स्त्रीणां श्रुतीनां भुवि जन्मभूमौ परमात्मनि प्रामाण्यवत्यः सत्यः, आत्मानमधिकं मेनिर इत्यर्थः ॥ ४७ ॥

ततो भगवान् यत् कृतवाँस्तदाह

तासां तत्सौभगमदं वीक्ष्य मानं च केशवः ॥
प्रशमाय प्रसादाय तत्रैवान्तरधीयत ॥ ४८ ॥

तासामिति ॥ स्वात्मानमभ्यधिकम्मन्यमानानां सौभगान्मानाज्जातमसाधारणतापादकं मानस्य गाढावस्थारूपं, येनादरणीयोऽपि तिरस्क्रियते तादृशं मदं तद्धेतुभूतमनुनयाद्यसाध्यचित्तसमुन्नतिरूपं मानं च वीक्ष्य विशेषतस्तदुपलभ्य, मदस्य निवृत्त्यर्थं तासां प्रशमाय चित्तोन्नतिवारणाय मानशान्तये, तासां प्रसादाय प्रसन्नतया स्ववश्यतापादनाय केशवस्तत्रैवान्तरधीयत, न त्वन्यत्र गच्छन् कयाचिद् दृष्टः । केशा अंशवो यस्य सन्तीति भारतीयव्युत्पत्त्या या शोभा तासां सा तदन्तर्धाने निवृत्तेति व्यज्यते । यद्वा कश्च ईशश्च वशयतीति केशवः । तथाच ब्रह्मरुद्रयोरपि रजस्तमोपशमनेन वशीकरणसमर्थस्य तासां मदमाननिरसनेन वशीकरणे किं चित्रमिति भावः । ननु मदमाननिरासायोपायान्तरं कुतो न रचितवानिति चेदसंभवात् । न हि प्रत्येकप्रसादनं संभवति । एकस्याः प्रथमं प्रसादने सैवादौ किमिति प्रसादितेत्यऽपरस्या मानाधिकोद्भवात् । तस्मात् सर्वाः प्रति रासरसं दातुं प्रेमवर्द्धनाऽर्थं विप्रलम्भः । यद्वा, सर्वासां मदमानयोः प्रशमाय, प्रेयस्याः श्रीराधाभिधायाः सख्याः प्रसादाय वक्ष्यमाणगत्यानुरोधेन तया सहान्तरधीयत । केशान् वयते संस्करोतीति केशवः । तथाच केशप्रसाधनादितत्प्रेमोपायविधाने परमचतुर इति भावः ॥

निवृत्तिपक्षे, तासां श्रुतीनां यः सौभगमदस्तं वीक्ष्य, मानं स्वस्मिन् प्रामाण्यं च वीक्ष्य दुरवगमख्यापनमदस्य प्रशमाय।नावेदविन्मनुते तं बृहन्तमिति श्रुत्या श्रुतिरूपमानातिरिक्तमानागम्यत्वं ख्याप्य-

ते । तेन तासां प्रसादाय तत्रैव तत्तदन्तःकरणवृत्तिष्वेवान्तरधीयत । सर्वप्रत्ययसाक्षित्वेनैवावगन्तुं शक्यतां प्राप्त इत्यर्थः । तथाच श्रुतिः । यदि मंसे सुवेदेति दहरमेव न तत्त्वं वेत्थात्मनो रूपं नो न वेदेति वेद च, अविज्ञातं विजानतां विज्ञातमऽविजानतां, प्रतिबोधविदितं स तमित्याद्या। अत्र ब्रह्मणो दुर्बोधत्वं, श्रुत्येकगम्यत्वं, सर्वप्रत्ययसाक्षित्वेन वेद्यत्वं च दर्शितम् ॥ ४८ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यबालगोपालतीर्थ-
श्रीपादशिष्यदत्तवंशावतंस-रामकुमारसूनु-
धनपतिसूरिकृतायां श्रीभागवतगूढार्थ-
दीपिकाख्यव्याख्यायां दशमस्कन्धे
एकोनत्रिंशोऽध्यायः
॥ २९ ॥ १ ॥

अथ रासपञ्चाध्यायीव्याख्यायां गूढार्थदीपिकायां
द्वितीयोऽध्यायः ॥ २ ॥ ( ३० ) ॥

त्रिंशे विरहसंतप्तचेतसां गोपयोषिताम् ॥
तन्मयत्वसुखप्रश्नमुखलीला निरूप्यते ॥ १ ॥

अथ भगवदन्तर्धानानन्तरं जातां दशां वर्णयिष्यन्नादौ रसाऽऽसक्तचित्तानां भगवत्सखीनाम् अकस्मात् प्रेष्ठादर्शनजन्यं महान्तं तापमाह ॥

श्रीशुक उवाच ॥

अन्तर्हिते भगवति सहसैव व्रजाङ्गनाः ॥
अतप्यँस्तमचक्षाणाः करिण्य इव यूथपम् ॥ १ ॥

अन्तर्हित इति ॥ भगवति पूर्णाऽखिलैश्वर्य्यसम्पन्ने परमनिधिभूते सहसैवाकस्मादेवान्तर्हितेऽदर्शनं गते, सहसैव तं भगवन्तमचक्षणा अपश्यन्त्यः सहसैवातप्यन्त निःसीमसन्तापवत्यो जाताः । रङ्कः सहसैव प्राप्तां सार्वभौमश्रियं सहसैवाचक्षाणो यथा संतप्यते तद्वत् । यतो व्रजाङ्गना बालभावमारभ्य तस्मिन्नेवासक्तस्वान्ता इति भावः । यद्वा, अन्तर्हिते अन्तरन्तःकरण एव तासां प्रविश्य स्थिते सति, बहिस्तं भगवन्तमचक्षाणा बहिर्मुखवदन्तश्चाचक्षाणा अतप्यन् । यतो व्रजाङ्गना अन्तर्विचाराकुशला इत्यर्थः । नच तासां कामात्मत्वं स्थितम् । कात्मात्मनां दर्शनादिना शान्तोपलम्भात् । अतस्तासां परमप्रेमवतीनां दर्शनस्पर्शनादिकमेव मुख्यमिति द्योतयितुं दृष्टान्तमाह ॥ करिण्यो हस्तिन्यो यूथपं महामत्तगजमचक्षाणा यथा तप्यन्ति तद्वत् । करिणीनां यथा गजदर्शनाद्यभावे क्लेशो भवति तथा नाऽन्यासामित्यतस्ता एव दृष्टान्तीकृताः ॥

निवृत्तिपक्षे, अथ विजानतामविज्ञातत्वात्तदपेक्षया अन्तर्हिते भगवति सहसैव तं परमात्मानम् अचक्षाणाः साक्षात्प्रतिपादयितुमशक्ताः स्वजन्यवृत्तिप्रतिफलितचैतन्येन विषयीकर्त्तुमशक्ताश्च व्रजाङ्गनाः श्रुतयोऽतप्यन् । तप्ता बभूवुः ॥ १ ॥

तापानन्तरं जातां तासां दशामाह ।

गत्यानुरागस्मितविभ्रमेक्षितै-
र्मनोरमालापविहारविभ्रमैः ॥
आक्षिप्तचित्ताः प्रमदा रमापते-
स्तास्ता विचेष्टा जगृहुस्तदात्मिकाः ॥ २ ॥

गत्येति ॥ रमापतेः प्रेष्ठस्य गत्या स्वाभाविकेन नूपुरस्वनयुक्तेन पादन्यासेन, अनुरागः स्नेहस्तत्पूर्वकं मन्दहसितं तत्सहितो विलासस्तत्सहितानीक्षितानि कटाक्षास्तैः ।
तथा मनो रमयति, मनसि रमते च य आलापो गुह्यं भाषणं वाचिकव्यापारः । विहाराः श्रृङ्गारचेष्टाः । चित्तवृत्त्यनवस्थानं श्रृङ्गाराद् विभ्रमो मत * इत्युक्तलक्षणो विभ्रमश्च । तैराक्षिप्तान्याकृष्टानि चित्तानि यासां ताः । अतस्तदात्मिकास्तन्मय्यो, यतश्च प्रमदाः प्रकृष्टमदयुक्ता, रमापतेर्विविधाश्चेष्टा जगृहुस्तदनुकरणैरक्रीडन्नित्यर्थः । अत्रानुरागचित्तवृत्त्यनवस्थाने मानसे, आलापो वाचिको, गत्यादयः कायिकाः । अन्यभावानामप्युपलक्षणमेतत् । अत्राभिज्ञापक्षे, रमापतेर्लक्ष्मीपतेः श्रीविष्णोरन्तरेत्राविर्भूतस्वरूपस्य लक्ष्म्या सह विलासरूपाः स्वात्मना च सह विलासरूपा याश्चेष्टास्ता जगृहुः । ननु दासीनां तासां भगवल्लीलाऽनुकरणमनुचितमित्याशङ्कानिवृत्त्यर्थमुक्तं– तदात्मिकाः॥स भगवानात्मनि आविर्भूतो यासां ताः । अतस्तापनिवृत्त्यर्थं तल्लीलाग्रहणं न विरुद्ध्य-

त इति भावः । किञ्च, प्रमदाः । तथाच प्रमदहेतुकदासीभावं विहाय कान्ताभावस्तथा प्रभुचेष्टानुकरणमपीति भावः ॥ अनभिज्ञापक्षे रमापतेः सर्वसौन्दर्य्यसम्पत्तिस्वामिनः ॥ मानिनीपक्षे, गतश्चेद् गच्छतु नाम, वयमेव तदीयास्ताश्चेष्टाः कर्तुं शक्ता इति वहिः प्रकटीकर्तुं तास्ताश्चेष्टा जगृहुः । यतस्तदापि प्रकृष्टो मदो यासां ताः । यतश्च, तदात्मिकाः परस्परमतिगाढप्रेमवशादभेदाभिमानवत्यः । अन्तस्तस्य गत्यादिभिराक्षिप्तचित्ताः ॥

निवृत्तिपक्षे, श्रोत्रस्य श्रोत्रं मनसो मनः वाचो ह वाक् यद्वु प्राणस्य प्राण इत्यादिश्रुतयश्चेतनाद्यधिष्ठितैर्गत्यादिभिः परमात्मानं प्रत्याकृष्टचित्ताः । यतः प्रकर्षेण मदः परमात्मप्रतिपादने हर्षो यासां ताः । रमापतेः सत्तास्फूर्तिलक्षणशोभास्वामिनश्चैतन्यस्यैव तास्ता गमनादिरूपाश्चेष्टा जगृहुः । स्वयं वाच्यवाचकयोरभेदात् । तदात्मिकाः ॥ २ ॥

तदात्मिका इत्युक्तं भगवत्स्वरूपपरिग्रहमाह ।

गतिस्मितप्रेक्षाणभाषणादिषु
प्रियाः प्रियस्य प्रतिरूढमूर्त्तयः ॥
असावहं त्वित्यबलास्तदात्मिका
न्यवेदिषुः कृष्णविहारविभ्रमाः ॥ ३ ॥

गतीति ॥ प्रियस्य गत्यादिषु प्रतिरूढा मूर्तिर्यासाम् । भगवद्धर्मान् स्वात्मन्येवारोपितवत्यः । यतः प्रियाः । तथापि मनसा प्रतिरूढमूर्तयो, न तु नटवत् तत्तद्वेषादिकं धृतवत्यो, यतोऽबलास्तादृशबलरहिताः । अतस्तदावेशवशात् तासां तथात्वमित्याह ॥ तदात्मिकास्ततः कृष्णविहारविभ्रमाः ॥ कृष्णस्यैव विभ्रमाः क्रीडा वि-

लापा यासां ताः । अतो योऽन्विष्यतेऽसावहमिति परस्परं निवेदितवत्यः । न तु वयं व्रजस्त्रिय इति मनागपि काश्चिदपि जानन्ति स्मेत्यर्थः । कृष्णविहारैः स्मर्य्यमाणैर्विभ्रम उन्मादो यासामिति वा । लीलाख्यानुभावोऽयम् । समानमिदं पद्यमितरपक्षयोरपि ॥

निवृत्तिपक्षे, गत्यादिषु देहेन्द्रियव्यापारेषु याः प्रियास्तत्तदाकारवृत्तयस्ताः प्रियस्यात्मनः प्रतिरूढा आत्मन्यारूढा मूर्तयो यासां ताः । अत एवास्य वासुदेवस्य विभोश्चिदात्मन एव बलं विषयप्रकाशनसामर्थ्यं यासाम् । किञ्च, तस्मिन्नारोपितत्वाद् तदात्मिकाः, तत्सत्तातिरिक्तसत्ताविधुरा इति । कृष्णस्य सदानन्दस्वरूपस्य परब्रह्मणः सत्तास्फूर्तिप्रदातृत्वादिलक्षणविहारे, तद्वर्णने विभ्रमो यासां ताः श्रुतयो न्यवेदिषुः बोधयामासुः । तथा असौ परमात्माऽहमेवेति न्यवेदिषुरित्यर्थः । तथाच श्रुतयः । यद्वाचाऽनभ्युदितं येन वागभ्युद्यते, यन्मनसा न मनुते येनाहुर्मनो मतं, यच्चक्षुषा न पश्यति येन चक्षुरपि पश्यति अहं ब्रह्मास्मि, योऽसावादित्ये पुरुषः सोऽसावहमित्याद्याः ॥ ३ ॥

एवं तन्मयतां प्राप्तानां लीलामुपवर्ण्य पुनः प्राप्तस्वशरीराऽनुसन्धानानां चेष्टामाह ॥

गायन्त्य उच्चैरमुमेव संहता
विचिक्युरुन्मत्तकवद्वनाद्वनम् ॥
पप्रच्छुराकाशवदन्तरं बहि-
र्भूतेषु सन्तं पुरुषं वनस्पतीन् ॥ ४ ॥

गायन्त्य इति ॥ अहो येन वयं रमिताः स प्रेष्ठ इदानीं क्व गत इति विचिन्त्य संहता मिलिताः प्रथमं प्रेष्ठमेव गायन्त्य एव । य-

था वयं तदीयकलगीतमाकर्ण्य झटिति तत्समीपमागतास्तथास्मद्गीतमाकर्ण्य सोऽप्याश्वऽस्मत्सन्निधावायास्यतीत्याशयेन तथा जाताः । ततोऽनागते प्रेष्ठे उन्मत्तकवद् वनाद्वनं विचिक्युः । अस्मिन् वने प्रेष्ठः स्यादित्याशयाद् तत्र वने प्रतिवृक्षादिकमन्वेषणं कृतवत्यः । अन्वेषणेनाप्यलब्धं प्रेष्ठं वनस्पतीन् उन्मत्तकवत् पप्रच्छुः । सर्वत्र पूर्णत्वात् तद्व्यतिरिक्तस्य सर्वस्याप्यनिरूपणाच्च तदन्वेषणतत्प्रश्नयोः परमोन्मत्तचेष्टितत्वमित्यभिप्रायेणोन्मत्तकवदित्युक्तम् । भयातिशयद्योतनाद् वा । आकाशवद् भूतेष्वन्तर्बहिः सन्तम् । अत एव पुरुषं पूर्णं सर्वात्मानमन्वेषणाद्ययोग्यमित्यर्थः ॥

निवृत्तिपक्षे, आकाशवत् सर्वगतश्च नित्यः, सत्यं ज्ञानमनन्तं ब्रह्मेत्येवममुमेवाकाशवदन्तर्बहिश्च भूतेषु सन्तं पुरुषं गायन्त्यः, सोऽन्वेष्टव्य इति तं विचिक्युस्तस्यान्वेषणं प्रतिपादयामासुः । तथा, गुहाहितं गह्वरेष्ठं पुराणम् इत्यन्तःकरणलक्षणं वा वनं वनस्थितम् ॥ उन्मत्तकवादिति ॥ सुखरूपात्मविशिष्टमन्तःकरणं वनं तस्माद् वनाद्वनं तद्वृत्तिविशिष्टादितरवृत्तिविशिष्टं, तथात्मा विजिज्ञासितव्य इति प्रश्नपूर्वकं विचारं, वनस्पतीन् अन्तःकरणवनस्पतीन् सत्त्वगुणादीनुद्दिश्य बोधयामासुरित्यर्थः ॥ ४ ॥

तत्कृतप्रश्नान् प्रपञ्चयति ॥

दृष्टो वः कच्चिदश्वत्थ प्लक्ष न्यग्रोध नो मनः ॥
नन्दसूनुर्गतोहृत्वा प्रेमहासावलोकनैः ॥ ५ ॥

दृष्ट इति ॥ तत्रादौ विष्णुप्रजापतिरुद्रावतारभूता एते अश्वत्थादयोऽवश्यं पश्येयुरत एते प्रष्टव्या इत्याशयेनाश्वत्थादीन् पृच्छन्ति ॥ हे अश्वत्थ, हे प्लक्ष, हे न्यग्रोध, वो युष्माभिः कच्चित् किं नन्दसूनुर्दृष्टः । नन्देन परमभक्तेन जन्मान्तरे आराध्य पुत्रत्वेन

लुब्धः । अस्मदनुग्रहाय वा तत्पुत्रत्वेन प्रकटितः । अत एव नोऽस्माकं मनः प्रेमहासावलोकनैर्हृत्वा गतः=अन्तर्हितः । यद्यपि स सर्वत्र व्याप्तस्तथापि नन्दसूनुत्वेनास्माकं प्रेष्ठोऽतस्तद्भूयोऽन्विष्यते । युष्माभिर्दृष्टश्चेत् तर्हि करुणया वक्तव्यः । तं लब्ध्वा सुखिन्यः स्याम इति भावः । यद्वा, ननु विष्णुः कथं चौर्यं कृतवानित्याशङ्कानिरासाय नन्दसूनुरित्युक्तम् । तथाच यथा दधिदुग्धादि चोरितवाँस्तथा मनोऽपीति भावः । ततस्तेभ्य उत्तरमलब्ध्वा अहो, अलक्ष्मीसंस्थानभूतः, पशुना देवाः स्वर्गलोकमायन्, तस्य शिरश्छित्वा मेदः प्रक्षारयन् स प्लक्षोऽभवदिति श्रुतेरयमपि प्लक्षो, लोकानामज्ञानहेतुरेव, नितरामग्राण्यधोभूतानि यस्येत्यधोदृष्टिर्न्यग्रोधः । अत एते न वदिष्यन्तीति विचार्य्यान्यत्र गताः ॥ अनभिज्ञापक्षे, अत्युच्चतरत्वादेते दूरतरचरमप्यस्मत्प्रेष्ठमवश्यं पश्येयुरिति सम्भाव्य पृच्छन्ति ॥ दृष्ट इति ॥ किमर्थं पृच्छ्यत इति चेत् तत्राहुः ॥ नन्दस्य साधोः सूनुर्नोऽस्माकं स्त्रीजनानां प्रेम्णा सर्वलोकमोहनौषधिविशेषेण सहितैर्हासावलोकनैर्भृत्यैश्चौर्य्यकर्म्मकुशलैर्विवृतनेत्रादिद्वाराऽन्तःकरणलक्षणान्तः प्रवेष्टुं समर्थैर्मनोरत्नमञ्जूषां चोरयित्वा पलायितोऽतस्तं पृच्छाम इत्यर्थः । तत उत्तरमलब्ध्वा, महत्त्वपूज्यत्वाद्यभिमानादेतेऽस्मान् क्षुद्राः प्रति अवज्ञया न कथयेयुरिति विचार्य्यान्यत्र गताः ॥ मानिनीपक्षे, एते सर्वलोकपूज्याः प्रष्टव्या इत्याशयेन पृच्छन्ति ॥ दृष्ट इति ॥ दृष्टश्चेद् वक्तव्यः । यतो नो मनो हृत्वा, न त्वस्माभिस्तस्य मनो दत्तमिति भावः । ननु भवदन्तःस्थं मनो बलात् कथं हृतवानितिचेत् तत्राहुः ॥ प्रेमेति ॥ स्वागतमित्यादिवचनैराविष्कृतेन प्रेम्णाऽन्तःप्रवेशो, हासेन ग्रहणमवलोकनेन हरणम् । ननु तदुपरि भवतीभिर्विश्वासः किमर्थं कृत इतिचेत् तत्राहुः ॥ नन्दस्य सर्वानन्दप्रदस्य परमविश्वसनीयस्य

सूनुरतोऽस्मभ्यं सुखमेव दास्यतीति मत्वा विश्वासः कृत इति भावः । ततोऽलब्धोत्तराः क्षणं स्थित्वा, अहो किमेताभिरित्यसमानवजानन्तस्तब्धाः प्रत्युत्तरं न ददते तदलमेतैः क्षुद्राभक्ष्यफलैःप्रफुल्लैः । न श्वश्चिरं तिष्ठति । न्यग्रधो रुणद्धि । रुधिर् आवरणे । प्लक्षस्त्वधो गच्छतीत्यर्थः । तत्त्रात् प्रष्टुमयोग्यैश्च बहिरत्यन्तकठोरैः, परोपकारमाहात्म्यानभिज्ञैर्भूतात्रासयोग्यैरिति विचार्य्यान्यत्र गताः ॥

निवृत्तिपक्षे, गुणा न विदुरात्मानमित्युक्तत्वाद् गुणाद्यभास्यतामाविष्कुर्वन्ति ॥ दृष्ट इत्यादिना ॥ अश्वत्थादिपदैः सत्त्वरजस्तमोऽभिधा गुणा गृह्यन्ते । नोऽस्माकं प्रेम प्रसन्नतापूर्वकम्, अवलोकनैः श्रवणादिरूपैर्मनो हार्दं हृत्वा उद्धृत्य, नन्दः = आनन्दश्चासौ सूनुः=अर्कश्च । आनन्दस्वयम्प्रकाशरूपः परमात्मा गतोऽवगतः स युष्माभिर्दृष्टः कच्चित् । भवद्भिरप्रकाश्य इति भावः । सूनुः पुत्रेऽनुजेऽर्के नेति मेदिनी ॥ ५ ॥

अथ कुरवकादीन् दृष्ट्वा एते महान्तः पुण्यवन्तः सगन्धा मधुपैरतिथिभिरनिशं सेव्यमानाः शुद्धान्तःकरणाः कथयिष्यन्तीति मत्वा पृच्छन्ति ।

कच्चित् कुरवकाऽशोकनागपुन्नागचम्पकाः ॥
रामानुजो मानिनीनां गतो दर्पहरस्मितः ॥ ६ ॥

कच्चिदिति ॥ कुरवकः शोणाऽम्लानः । नागो नागकेसरः । हे कुरवकादयः! रामानुजः कच्चिदितो गतः । अनेन मार्गेण गच्छन् दूरतोऽपि दृष्टः स्यादिति भावः । रामावतारे कृतायाः सेवायाः फलप्रदानायास्मिन्नवतारे स्वीयं नाम, ज्येष्ठत्वं च लक्ष्मणाय दत्तवान् । स भक्ता अस्माँस्त्यक्तुमयोग्यास्त्यक्त्वा गतोऽतः पृच्छामः । तस्माद् दृष्टश्चेत् कृपया वदतेति रामानुजपदाशयः । करुणा-

सागरोऽपि भगवान् कठोरचित्तक्षत्रियजात्युत्पन्नत्वात् स्वभाव-मनुकुर्वन्नस्मत्प्राणहरचेष्टो जात इति वा तदाशयः । यद्यपि तेन र-मितानामस्माकं मान उत्पन्नस्तथापि तन्निरासार्थमन्तर्धानं नोचि-तम् । यतो दर्प्पहरं स्मितं यस्य सः । तथाच मिष्टौषधप्रदानेन रोगनिवृत्तिसंभवे विषप्रदानं नोचितम् । अर्के चेन्मधु विन्देत कि-मर्थं पर्वतं व्रजेदिति न्यायात् । अतस्तदन्यायं विचार्य वक्तव्य इति भावः । तेभ्योऽलब्धोत्तरास्तदैवाकस्मिकेन वायुना चालि-ताग्रशाखाँस्तानालक्ष्य, अहो शिरोधूननेन, वयं न जानीम इति सू-चयन्त्यतोऽलमेभिः सम्पद्गर्वितैरिति मनसि निधायाऽन्यत्र याताः ॥ अनभिज्ञापक्षे, अहो किमर्थं गत इति चेद् वृथैव गत इत्याशयेना-हुः ॥ रामानुजः ॥ तथाच, बलभद्रानुजस्य तस्य नास्ति भय-संभावना अतो भयनिमित्तकं तद्गमनं न सम्भवति । नाऽप्यस्म-न्माननिरासार्थम् । तस्य स्मितमात्रेणैव सुकरत्वादित्याहुः ॥ दर्प्पे-ति ॥ तथाच स्मितादिस्मृतिमात्रेण हृतमानास्तद्वियोगे क्षणमपि जीवितुमशक्ता अन्वेषयामः पृच्छामश्च । अतः कृपया वदतेति भावः । तेभ्योऽप्यलब्धोत्तराः, अहो अयं कुरवकः । अतिमकरन्द-त्वाद् अलीनां कुत्सित ईषद्वा रवो यत्र सः । यद्वा कुत्सिताद्रोदन-शब्दात् कं सुखं यस्य स रोदनप्रियः । अशोकः शोकरहितः । पी-डानभिज्ञत्वाद् दयावर्जितः । नागोऽयं नाम्नैव भयानकः । अयं तु पुंसामपि नागः । चम्पकोऽपि परिणामविरसस्तस्मादेते न प्रेष्ट-कथनेनास्मान् सुखायिष्यन्तीति विचार्य्यान्यत्र गताः ॥ मानिनीपक्षे, कुरवकाशोकौ कामोद्दीपकौ । नागादयः कामबाणपुष्पाः कामिनं व्यावर्तयन्त्यतः कामिनं तं पश्चाऽप्येते ज्ञास्यन्तीति मत्वा तान् पृच्छन्ति ॥ कच्चिद् गतः, किं वा क्वचिदत्रैव निलीय वर्तते । ननु किमर्थमन्विष्यत इत्याशङ्क्यास्मत्सर्वस्वमपहृत्य पलायित इत्याह ॥

मानिनीनां मानैकधनानामस्माकं स्मितादिना दर्प्पं हृतवान्, निर्धनाश्चास्मान् कृत्वा गतोऽतो धूर्तशिरोमणिरस्माभिर्द्धर्तव्य इति भावः । ननु अबलाभिर्युष्माभिः कथं धर्तुं शक्य इतिचेत् तत्राहुः ॥ रामानुजः ॥ तस्य ज्येष्ठो भ्राता बलरामोऽप्यस्मदपेक्षया न प्रबलस्तस्यायमनुजः कथं प्रबलः स्यात् । अन्यथा पलायनं न कुर्यादिति भावः । ततोऽलब्धप्रतिवचना अहो एते पुरुषजातित्वेन कठोरचित्ताः कृष्णपक्षपातिनो न कथयिष्यन्तीति मत्वाऽन्यत्र गताः ॥

निवृत्तिपक्षे, कुरबकादिशब्दैः कुरबकादिस्थानीयानामाकाशादीनां स्थूलसूक्ष्मभूतानां ग्रहणम् । रामा महामाया अनुजा भगिनी यस्य स सर्वकार्योपादानमायाधिष्ठानभूतः कच्चिद् युष्माभिरितोऽत्रगतः । स त्वऽस्माकं मानिनीनां तत्र प्रामाण्यवतीनामपि दर्प्पहरं स्मितं तत्स्थानीयं चराचरात्मकं जगद् यस्य सः । अस्माकमपि सत्त्वासत्त्वाभ्यां वक्तुमशक्यत्वात् । तथाच महाभूतेभ्योऽपि पर इति भावः ॥ ६ ॥

अथान्यत्र गत्वा तुलसीं ददृशुस्तत, इयं भगवतोऽतिप्रिया सर्वदा तन्निकटवर्तिनी स्यात् तज्ज्ञानवती, भगवदीयतया दयावती वक्ष्यति चेति मत्वा तुलसीसन्निधौ गत्वा तां पृच्छन्ति ।

कच्चित् तुलसि कल्याणि गोविन्दचरणप्रिये ॥
सह त्वाऽऽलिकुलैर्बिभ्रद् दृष्टस्तेऽतिप्रियोऽच्युतः॥७॥

हे तुलसि त्वया अच्युतो भगवान् कच्चिद् दृष्टः । यतस्त्वं कल्याणि भगवत्प्राप्तिसाधनपुण्यपुञ्जानुष्ठानवती । अत एव गोविन्दचरणौ प्रियौ यस्याः सा, तच्चरणयोः प्रियेति वा । अत एव तवाऽतिप्रियः । अत एवाऽच्युतः । त्वया कदाऽपि न वियुक्तः । अत एव त्वामलिकुलैर्भ्रमरसमूहैः सह विक्षेपमप्यगणय्य बिभ्रद्

धारयन् वर्त्तते । यद्यप्यऽस्माकमप्यतिप्रियस्तथापि नास्माकं तत्-दृशं कल्याणं येन कामोपाधिं विना तच्चरणावेवातिप्रियौ भवेताम् । अतो नास्माकमच्युतः, किन्तु पलाय्यास्मत्सकाशाद् गतः । सर्वस्यापि कल्याणकरी त्वमिति वा । अतो दृष्टश्चेत्तर्हि कथयेति भावः । तस्या अप्राप्तोत्तरा, अहो भगवदीयेयं भगवदाज्ञां विना न कथयिष्यतीति मत्वाऽन्यत्र गताः ॥ अनभिज्ञापक्षे, हे तुलसि हे कल्याणि दर्शनभगवच्चरणार्प्पणादिना सर्वलोककल्याणप्रदे यतो गोविन्दस्य महाविष्णोश्चरणयोः प्रिये । अत एव नारायणसदृशत्वादस्माकमतिप्रियोऽप्यच्युतः, अलिकुलैः सह त्वां बिभ्रत् त्वया दृष्टः कच्चित् । त्वत्सुगन्धप्रीता मधुव्रता अपि तेन न निवार्य्यन्ते, वयं तु तादृशसुगन्धरहितेन त्यक्ताः किं कुर्मः । तस्मादस्मज्जीवनाय तं कथयेति भावः । अहो विष्णुपूजागर्विताः जारासक्तमनसा अकल्याणीरस्मान् न ब्रूत इति मत्वाऽन्यत्र याताः ॥ मानिनीपक्षे हे तुलसि, हेकल्याणि, परमकल्याणवति, यतो, गोविन्दचरणप्रिये. चरणेत्यादरव्यञ्जकम् । गुरुचरणैरुक्तमितिवत् । हे गोविन्दस्य प्रिये इत्यर्थः । यतोऽलिकुलैः सह त्वां जातां बिभ्रत् । अहो त्वदीयं भाग्यम् । यतोऽतिक्रान्ताः प्रिया अस्मादृश्यो येन स त्वां सर्वदा बिभ्रदास्ते । अत एव त्वत्तोऽप्रच्युतस्तस्माद् दृष्टश्चेदवश्यं कथयेति भावः । अहो, इयं ततो लब्धादरा जाताऽखर्वगर्वा न कथयेदिति मत्वाऽन्यत्र प्रास्थताः ॥

निवृत्तिपक्षे, अथ ज्ञानेन्द्रियपञ्चकमध्ये मुख्यत्वाच्चक्षुरिन्द्रियं पृच्छन्ति । हे तुलसि, तत्स्थानीये चक्षुरिन्द्रिये, कल्याणि कल्याणस्य साधनभूते, गोविन्दस्यैन्द्रियकसुखभोक्तुश्चरणं तत्तद्विषयं प्रति विचरणं यैरिन्द्रियैस्तेषु मध्ये प्रिये अलिकुलैस्तत्तद्वृत्तिरूपत्वरतस्वीसमुदायैः सह त्वां बिभ्रत् प्रियो, यतो वस्तुनः स्वरूपात् क-

दाचिदपि न प्रच्युतः स ते त्वया दृष्टः कच्चित् ॥ ७ ॥

अहो एताः साधारण्यः स्त्रिय एवास्माकमुपकारं करिष्यन्ती-ति मत्वा मालत्यादिकाः पृच्छन्ति ॥

मालत्यदर्शि वः कच्चिन्मल्लिके जाति यूथिके ॥
प्रीतिं वो जनयन् यातः करस्पर्शेन माधवः ॥ ८ ॥

मालतीति ॥ हे मालति, हे मल्लिके, हे जाति, हे यूथिके । मां लक्ष्मीं लतति वेष्टयतीति मालती । मल्लते सुगन्धादिकं धारयतीति मल्लिका । जायत इति जाती, सुखजनकत्वात् सफलजन्मवती । यूथमस्त्यस्या असौ यूथिका । एवम्भूता अन्वर्थसञ्ज्ञाः । यूयं चतस्रो लता अतिसुगन्धपुष्पा भगवत्प्रिया, अतो भवतीर्वयं पृच्छामः । वो युष्माभिः कच्चिद् दृष्टः । न दृष्ट इति न वक्तव्यम् । यतो वो युष्माकं हस्तकमलस्पर्शेन प्रीतिमुत्पादयन् यातः । करस्पर्शजन्यस्यात्यन्तविकासस्य दर्शनात् । ननु तस्यास्मत्स्पर्शने किं प्रयोजनमिति चेत् तत्राहुः ॥ माधवः ॥ लक्ष्मीपतेः सर्वदा तत्सहितस्य तदलङ्कारार्थं पुष्पावचय आवश्यक इति भावः । अहो एता अल्पाः फलरहिता लक्ष्मीशमानिन्यो न कथयिष्यन्तीति मत्वाऽन्यत्र गताः । मालतीजात्योरवान्तरभेदा यूथिका, जुहीति ख्याता ॥ अनभिज्ञापक्षे, अहो सौभाग्यातिरेकवत्यो नम्रस्वभावाः सर्वसुखकरा विकसितवदनाः परोपकारिण्यो भविष्यन्तीति मत्वा मालत्यादिकाः पृच्छन्ति ॥ मालतीति ॥ हे मालत्यादयः, कच्चिद् वोऽदर्शि, भवतीनां न केवलं दर्शनमात्रमपि तु स्पर्शोऽपि जात इत्यनुमीयत इत्याहुः ॥ प्रीतिमिति ॥ यतो माधवः परमशोभाधीशत्वात् स्पर्शेनापि शोभाजनकः । स्पर्शश्च पुष्पप्रियत्वात्तस्यावश्यमेव जातः स्यात् । माधवो वसन्त इवेति श्लेषेण तद्वियोगो भवतीनामप्यस-

ह्योऽतस्तुल्यदुःखत्वादवश्यं वदतेति भावः । अहो एताः करस्पर्शेन निवारणं कृत्वा गतः स्यादतस्तद्भयान्न कथयन्तीति मत्वाऽन्यत्र याताः ॥ मानिनीपक्षे, अहो इमा मालत्यादयः सौभाग्यादिगुणैरस्मृतमाना अत एताः प्रष्टव्या इत्याशयेन पृच्छन्ति ॥ मालतीति ॥ यतो भवत्यः पुष्पिण्योऽतः करस्पर्शेन वः प्रीतिं जनयन् यात इति सनर्मेर्ष्यां व्यञ्जयन्ति । परं त्वेतावता भवतीभिर्गर्वो न विधयो, यतः स न कस्या अपि पतिः, किन्तु मायाः शोभामात्रस्य धवः स्वामी। तस्मादस्मत्पक्षपातिन्यो यूयमवश्यं कथयतेति भावः । अहो सद्यःस्पर्शोत्थाऽखर्वगर्ववत्य एता न ब्रुवत इति मत्वाऽन्यत्र प्रस्थिताः ॥

निवृत्तिपक्षे, मालत्यादिस्थानीयानि यानि श्रोत्रत्वग्रसनघ्राणाख्यानीन्द्रियाणि पृच्छन्ति ॥ मालतीति ॥ वः प्रीतिं विषयोपलब्धिसुखं तत्प्रकाशेन जनयन् यातः । प्रतीत्या विषयं व्याप्य स्थितः । ननु व्यापकस्य तस्य कथं गमनमितिचेत् तत्राहुः ॥ माधवः ॥ मायाः प्रमावृत्तेर्धवः स्वामी । तथाच प्रमाणचैतन्यस्य गमनादिकमिति भावः ॥ ८ ॥

अहो एते आम्रादयः परोपकारशीलास्तपस्विनस्तीर्थसेवापराश्चेति मत्वा तान् पृच्छन्ति ॥

चूतप्रियालपनसासनकोविदार-
जम्ब्वर्कबिल्वबकुलाम्रकदम्बनीपाः ॥
येऽन्ये परार्थभवका यमुनोपकूलाः
शंसन्तु कृष्णपदवीं रहितात्मनां नः ॥ ९ ॥

चूतेति ॥ चूताम्रयोर्मधुराऽम्लफलत्वेन भेदः । नीपो धूलि-

कदम्बो बृहत्पुष्पः। कदम्बः क्षुद्रपुष्पोऽतिसुगन्धः। प्रियालः शालभेदः। पनसः कटहर इति ख्यातो बृहत्फलः। असनः पीतशालः। कोविदारः काचनारभेदः। अर्कः क्षुद्रवृक्षोऽपि गोपेश्वरप्रियत्वात् प्रश्नार्हः। च्योतति रसमिति चूतः। च्युतिर् क्षरणे। प्रीणातीति प्रियालः। प्रीञ् तर्पणे। पनाय्यते स्तूयत इति पनसः। अस्यति परदुःखमिति असनः। असु क्षेपणे। कुं भूमिं विदारयतीति कोविदारः। दृ विदारणे। परोपकारार्थं झटिति भूमिं निर्भिद्य निःसृतः। जमति परदुःखमिति जम्बूः। जमु अदने। अर्कः भानुवज्जाड्यहरः। बिलति परदुःखमिति विल्वः। बिल भेदने। वङ्कते अवगच्छति परदुःखमिति वकुलः। वकि गत्यर्थः। अम्यते स्वदुःखनिरासार्थं जनैरित्याम्रः। अम गत्यादौ। कपति हिनस्ति परदुःखमिति कदम्बः। नयति सुखं प्रापयतीति नीपः। णीञ् प्रापणे। एवम्भूता हे चूतादयः। अन्ये च ये मधूकादयः परार्थभवकाः परार्थमेव भवो जन्म येषां ते। भविका इति पाठे भविकं मङ्गलम्। फलाद्युत्कर्षोऽपीत्यर्थः। तत्रापि, यमुनोपकूलाः॥ यमुनायाः कूलसमीपे वर्तमानाः। तीर्थनिकटवर्तित्वात् सत्यवादिनः। नोऽस्मभ्यं कृष्णस्य सदानन्दरूपस्य भगवतः पदवीं मार्गं शंसन्तु कथयन्तु स्वस्य करुणापात्रतामाविष्कुर्वन्ति॥ रहितात्मनाम्॥ काश्चिद्गृहादिरहिताः। अतस्तच्छंसनम्। तत्रापि मृषा भाषणं न विधेयम्। यतो, यमुनोपकूलाः। यमुनासन्निधौ वर्तमाना इति शपथो व्यज्यते। शंसनेनात्मप्रदानं कुरुतेति भावः। अत्र दर्शनं सिद्धवत्कृत्य मार्गं पृच्छन्ति। अहो एते समाधिनिष्ठा न शृण्वन्त्यतो न किञ्चिदपि वदन्तीति निवृत्ताः॥ अनभिज्ञापक्षे, कृष्णस्यास्मच्चित्तरत्नमञ्जूषामाकृष्य गतस्य चोरचक्रवर्तिनः पदवीं शंसन्तु। व्यञ्जयन्तु। ननु स्वयमेवान्विष्य तस्य

मार्गो निश्चेतव्य इत्याशङ्क्याहुः ॥ रहितात्मनाम् ॥ विरहव्याकुलतयाऽन्वेषणसमर्थसमाहितमनोरहितानाम् । कृपया भवन्त एव वदन्तु ॥ अहो एते तीर्थवासिनोऽतोऽत्यन्तकठोरहृदयाः, अतो न कथयिष्यन्तीति ततो निवृत्ताः ॥ मानिनीपक्षेऽप्येवम् ॥

निवृत्तिपक्षे चूतादिस्थानीयानि पञ्चकर्मेन्द्रियाणि, जम्ब्वादिस्थानीयान् पञ्चप्राणान्, कदम्बनीपौ चित्ताऽहंकारौ पृच्छन्ति ॥ चूतेति ॥ ये चाऽन्ये विषयाः परार्थभवका आत्मशेषभूता यमुनास्थानीयमायाप्रदेशस्थिताः । नोऽस्माभिः श्रुतिभी रहितात्मनामस्मद्विचारविधुरचित्तानाम् । कृष्णस्य परमात्मनः पदवीं मार्गं शंसन्तु स्वप्रकाशकस्य प्राप्त्युपायं सूचयन्तु । तथाच तदनुमापका भवन्तो, न तु तदवभासका इति भावः ॥ ९ ॥

एवमतिविह्वलमानसाः प्राप्तात्यन्तदैन्या मार्गकथनप्रार्थनयोग्यमार्गस्मरणाद् भूमीनिहितदृष्टयस्तस्याः सर्वत्र सत्त्वेनावश्यं तद्दर्शनं सम्भाव्याहुः ।

किं ते कृतं क्षिति तपो बत केशवाङ्घ्रि-
स्पर्शोत्सवोत्पुलकिताङ्गरुहैर्विभासि ॥
अप्यङ्घ्रिसम्भव उरुक्रमविक्रमाद्वा
आहो वराहवपुषः परिरम्भणेन ॥ १० ॥

किमिति ॥ हे क्षिति, ते त्वया किं कीदृशनामधेयं तपः कृतम् । यद्यप्यस्माभिरपि तपः कृतमेव, तथापि तादृशफलानुकूलं न कृतमऽतो महान् खेद इत्याशयेनाहुः ॥ बतेति ॥ यतो या त्वं केशवस्याङ्घ्रिस्पर्शेनोत्सवो यस्याः सा । कश्च अश्च ईशश्च केशाः ब्रह्मविष्णुशिवास्तेऽस्य वश्यतया सन्तीति केशवः । केशान्निया-

मक्तया वाति गच्छतीति वा । तथाच तादृशस्य परमात्मनोऽङ्घ्रि-स्पर्शोत्सवो, नाल्पस्य तपसः फलमिति भावः । एतज्ज्ञापकं चिह्न-माहुः ॥ अङ्गरुहैरुत्पुलकिता विभासि विशेषेण शोभसे । तत्र वि-शेषं पृच्छन्ति ॥ अपि सम्भावनायाम् । किमयमुत्सवोऽङ्घ्रिस-म्भवः । सम्प्रति तवैकदेशे चरणस्पर्शसम्भूतः । यद्वा नैतावत्, किन्तु पूर्वमेवोरुक्रमस्य त्रिविक्रमस्य वामनस्य पदा सर्वाक्रमणाद-धुना भगवच्चरणस्पर्शेनासमन्तात् । अथवा, नैतावदेवाऽपि तु त-तोऽपि पूर्वं वराहस्य वपुषा परिरम्भणेनालिङ्गनेनेदानीमङ्घ्रिस्प-र्शात् स्पृष्टेन । तथाचास्मत्साजात्यं भवत्या अप्यतस्तं पश्यन्ती त्वं दर्शयेति भावः ॥ अनभिज्ञापक्षे, अहो किमर्थं तीर्थवासिनोऽमी नि-घ्नन्ते, यस्तमवश्यं जानाति स प्रष्टव्य इत्युक्तवतीनां मध्ये काचि-त् क्षितिं सूचयामास, ततः सर्वास्तामाहुः ॥ किमिति ॥ हे क्षिति, त्वया किं तपः कृतम् । पुलकितैरङ्गरुहैरङ्कुरैः केशवस्याभिरूपाः केशा यस्य तस्य परमसुन्दरस्य कृष्णस्यास्याङ्घ्रिस्पर्शोत्सवा वि-भासि । तादृशोत्सवजनके तपसि पृष्टे, अदत्तोत्तरां तामुपलक्ष्य स्वय-मेवोत्प्रेक्षन्त्योऽपि अयमङ्घ्रिसम्भव उत्सव उरुक्रमविक्रमजनित-पीडारूपतपसो वा, आहोस्विन्महावराहवपुषः परिरम्भणजनितव्य-थारूपेण तपसा । यद्वा, तच्चरणस्पर्शजनितपुण्याद्वा । किं वा तत्परि-रम्भणजनितपुण्येन । तथाच तत्पादस्पर्शादिरहितत्वाद् दुर्भगानाम-स्माकं, तत्पादस्पर्शमनुभवन्ती सुभगा त्वं करुणया तं प्रदर्शयेति भावः ॥ मानिनीपक्षेऽप्येवम् ॥

निवृत्तिपक्षे, अथ क्षितिस्थानीयं मनः पृच्छन्ति ॥ किमि-ति ॥ हे क्षिते, त्वया किं तपः=आलोचनं कृतम् । विचारस्वरूप-माविष्कुर्वति । केशान् ब्रह्मविष्णुरुद्रान् वष्टि इच्छति सृष्ट्याद्य-र्थमिति केशवः परमात्मा । तस्याङ्घ्रिरंश इवांशो जीवात्मा । मयै-

वांशो जीवलोके जीवभूतः सनातनः * इत्युक्तत्वात् । तस्य स्प-र्शेनोत्सवो यस्याः सा पुलकितैर्हर्षितैरङ्गरुहैः सङ्कल्पविकल्पात्म-वृत्तिभिर्विभासि । स उत्सवः किं यथोक्ताङ्घ्रिस्पर्शसम्भवः । यद्वा उरुक्रमस्यान्तर्यामिणो विक्रमात् प्रेरणारूपपराक्रमात् । आहोस्विद् वराहस्य वपुषश्चेतनस्वरूपस्य परिरम्भणेनेति ॥ १० ॥

एवं व्याकुलमानसा अकस्माद् हरिणीं दृष्ट्वा तामेव पृच्छन्ति ॥

अप्येणपत्न्युपगतः प्रिययेह गात्रै-
स्तन्वन् दृशां सखि सुनिर्वृतिमच्युतो वः ॥
कान्ताङ्गसङ्गकुचकुङ्कुमरञ्जितायाः
कुन्दस्रजः कुलपतेरिह वाति गन्धः ॥ ११ ॥

अपीति ॥ हे कृष्णसारपत्नि, अत एव, हे सखि, तत्पतित्वेन समनेत्रत्वेन भीरुत्वादिधर्मसाधर्म्येण भवत्या अस्मत्सखित्वम् । अतो वो युष्माकम् अपि किम् उपगतो मिलितः । इहास्मिन् वने प्रियया सह गच्छन् सुन्दरैर्मुखबाह्वादिभिः स्वगात्रैर्भवतीनां दृशां सुनि-र्वृतिपरमसुखं तन्वन् विस्तारयन् । यतोऽच्युतः परमात्मा तदुप-मो नेत्रादेः परमानन्दजनक एवेति भावः । ननु प्रियासाहित्यं क-थमवगतमित्याशङ्क्याहुः ॥ कान्तेति ॥ कान्ताया अङ्गेन कुङ्कुम-रञ्जितायाः कुलपतेर्गोपीसमुदायस्वामिनः स्रजो मालाया गन्ध इह वाति आगच्छति । तथाऽनुभूतगन्धप्रत्यभिज्ञया प्रियासाहित्यं निश्ची-यत इति भावः । अत्रैणपत्नीत्यनेन, पत्युर्नो यज्ञसंयोगे इति स्मर-णादेणानां जन्मान्तरे याज्ञिकत्वसूचनेन तत्पत्नीनां यज्ञपत्नीत्वं सूचितमिति दृष्टप्रशंसा । उपगत इति तद्भाग्यप्रशंसा । दृशामि-त्यादिना तन्नेत्रप्रशंसा । अच्युत इति परमानन्दप्राप्तियोग्यता । कान्तेत्यादि दृश्यप्रशंसा । कुन्दस्य शुभ्रतया कुङ्कुमशोभायोग्यता ।

इहेति स्थानस्य गन्धवैशिष्ट्यम् । नातीति तत्संसर्गेनातप्रशंसेति व्यञ्जमाला ॥ अनभिज्ञापक्षे, अहो पुराकृततपःप्रभावात् प्रियचरणसरोजैरनिशंप्राप्तसङ्गतिगर्ववती क्षितिरियं न वदति, यद्वा प्रत्युत्तरं दातुमसमर्था जडा न प्रष्टव्या, किन्तु चेतनः कश्चित् प्रष्टव्य इति चिन्तयन्त्योऽकस्मात् काञ्चिद्धरिणीं दृष्ट्वाहुः ॥ हे सखि एणपत्नि, अच्युतः किं त्वयोपगतः संप्राप्तः । तत्र दृष्टिगोचर एव सम्प्रति क्वचिद्वर्तते, न तु त्वत्तो वियुक्त इति सूचयितुम् अच्युत इत्युक्तम् । तत्र हेतुमाहुः ॥ प्रिययेति ॥ ततः स्वभावादेवाग्रे प्रचलितां तामवलोक्याहो इयं— दृष्ट इति किं ब्रवीमि, तं दर्शयाम्येव, मत्पृष्ठत आगम्यतामिति सूचयन्त्यग्रतो गच्छन्ती ग्रीवां परावृत्य मुहुरस्मान् पश्यति । तत एषैवात्र निर्दये वृन्दावने दयावतीति तामनुगच्छन्त्यो दैवात् क्वापि गतां तामदृष्ट्वा परस्परं पृच्छन्ति स्माऽहो संप्रति हरिणी न दृश्यते, क्व गतेति । ततः काचिदब्रवीदत्रैव कृष्णो वर्तते । सा तु तद्भयात् सूचकत्वदोषापलापार्थं क्वचित् तिरोहितेति श्रुत्वा तत्रैव स्थिता, दैवादागतसौरभ्यमाघ्रायाहो सत्यं सत्यवदुक्तमेव तत्त्वमिति सहर्षं पुनराहुः ॥ कान्तेति ॥ गोपीकुलरमणस्य तस्य गोपीसमुदायं विहायैकयैव कयाचित् कान्तया रममाणस्यान्यायं पश्यतेति कुलपतिपदाशयः ॥ मानिनीपक्षे, भगवान् राधया सहान्तर्हित इति पूर्वं स्पष्टमनुक्तमर्थं सपत्नीनां मुखेन मध्ये व्यञ्जयन्ति तस्याः सौभाग्यातिरेकं द्योतयितुम् । तत्र क्षितेरप्यलब्धोत्तराः, अहो सर्वदास्मत्प्रार्थनापरायणस्याऽस्मान् विहायैकाकिनो गमनं कथं जातमिति विचारपराणां मध्ये काचिदवोचत् । सत्यमेव कयाचिद् धूर्तया नीतः स्यादिति । ततश्च संदिहाना एव पर्यटन्त्यस्तादृशं गन्धमाघ्राय कयाचिन्नीत इत्यनुमाय दैवादागतां मृगीमेवावलोक्याऽहो इयं श्रोत्रनेत्रादिमती

ज्ञास्यतीति मत्वा तां पृच्छन्ति ॥ हे सखि, एणपत्नि, अच्युतो वो युष्माकं समीपं गतः किम् । ननु प्रत्यहं गच्छति, किमाश्चर्य्यमित्याशङ्क्याहुः ॥ प्रियया ॥ यतो भवद्दृशामलौकिकानन्ददतत्प्रीतिर्दृश्यते इत्याहुः ॥ गात्रैरिति ॥ ननु प्रियया सहैव गत इति कथं ज्ञात इतिचेत् तत्राहुः ॥ कान्तेति ॥ सैव प्रिया, न वयम् । तयैवाऽप्यच्युतोऽस्माकं तु विहाय गतः । कुलपतेस्तस्य वैषम्यं नोचितमितीर्ष्या व्यज्यते । यद्वा, इहास्मिन् वने वो दृशां गात्रैः सुनिर्वृतिं तन्वन् प्रियया सह सङ्गतः किं वर्तते । नेति न वक्तव्यमित्याशयेनाहुः ॥ कान्तेति ॥

निवृत्तिपक्षे, अथ मृगीस्थानीयां बुद्धिं पृच्छन्ति ॥ अपीति ॥ हे सखि बुद्धे वो दृशां वृत्तीनां गात्रैस्तत्र वृत्त्यवच्छिन्नचेतनरूपैर्गात्रैः सुनिर्वृतिं तन्वन् प्रियया ब्रह्मप्रतिपादिकया तत्त्वमस्यादिरूपया मुख्यया श्रुत्या स उपगतः सङ्गत, इहान्तःकरणे वर्तते किम् । यतः कान्तस्य परमात्मनोऽङ्गमङ्गाय प्रतिपाद्यप्रतिपादकसंबन्धाय कुचयोस्तत्स्थानीयोपासनानिष्कामकर्मणोः कुङ्कुमेन तज्जनितविविदिषया रञ्जितायाः कुलपतेः क्षेत्रस्वामिनश्चिदात्मनस्तत्सम्बन्धिन्याः कुन्दस्रजस्तत्स्थानीयशुद्धप्रत्ययमालाया गन्ध इह वाति शान्त्यादिरूपसुगन्धयुक्ता प्राणचेष्टाऽत्र दृश्यते इत्यर्थः ॥ ११ ॥

ततो दैवात् क्वापि गतायां हरिण्यां फलभारेण नम्राँस्तत्रत्याँस्तरूनवलोक्य, भगवन्तं दृष्ट्वा प्रणता इति मत्वा, प्रियासहितस्य गतिविलासान् सम्भावयन्त्यस्तान् पृच्छन्ति ।

बाहुं प्रियांस उपधाय गृहीतपद्मो
रामानुजस्तुलसिकालिकुलैर्मदान्धैः ।
अन्वीयमान इह वस्तरवः प्रणामं

किं वाऽभिनन्दति चरन् प्रणयावलोकैः ॥ १२ ॥

बाहुमिति ॥ प्रियायाः स्कन्धे उपधाय द्वितीयहस्तेन गृहीतं पद्मं येन स रामानुजः—अग्राह्यनामाऽस्मत्पतिः, मदान्धैस्तुलसिकासग्गन्धिभ्रमरसमुदायैरन्वीयमानोऽनुगम्यमानः । अनेन प्रियासाहित्यमनुमीयते । तुलसिकां विहाय तदङ्गलिप्तोत्कृष्टसौरभद्रव्यसुगन्धलोभादनुगच्छन्तीति । तथेह वने चरन् हे तरवः प्रणामं च प्रणयावलोकैः प्रेमपूर्वकैरवलोकनैरभिनन्दति किं, न वाभिनन्दतीति प्रश्नः । यद्वा तथा चरन् अभिनन्दति आनन्दं प्राप्नोति, वः प्रणामं चाभिनन्दत्यऽनुमोदति किम् ॥ अनभिज्ञापक्षे तादृशं गन्धमाघ्राय तत्रैव स्थितास्तत्रत्यान् वृक्षान् पृच्छन्ति ॥ हे तरवः किमर्थं प्रणामं कुरुत कृष्णप्रसादार्थमितिचेत्, स किमिह चरन् वः प्रणाममभिनन्दति । यद्यपि भवन्तः साधवः परोपकारशीला अनुकम्प्यास्तथापि भवदीयप्रणामं नाभिनन्दतीति वयं जानीमः । कुत इत्याशङ्क्य तस्यान्यत्रासक्तचित्तस्य कार्यान्तरव्यग्रत्वान्नास्त्यवलोकनाऽवकाश इति सासूयमाहुः ॥ बाहुं वामभुजं प्रियास्कन्धे उपधाय तत्कोमलत्वमालोच्य । किञ्च, राधायास्तन्मुखगन्धेनोत्पतिष्णूनां भ्रमराणां निवारणार्थमेव दक्षिणकरगृहीतपद्मः ।

तथाचादौ चरन्—तद्गतिविलासव्यग्रः, पुनश्च तत्सेवैकतानमानसश्चाऽतो न तस्यान्यत्र दृष्टिप्रसारणावकाश इति भावः । एतेन, ननु तामेवास्मान् दर्शयितुमागतः कथमस्मत्प्रणामं नाभिनन्देदित्याशङ्कापि निरस्ता । तेन निवारिता एवएते भ्रमरा अनुगच्छन्तीत्याहुः ॥ तुलसिकेति ॥ ननु भ्रमरकुलानामेवानुपदं गच्छतीत्याशङ्क्याहुः ॥ मदान्धैरिति ॥ मदोन्मत्ता मदान्धैरनुगम्यन्ते, भव्यजनैस्तु मदान्धा नानुगन्तुमुचिता इति भावः ॥ रामानुज इति कठोरतामभिव्यञ्जयन्ति ॥ अभिनन्दतीति वर्तमानापदेशाच्छाखाना-

मनुत्थानाच्च क्वचिद्दर्शनयोग्यस्थाने स्थित इति सूचयन्ति । अभिनन्दनाक्षेपाच्च किमर्थं नम्रीभूताः, शाखा उत्थाय समाहिताः सन्तोऽस्मच्चितचोरं स्वाज्ञाकरं निःशङ्कं सूचयतेति व्यञ्जयन्ति ॥

निवृत्तिपक्षे, वृक्षस्थानीयान् संघातान् पृच्छन्ति ॥ बाहुमिति ॥ प्रियाया मायाया अंसे बाहुं निधाय तामधिष्ठाय गृहीतं पद्मं जगदुपादानभूतं पुष्कररूपं येन सः । यतो रामा माया अनुजा अधीना यस्य सः । लसि=प्रकाशशीलं कं सुखं तदीयमकरन्दास्वादनपरैः परमहंसलक्षणाऽलिकुलैर्ब्रह्मानन्दलक्षणमदेनान्धैर्विषयदर्शनरहितैरनुगम्यमान इह संघातेषु चरन्, हे तरवः प्रणामं नमस्कारादिलक्षणकर्म किमभिन्दति । तथाचाभिनन्दनकर्तारमात्मानं भवन्तः किं जानन्तीत्यर्थः ॥ १२ ॥

अहो किमर्थं तरवः पृच्छ्यन्ते । स्वस्त्रीसन्निधौ परस्त्रीभिः सह भाषणं न करिष्यन्तीत्यत एताः स्वल्पाः प्रष्टव्या इति काश्चिदाहुः

पृच्छतेमा लता बाहूनप्याश्लिष्टा वनस्पतेः ॥
नूनं तत्करजस्पृष्टा बिभ्रत्युत्पुलकान्यहो ॥ १३ ॥

पृच्छतेति ॥ हे सख्य इमा दृश्यमाना, लताः पृच्छत । ननु यथा स्वसन्निधौ स्वपतीनामस्माभिः सह भाषणं दुर्घटं तथा स्वपतिसंगतानामासां हृदे मनसां गतिर्दुर्घटेत्याशङ्क्याहुः ॥ बाहूनिति ॥ यद्यपि वनस्पतेः शाखालक्षणान् भुजानाश्लिष्टास्तथापि नूनं निश्चयेन तस्य श्रीकृष्णस्य करजैर्नखैः स्पृष्टा यतः पुलकानि बिभ्रति । अहो सर्वरसोपमर्दी अस्मत्प्रेष्ठरसः । स्वपतिरसाविष्टानामपि तत्स्पृहादर्शनात् । न हि स्वपतिसंगतावीदृक्पुलकोद्गमः संभवतीति भावः ॥ सममेतादितरपक्षयोरपि ॥

निवृत्तिपक्षे, हे सख्यो वनस्पतेः संघातलक्षणस्य वृक्षस्य वि-

षयलक्षणान् बाहूनप्याश्लिष्टा इमा लतास्तत्स्थानीयरागद्वेषादय इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितावित्युक्तत्वात् । नूनं तस्य चिदात्मनः कराः प्रत्ययास्तव जातेन प्रादुर्भूतेन चेतनेन स्पृष्टा अहो उत्पुलकानि बिभ्रति सचेतनतयाऽवभासन्त इत्यर्थः ॥ १३ ॥

उन्मत्तकवत् पप्रच्छुरित्येतव प्रपञ्चितं, तदुपसंहरन्, रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिका इति यदुक्तं तत्प्रपञ्चयितुमुपक्रमते

इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणकातराः ॥
लीलाभगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकः ॥ १४ ॥

इतीति ॥ इत्येवंप्रकारेणोन्मत्तवचो गोप्यः । ह्रस्वश्छान्दसः । यद्वा उन्मत्तस्य वच इव वचो यासां ताश्च ता गोप्यश्च । यद्वा, उन्मत्तवद् एतावत, ततो गोप्यः कृष्णान्वेषणार्थकातरा अतिविह्वला भगवतस्तास्ता लीला अनुचक्रुः— अनुकृतवत्यः । यतस्तदात्मिकाः । तस्मिन् गाढासक्त्या तदभेदमापन्ना इत्यर्थः । यद्वा तस्मिन् श्रीकृष्णे आत्मा चित्तं यासां ताः । तथाच तीव्रध्याने तदात्मकत्वस्फूर्त्या कृष्णानुकरणम् । तदासक्तिप्राबल्याद्वा । पूतनाद्यनुकरणं तु कृष्णविषयकतद्धेतुकभयादिजनितपूतनाद्यात्मकत्वस्फूर्त्या व्याघ्रादिमदोन्मत्तस्य व्याघ्राद्यनुकरणवत् । अतो न प्रेमविरुद्धभावसंकरः । यद्वा प्रतिकूलानामनुकरणं, योगमायैव तन्मध्ये गोपीस्वरूपा भूत्वा तत्तल्लीलासिद्ध्यर्थं चकार । यद्वा तत्तल्लीलाविशिष्टे भगवति अन्तराविर्भूते बहिस्तल्लीलादर्शनस्य साक्षादसंभवात् तथानुकरणं कृतवत्यः । तत्रोत्कृष्टाः कृष्णरूपं, मध्यमा बलरामादिरूपं, निकृष्टाः पूतनादिरूपम् । कृष्णस्य सदानन्दरूपस्य परमात्मनोऽन्वेषणे कातरा व्यग्राः । कातर्यं प्राप्ता इति वा । ततः षड्गुणैश्वर्यसम्पन्नस्य परमात्मनः संबन्धिन्यस्तास्ता लीलां हि प्रसिद्धा अनुचक्रुः ।

भगवत्कृतं तत्तल्लीलानुकरणं वर्णयामासुः । वाच्यवाचकयोरभेदादनुचक्रुरित्युक्तमिति सूचयितुमाह ॥ तदात्मिकाः ॥ द्वे वाव ब्रह्मणो रूपे परं चापरं चेत्यादिश्रुतेः ॥ १४ ॥

अथैतद्विवृणोति ।

कस्याश्चित्पूतनायन्त्याः कृष्णायन्त्यपिबत् स्तनम् ॥
तोकायित्वा रुदत्यन्या पदाहन् शकटायतीम् ॥ १५ ॥

कस्याश्चिद् गोप्याः पूतनावदाचरन्त्याः काचित् कृष्णवदाचरन्ती अहं कृष्ण इत्युक्तवती, तां कृष्णबुद्ध्याङ्के कृतवत्यास्तस्याः स्तनमपिबत् । यावच्छक्यते तावदनुक्रियते । अतोऽसुपानसामर्थ्याभावात् स्तनपानमात्रमुक्तम् । तस्यापि द्वेषभावनाभावान्मरणाभावः । अनुकरणात् तोकायित्वा तोकवदाचरित्वा तोकमात्मानं मत्वेति वा । तोकादात्मानं वृत्वेति वा । शकटायतीं शकटवत् स्थितां पदा चरणेनाऽहन् ॥

निवृत्तिपक्षे काचित् पूतनावदाचरणं तं परमात्मानं वर्णयामास । काचित् कृष्णरूपेण स्तनपानमनुकुर्वती काचित् तोकरूपमनुकृत्य रोदनमनुकुर्वच्छकटरूपापन्नमात्मानं चरणेन हननमनुकुर्वन्तं निरूपयामासेत्यर्थः । एवमग्रेऽपि ॥ १५ ॥

दैत्यायित्वा जहारान्यामेका कृष्णार्भभावना ॥
रिङ्गयामास काप्यङ्घ्री कर्षती घोषनिःस्वनैः ॥ १६ ॥

अन्या तृणावर्तदैत्यवदात्मानं कृत्वा कृष्णार्भं तस्य बाल्यं भावयन्तीमपरां जहार । कापि अङ्घ्री कर्षती घोषनिःस्वनैरिङ्गयामास चालितवती ॥ १६ ॥

तत्कृतं वृन्दावनविहारलीलानुकरणमाह ॥

कृष्णरामायिते द्वे तु गोपायन्त्यश्च काश्चन ॥
वत्सायतीं हन्ति चान्या तत्रैका तु बकायतीम् ॥ १७ ॥

द्वे गोप्यौ कृष्णरामायिते कृष्णरामवज्जाते । काश्चन गोपायन्त्यो गोपबालानुकरणं कृतवत्यः । काश्चन वत्सरूपाश्च जाता इत्यादिद्रष्टव्यम् । तत्र वत्सासुरवदाचरन्ती काचिदन्या बलरामरूपा, प्रलम्बो निहतोऽनेन वत्सको धेनुकादयः * इत्यनुसारेण हन्ति हननमनुकरोति स्म । काश्चिद्बकवदाचरन्तीमन्या कृष्णरूपा हन्ति स्म ॥ १७ ॥

अथ तत्कृतं गवाह्वानादिलीलानुकरणमाह ।

आहूय दूरगा यद्वत् कृष्णस्तमनुर्वततीम् ॥
वेणुं क्वणन्तीं क्रीडन्तीमन्या शंसन्ति साध्विति ॥ १८ ॥

आहूयेति ॥ तत्र काश्चन गोरूपा जाताः काश्चन गोपालरूपास्तत्र यद्वत् कृष्णो दूरगा आह्वयन् वेणुक्वणनं करोति तद्वत् तं कृष्णमनुकुर्वती दूरगा गोरूपा गोपीराहूय वेणुं क्वणन्ती क्रीडन्ती काश्चिदन्या गोपरूपाः साध्विति शंसन्ति स्म ॥ १८ ॥

कस्यांचित् स्वभुजं न्यस्य चलन्त्याहाऽपरा ननु ॥
कृष्णोऽहं पश्यत गतिं ललितामिति तन्मनाः ॥ १९ ॥

गोपरूपायां कस्याञ्चिदऽपरा कृष्णरूपा भुजं निधाय चलन्ती आह, ननु कृष्णोऽहं, ललितां मदीयां गतिं, हे गोप्यः पश्यतेति । यत स्तास्मिन्मनो यस्याः सा अतस्तदावेशात् तद्रूपा जातेति भावः । यद्यपीयं लीला पूर्वमनुक्ता तथाप्यत्र तदनुकरणस्यो-

कृत्वाज्जातेति द्रष्टव्यम् ॥ १९ ॥

मा भैष्ट वातवर्षाभ्यां तत्त्राणं विहितं हि वः ॥
इत्युक्त्वैकेन हस्तेन यतन्त्युन्निदधेऽम्बरम् ॥ २० ॥

अपरा कृष्णरूपा, भीता इवावस्थिता गोपादिरूपाः, हे गोपादयो वातवर्षाभ्यां भयहेतुभूताभ्यां मा भैष्ट । ताभ्यां वातवर्षाभ्यां मया त्राणं विहितमित्युक्त्वा यत्नवती एकेन हस्तेनाऽम्बरमुत्तरीयं वस्त्रमुन्निदधे ऊर्ध्वं धृतवती ॥ २० ॥

आरुह्यैकां पदाक्रम्य शिरस्याहापरा नृप ॥
दुष्टाऽहे गच्छ जातोऽहं खलानां ननु दण्डधृक् ॥ २१ ॥

एका कृष्णरूपा कालियरूपां काञ्चिच्चरणेनाक्रम्य तस्याः शिरसि आरुह्याह—हे दुऽष्टाहे, इतो गच्छ । ननु निश्चयेन खलानामहं दण्डधृग् जातः । शिरःस्थितिर्वृक्षशाखामालम्ब्य, अन्तःकरणे भगवत आवेशान्निरालम्बतयैव वा । यथा तदीययात्मनः शक्त्या वेशान्तरस्य नृपस्येति संबोधनाशयः ॥ २१ ॥

तत्रैकोवाच गोपाला दावाग्निं पश्यतोल्बणम् ॥
चक्षूंष्याश्वपिधध्वं वो विधास्ये क्षेममञ्जसा ॥ २२ ॥

तत्र तासु मध्ये एका कृष्णरूपा गोपरूपा उवाच । हे गोपाः उल्बणं दावाग्निं, पश्यत शीघ्रं चक्षूंषि पिधध्वम् । निश्चयेनाऽञ्जसा क्षेमं विधास्ये । अत्र विरहेण दावाग्निदर्शनं, भावनया वा । अन्यासां तु तस्या वस्तुतो भगवद्भावभानाद् ततस्त्राणप्रार्थना । एवमेव वातवर्षस्थलेऽपि । अत्यन्तमत्तानामेव भगवद्भावोदयात् ॥ २२ ॥

बद्धाऽन्यया स्रजा काचित् तन्वी तत्र उलूखले ॥

भीता सुदृक् पिधायास्यं भेजे भीतिविडम्बनम् ॥ २३ ॥

तत्र तासु मध्ये अन्यया यशोदारूपया काचित् कृष्णरूपा तन्वी अत्यन्तसुकुमारविग्रहा मालया उलूखलरूपायां कस्यांचिद्बद्धा भीता सुष्ठुदृष्टियुक्ता, सुनयनमास्यं वा हस्तेनाच्छाद्य भीत्यनुकरणं कृतवती ॥ २३ ॥

एवमनुकरणं कृत्वा पुनरपि तथैव पृच्छमाना भगवतः पदानि ददृशुरित्याह ।

एवं कृष्णं पृच्छमाना वृन्दावनलतातरून् ॥
व्यचक्षत वनोद्देशे पदानि परमात्मनः ॥ २४ ॥

एवमिति ॥ तथाच गाढोन्मादे भगवल्लीलानुकरणोत्साहे प्रश्न इत्येवं भ्रममाणानां तासां भगवत्प्रसादेन समाहिततामाप्तौ तच्चरणदर्शनं जातमित्याशयेनाह ॥ व्यचक्षतेति ॥ परमात्मनः परमेश्वरस्य श्रीकृष्णात्मनावतीर्णस्य परमपेष्ठस्येति वा । कस्मिँश्चिद् वनप्रदेशे भूमौ संलग्नानि पदानि दृष्टवत्यः ॥

निवृत्तिपक्षे, चित्तैकाग्रतासिद्ध्यर्थं भगवत्कृतलीलानुकरणं वर्णयन्त्यः पुनस्तदन्वेषणप्रकारं बोधयन्त्यो, वनोद्देशे अन्तःकरणलक्षणस्य सात्त्विकप्रदेशे पदानि चिदाभासलक्षणानि चिल्लक्षणपदज्ञापकानि तत्प्रतिकृतिभूतानि व्यचक्षत तदवलोकनं निरूपयामासुरित्यर्थः ॥ २४ ॥

तानि दृष्ट्वा परस्परमाहुः ॥

पदानि व्यक्तमेतानि नन्दसूनोर्महात्मनः ॥
लक्ष्यन्ते हि ध्वजाऽम्भोजवज्राऽङ्कुशयवादिभिः ॥ २५ ॥

एतानि पदानि स्पष्टं नन्दसूनोर्महात्मनः सान्ति । परमात्मनो

नन्दसूनुत्वेनाऽवतीर्णत्वात् तत्पदानां सर्वविलक्षणत्वादिति भावः । यद्वा, नारायणसमो गुणैरित्युक्तत्वान्महात्मनः सर्वोत्कृष्टस्य । हि यतो ध्वजादिभिर्लक्ष्यन्ते ध्वजादीनां धारणास्थानाद्युक्तं स्कान्दे । दक्षिणस्य पदाऽङ्गुष्ठमूले चक्रं बिभर्त्यजः * तत्र भक्तजनस्यारिषड्वर्गच्छेदनाय सः । मध्यमाऽङ्गुलिमूले च धत्ते कमलमच्युतः । ध्यातृचित्तद्विरेफाणां लोभनायातिशोभनम् । पद्मस्याधो ध्वजं धत्ते सर्वानर्थजयध्वजम् । कनिष्ठामूलतो वज्रं भक्तपापाद्रिभेदनम् । पार्ष्णिमध्येऽङ्कुशं भक्ताचित्तेभ–वशकारिणम् । भोगसम्पन्मयं धत्ते यवमङ्गुष्ठपर्वणि । आदिपदात् स्वास्तिकादिसंग्रहः । तथाच श्रीकृष्णमेव प्रकृत्य पाद्मे । षोडशैव तु चिह्नानि मया दृष्टानि तत्पदे * दक्षिणे चाष्ट चिह्नानि इतरे सप्त एव च । ध्वजः पद्मं तथा वज्रमङ्कुशो यव एव च । स्वस्तिकं चोर्ध्वरेखा च अष्टकोणं तथाऽष्टमम् । इन्द्रचापं त्रिकोणं च कलशश्चाऽर्द्धचन्द्रकम् । अम्बरं मत्स्यचिह्नं च गोष्पदं सप्तमं स्मृतम् । षोडशं च तथा चिह्नं शृणु देवर्षिसत्तम । जम्बूफलसमाकारं दृश्यते यत्रकुत्रचिदिति । शङ्खध्वजातपत्रैश्च चिह्नितं चरणद्वयमिति तापिन्युक्तेः । चक्राङ्कितपदानन्तेति वाराहाच्च । चक्रशङ्खाऽऽतपत्रैः सहैकोनविंशतिः । तत्र सर्वचिह्नानि श्रीकृष्णपादयोरेव । तदुक्तं पाद्मे । अङ्कान्येतानि भो विद्वन् दृश्यन्ते तु यदा तदा * कृष्णाख्यं तु परं ब्रह्म सुविज्ञातं न संशयः । द्वयं चाथ त्रयं चाथ चत्वारः पञ्च चैव च । दृश्यन्ते वैष्णवश्रेष्ठ अवतारे कथञ्चनेति ॥

निवृत्तिपक्षे नन्दसूनोः आनन्दरूपसूर्य्यस्य परमात्मन एतानि चिदाभासलक्षणानि पदानि व्यक्तम् । किञ्च भगवच्चरणारविन्दस्थध्वजादिभिर्ध्यातैः स्वचरणसक्ति–सर्वानर्थविजय–पापवासनाध्वंस–मदनिवृत्ति–वैराग्यादिजनकैर्युक्तानि लक्ष्यन्ते । तथाच सत्त्व-

गुणे उद्रिक्ते भगवच्चरणारविन्दध्यानाद्यासक्तेऽन्तःकरणे कामक्रोधादिनिवृत्त्या पुनः पुनर्भगवद्ध्यानात्मप्रत्ययनिष्ठचिदाभासैर्भगवत्स्वरूपपर्यन्तं संगच्छमानैस्तत्स्वरूपप्राप्तिरिति भावः ॥ २५ ॥

तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्योऽग्रतोऽबलाः ॥
वध्वाः पदैः सुपृक्तानि विलोक्यार्ताः समब्रुवन् ॥ २६ ॥

भगवतः पदानीति निश्चित्य तैस्तैस्तथाभूतैरेव भुवि संलग्नैः पदैः पदवीं मार्गमन्वेषणं कुर्वत्यः स्वभावत एवाऽबला, विहारान्वेषणाभ्यां विशेषतो बलहीनाः कृताः, वध्वाः श्रीमत्या राधायाः पदैर्भुवि संलग्नैः संपृक्तानि मिलितानि विलोक्य तन्मध्ये तयेर्ष्यावत्यो मानिन्यः काश्चिदार्ता मोहिताः सत्यः समब्रुवन् प्रथममतिविह्वलत्वात्तत्पदोपरि तासां दृष्टिर्न पतिता । भगवत्पददर्शनेनेषत्समाहितानां किञ्चिद् दूरे गतानां तदुपरि दृष्टिः पतितेति ज्ञेयम् ॥

निवृत्तिपक्षे, तैस्तैर्यथोक्तैरेकाग्रतां प्राप्तैः साभासप्रत्ययैरग्रे भगवत्स्वरूपान्वेषणं प्रतिपादयन्त्योऽबलाः प्रत्यक्षादिभिर्वादानुवादपरत्वान्निर्बला, द्वा सुपर्णेत्याद्या भेदानुवादिन्यः श्रुतयो मुख्यवधूस्थानीयायास्तत्त्वमसिश्रुतेस्त्रिभिः पदैः सुपृक्तानि तदर्थविचारपरत्वेन तत्संमिश्राणि विलोक्यार्ताः सत्यः समब्रुवन् ॥ २६ ॥

यदब्रुवँस्तदाह ।

कस्याः पदानि यातायाः पश्यध्वं नन्दसूनुना ॥
अंसन्यस्तप्रकोष्ठायाः करेणोः करिणा यथा ॥ २७ ॥

कस्या इति ॥ अहो लघुत्वनिम्नत्वादिचिह्नैश्चिह्नितत्वात् स्त्रिया एतानि पदानि वर्तन्ते । तथापि कस्या अस्माकं मध्ये कस्याः । नवग्रामान्तरस्त्रियाः । यतो नन्दसूनुना सह यातायाः ।

अन्यस्याः प्रेष्ठसाहित्यं न सम्भवति । तथाच का वा निष्ठुरा प्रेष्ठमेकान्ते नीतवती सा निश्चेतव्येति भावः । तत्रापि तेन स्कन्धे न्यस्तः प्रकोष्ठभागो यस्याः सा । पदानामनुपृक्तत्वादिदं ज्ञातव्यः । तच्च तस्या रात्रौ सुखेन नयनार्थं दूरेऽबलां बलान्नयनार्थं वा, रसाभिव्यक्त्यर्थं वा तदनुरूपं दृष्टान्तमाह ॥ करिणा हस्तिना करेणोर्हस्तिन्या यथा । एतेन तस्यां तस्य प्रीत्यतिशयः, काममदाक्रान्तता तदधीनता चेति ध्वनितम् ॥

निवृत्तिपक्षे, एतानि पक्षोक्तप्रत्ययेषु प्रविष्टानि पदानि कस्याः । नन्दसूनुना परमात्मना सह यातायाः प्रतिपादकभावेन सहप्रविष्टायाः । तत्राप्यनेन परमात्मना अंसे शुद्धचेतनलक्षणे भागे न्यस्तः प्रकोष्ठस्थानीयस्तत्पादभागो यस्याः । साहित्ये दृष्टान्तः । तथाच का वा अहेतुप्रतिपादने समर्थेत्यापाततस्ताः श्रुतय उक्तवत्य इति भावः ॥ २७ ॥

तत्सुहृद्भावा आहुः ।

अनयाऽऽराधितो नूनं भगवान् हरिरीश्वरः ॥
यन्नो विहाय गोविन्दः प्रीतो यामानयद्रहः ॥ २८ ॥

अनयेति ॥ तत्राभिज्ञापक्षे, अनया तेन सार्द्धं यातया सख्या नूनं भगवान् आराधितः । यद्यप्यस्माभिरप्याराधितस्तथाप्यनया यथाराधितस्तथा नाराधितः । फलवैलक्षण्यदर्शनात् । नचास्माभिरपि तथैवाराधित इति भ्रमितव्यम् । आराधनतारतम्यस्य तेन सम्यग् ज्ञात्वैव फलप्रदानप्रवृत्तत्वात् । यतो भगवान् अत एव, हरिः, विलक्षणप्रेमवत्या मम समानं सुखं दत्तवानिति तदीयदुःखस्य हर्ता । ननु तदाराधनपराणामस्माकमन्तर्धानेन किमिति दुःखं दत्तवानितिचेन् तत्राहुः ॥ ईश्वरः=कर्तुमकर्तुमन्यथा च कर्तुं सम-

र्थः । तत्कल्पकं विलक्षणं फलमावेदयन्ति ॥ यद्यस्मान्नोऽस्मान् सर्वा विहाय प्रीतः सन् यां रह एकान्तमनयत् । गोविन्दः साधारणोऽपि सर्वेन्द्रियग्राहकस्तस्या असाधारणो जात इत्यहो तस्या उत्कर्षातिशय इति भावः ॥ अनभिज्ञापक्षे, अनया जन्मान्तरे नूनं निश्चयेन हरिर्दुःखहर्ता महाविष्णुराराधितो, न त्वस्माभिः । तत्रापि भगवत्त्वेनेश्वरत्वेन च । यतोऽत्र भाग्यातिशयः परमस्वातन्त्र्यं च तथा लब्धमित्याशयेनाहुः ॥ भगवानीश्वर इति ॥ यतः सर्वासां रक्षणेन लब्धगोविन्दनामाऽपि नो विहाय प्रीतो यां रहोऽनयत् । अनेन, राधयत्याराधयत्याराध्यते वा राधेत्यर्थात् तन्नाम सूचितम् । तथाच तादृशी राधैवाऽतस्तस्या एव पदानीति किमर्थमसूयया, कस्या इत्युक्तवतीभिरिति भावः । स्पष्टं नामाग्रहणं प्रतिपक्षाणां गोपीनां राधाया वा संकोचात् । मुनिना तु ब्रह्मवैवर्तादौ तन्नाम्नः स्पष्टमुक्तत्वात् तत एव गोपीनां मानिनीनां ज्ञातत्वानीति कस्या अपि नामानुक्त्या सूचितम् । परोक्षप्रिया हि देवा इति न्यायश्चानुसृतः । एतद्ग्रन्थस्य गम्भीरार्थकत्वं च ध्वनितम् ॥ मानिनीपक्षे, हे अनयाः परमोत्कर्षवत्या राधायाः स्पर्द्धाद्याचरणरूपान्यायवत्यः, हरिः सर्वासां सामान्यतो मनोहर्ता श्रीकृष्णो राधितः पृथक्तया राधामेवेतः प्राप्तः । शकन्ध्वादित्वात् पररूपम् । यद्वा, राधा सर्वापेक्षयाधिक्येन प्रिया संजाता अस्येति तारकादित्वादितच् । यतो भगवान् कामातुरः, श्रीमानिति वा, कीर्तिमानिति वा । भगं श्रीकाममाहात्म्यवीर्य्ययत्नार्ककीर्तिष्वित्यमरः । तत्रापीश्वरः । ग्रहणपलायनवञ्चनादौ समर्थः । यद् यस्माद् गा इन्द्रियाणि विन्दति विन्दयति वा गोविन्दस्तया परस्पररमणाभिलाषुः । श्रीराधायाः पदचिह्नान्येकोनविंशतिसंख्याकान्युक्तानि । तत्र वामचरणे यवचक्रच्छत्रवलयोर्ध्वरेखाकमलध्वज-

वल्लीपुष्पाऽङ्कुशार्द्धचन्द्रा इत्येकादश । दक्षिणचरणे शङ्खगदावेदी-कुण्डलशक्तिपर्वतरथचामराणीत्यष्टौ ॥

निवृत्तिपक्षे, तत्पक्षपातिन्यः, ऐदात्म्यमिदं सर्वं, तत्सत्यं, स आत्मानं, नेह नानास्ति किञ्चनेत्याद्या आहुः ॥ अनया नूनं भगवान् जगत्पालको, हरिः संहर्ता, ईश्वर उत्पादक आराधितः प्रतिपादितः । अखण्डैकरसस्य प्रतिपादनेन तत्स्वरूपस्य भगवत्त्वादेः प्रतिपादितत्वात् । यद् यस्मात् सकलश्रुतिगम्यत्वाद् गोविन्दोऽपि प्रीतः सन् नो विहाय यां रहः अनयत् । तज्जन्यचरमवृत्तिविषयत्वमगच्छादिति भावः ॥ २८ ॥

तटस्थास्तु—अहो किमर्थं विवादो भवतीभिरारब्धः, सखीचरणोपरि दृष्टिं दत्वा भगवच्चरणाब्जरेणून् पश्यतेत्याहुः ।

धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणवः ॥
यान् ब्रह्मेशौ रमा देवी दधुर्मूर्ध्न्यघनुत्तये ॥ २९ ॥

धन्या इति ॥ आल्यः सख्यो गोविन्दस्य परमात्मनश्चरणकमलरेणवः [illegible]यमाना अहो आश्चर्यं धन्या अतिपुण्याः । यान् रेणून् ब्रह्मा ईशो महादेवो रमादेवी उपादानशक्तिः, अघस्य स्वस्वाधिकारे सम्भावितस्य दोषस्य विरहदुःखस्य वा निवृत्तये मूर्ध्नि दधुः । तथाच तद्वियोगजनकदोषनिवृत्तये तद्धारणं कर्तव्यमिति भावः । स्ववचसि विश्वासार्थं सम्बोधयति ॥ हे आल्य इति ॥ अनभिज्ञापक्षे, अहो तत्स्पर्शाऽभावे रेणुतोऽपि वयं तुच्छा इति भावः । प्रेम्णोऽसतोऽपि माहात्म्यस्य स्फोरकत्वस्वाभाव्यात् प्रेमकृतैवेयं रेणुमाहात्म्यभावना । यथा भरतेन, किं वा अरे आचरितम् इत्यादिना मृगपदस्पर्शेन भुवो भाग्यं वर्णितम् ॥ मानिनीपक्षे, यथा रेणवस्तथात्माऽप्यतो नास्ति मात्सर्यकृत्यमिति भावः ॥

निवृत्तिपक्षे,सत्यं ज्ञानमनन्तं ब्रह्म, सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेत्याद्यास्तटस्था आहुः ॥ हे सख्यः, अहो अमी गोविन्दस्यौपनिषदस्य परमात्मनः सम्बन्धिनस्तद्ध्यानास्पदस्य हृदयकमलस्य रेणवस्तत्रस्थाः शुभ्राश्चित्प्रत्यया धन्या याँस्तथाभूतान् प्रत्ययान् ब्रह्मादयो देव्या वेदशरीरायाः सरस्वत्या मूर्ध्नि मस्तके दधुः, वेदान्तार्थाखण्डाचिदेकरसपरमात्मस्वरूपानुसंधानपराः समाधिस्था बभूवुःअघस्य विक्षेपस्य निवृत्तये ॥ २९॥

पुनस्तत्प्रतिपक्षा अहो किमुच्यते भवतीभिः, समाहितमनसामियं कथा, न तु क्षुब्धचित्तानामित्याशयेनाहुः ।

तस्या अमूनि नः क्षोभं कुर्वन्त्युच्चैः पदानि यत् ॥
यैकापहृत्य गोपीनां रहो भुङ्क्तेऽच्युताऽधरम् ॥ ३० ॥

तस्या अमूनि अशक्यादर्शनानि पदानि नोऽस्माकं वियुक्तानामुच्चैः क्षोभं व्याकुलतां जनयन्ति । यतो या सर्वासां गोपीनां समानमच्युताऽधरमेकाऽपहृत्य तत्रापि रहसि स्थित्वा भुङ्क्ते । ननु बहुस्त्रीसबन्धवशादुपरतिं प्राप्तस्य भगवतः कुतोऽधराऽमृतदानाय प्रवृत्तिः संभाव्यते इत्याशङ्कानिरासायाऽच्युत इत्युक्तम् । तथाचाऽप्रच्युतस्य नास्ति विरनतासंभावनेति भावः । यद्वा तद्विरहदुःखादप्यस्माकं तस्यास्तत्संयोगजन्यं दुःखं महदुत्पन्नमित्यच्युतपदेन ध्वनितम् । तथा न प्रच्युत इत्यर्थावगमात् ॥

निवृत्तिपक्षे, पुनस्तद्विरुद्धर्थिका आहुः ॥ यस्या उक्तश्रुतेरुच्चैः सर्वोत्कृष्टत्वेनानुसंधीयमानानि पदानि नः क्षोभं स्वार्थप्रच्युतिलक्षणं जनयन्ति यतो यैका सर्वासां श्रुतीनां प्रतिपाद्यमर्थमच्युताधरेमकरसानन्दस्वरूपं रहो भुङ्क्ते । तत्तत्प्रतिपाद्याद्वैशिष्ट्यादर्थाद्वशेष्यमात्रमपहृत्य सर्वविशेषविनिर्मुक्तं प्रतिपादयतीत्यर्थः॥ ३० ॥

अहो माऽस्तु कलहस्तत्पदानि सम्प्रति न दृश्यन्ते इति तटस्थाभिरुक्ते सति, अहो सत्यं तत्पदान्यत्रास्मिन् प्रदेशे न लक्ष्यन्ते इति तद्वाक्ये सर्वाभिरङ्गीकृते तदन्तरङ्गाः काश्चित् सुहृद आहुः ॥

न लक्ष्यन्ते पदान्यत्र तस्या नूनं तृणाङ्कुरैः ॥
खिद्यत्सुजाताङ्घ्रितलामुन्निन्ये प्रेयसीं प्रियः ॥ ३१ ॥

नेति ॥ अहो सा प्रेयसा विश्लिष्टेति न भ्रमितव्यं, किन्तु तामुन्निन्ये बाहुभ्यामुत्थाप्य स कटिभागे गृहीतवानतस्तस्याः पदान्यत्र न लक्ष्यन्ते इत्येवं निश्चयेन ज्ञातव्यम् । उन्नयननिमित्तमाहुः ॥ तृणाङ्कुरैः खिद्यती सुजाते अङ्घ्रितले यस्यास्ताम् । नन्वेवं तर्हि स्कन्धमारोपितवानिति कुतो न कल्प्यत इतिचेत् तत्राहुः ॥ प्रेयसीम् ॥ रसाविर्भावकरं खेदाजनकं कटिभागारोपणमेव तादृश्याः समुचितमिति भावः । ननु खिन्नपादा तत्रैव कुतो न स्थितेत्याशङ्क्याहुः ॥ प्रियः ॥ यतस्तस्या अपि अविश्लेषो यथा तथा परिरम्भणीयोऽभीष्ट इति भावः ॥

निवृत्तिपक्षे, अहं ब्रह्मास्मीत्याद्यास्तदेकार्थप्रतिपादिका आहुः ॥ तस्याः पदानि अत्राखण्डैकरसे परमात्मनि न लक्ष्यन्ते शक्तिवृत्त्या प्रवृत्तानि नोपलभ्यन्तेऽतो नूनं तृणाऽङ्कुरस्थानीयैर्वाच्यांऽशैः खिद्यती सुजाते एकाऽर्थनिष्ठत्वात् समानाधिकरणभूते अङ्घ्रितले कोमलपदं यस्यास्तामुन्निन्ये । उद् ऊर्ध्वं शक्तिवृत्तेः प्रत्याव्यं भागत्यागलक्षणया सर्वोत्तमं स्वरूपमानन्दैकरसमाशोधितवान् । यतः प्रेयसीं प्रियः, संसर्गभङ्गिसम्यग्ज्ञानहेतुत्वात् प्रेयसीं, स्वयं च तदेकपरायास्तस्याः प्रिय इति भावः ॥ ३१ ॥

एतच्छ्रुत्वा अधिकमग्नानि प्रेष्टपदानि च दृष्ट्वाऽतिक्षुब्धस्वान्तास्तटस्थाभिमुख्यः प्रतिपक्षा आहुः ।

इमान्यधिकमग्नानि पदानि वहतो वधूम् ॥
गोप्यः पश्यत कृष्णस्य भाराक्रान्तस्य कामिनः ॥ ३२ ॥

इमानीति ॥ अहो सत्यमुक्तमेताभिर्यतो वधूं कामिनो न तु प्रेमिणः, प्रेमवतीनामस्माकं त्यागात्, कृष्णस्येमानि उपलभ्यमानानि पदानि भाराक्रान्तानि यतोऽधिकमग्नानि पश्यत स्थित्वा विचारयत यतो भवत्यो विचारचतुरा इति गोप्य इति सम्बोधनाऽऽशयः । कामिन इत्यादिपदैरसूया व्यज्यते । तथाच स्थूलदेहाया वध्वाः सुकुमारशरीरेणोद्वहनं भारेण पीडाकरमसन्तकामिचेष्टितम् । पददर्शनादप्यधिकखेदकमिति भावः ॥

निवृत्तिपक्षे, सर्वकाम इत्यादिश्रुतय आहुः ॥ हे गोप्यः, पालनशक्तिमत्परमात्मस्वरूपप्रतिपादनपरा यथोक्तश्रुतिलक्षणां वधूं वहतो यथोक्तरीत्या प्रतिपादकत्वेन धारयत इमानि कृष्णस्य सदानन्दविग्रहस्य सिसृक्षादिकामनाविशिष्टस्य पदानि ध्यानयोग्याऽधिकार्य्यन्तःकरणमत्ययलक्षणानि । अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते * इत्युक्तत्वाद् भाराक्रान्तानि यथोक्तश्रुत्यर्थवदनाऽसमर्थानि पश्यत ॥ ३२ ॥

अहो एतावतैव क्षुब्धस्वान्ताः सम्पन्नाः !! प्रेयसा तु प्रेयस्यर्थेऽन्यदपि यत् कृतं तत् पश्यतेति तत्सुहृद आहुः ।

अत्रावरोपिता कान्ता पुष्पहेतोर्महात्मना ॥
अत्र प्रसूनावचयः प्रियार्थे प्रेयसा कृतः ॥
प्रपदाक्रमणे एते पश्यताऽसकले पदे ॥ ३३ ॥

अत्रेति ॥ सार्द्धेन । अत्र पुष्पहेतोर्महात्मना चतुरशिरोमणिना

कान्ता अवरोपिता । महे केशप्रसाधनोत्सवे आत्मा मनो यस्य इति वा ॥ अत्र तु प्रसूनानां पुष्पाणामवचयः प्रियाया अर्थे प्रेयसा कृतः । पुष्पहेतोः प्रियार्थे इत्यनेन तत्प्रियार्थमेवावरोपणं, न तु भारजनितश्रमनिवृत्त्यर्थमिति सूचितम् । नन्विदं कुतो ज्ञातमित्याशङ्क्याहुः ॥ प्रपदाभ्यां पादाग्राभ्याम् आक्रमणं भुवो यत्र ते असकले पदे पश्यत सम्पूर्णयोस्तयोर्भुवि चिह्नानवलोकनात् प्रतिपक्षाभिप्रायं पदे इति द्वित्वम् । तेन, पदान्यत्र महात्मन इति विष्णुपुराणोक्तबहुत्वेन पूर्वोक्तबहुत्वेन च न विरोधः ॥

निवृत्तिपक्षे, नान्योऽतोऽस्ति द्रष्टा, नान्योऽस्ति श्रोतेत्याद्यास्तत्पक्षपातिन्य आहुः सार्द्धेन । अत्रैषु ध्येयाकारतायोग्यप्रत्ययेषु महात्मना यथोक्तकान्ता, अवरोपिता स्वार्थबोधकत्वाद्रहिता । कुत इत्यत आहुः । पुष्पस्य तदर्थाकारवृत्तिलक्षणफलहेतुभूतचित्तैकाग्र्यलक्षणस्य हेतोः, एषु प्रत्ययेषु प्रियाया अर्थस्याविभावार्थमैकाग्र्यलक्षणपुष्पसञ्चयः प्रेयसा सम्पादितः । यतः पदाभ्यां पदयोर्वा वाच्यार्थाभ्यामाक्रमणं ययोस्ते, असकले जीवत्वोपासकत्वेश्वरत्वोपास्यत्वाक्रान्ते पदे चैतन्ये पश्यत ॥ ३३ ॥

केशप्रसाधनं त्वत्र कामिन्याः कामिना कृतम् ॥
तानि चूडयता कान्तामुपविष्टमिह ध्रुवम् ॥ ३४ ॥

इदं श्रुत्वा सम्यक् तद्भूमिभागमवलोक्य कृष्णजान्वन्तरूपविष्टायास्तस्याश्चिह्नमालक्ष्य विपक्षा आहुः ॥ केशेत्यर्द्धेन ॥ अहोऽत्ययुक्तम् । यतोऽत्र कामिन्या, न तु प्रेमवत्याः । स्वसखीर्वञ्चयित्वा एकां गृहीत्वा गतत्वात् कामिना, न तु प्रेमिणा प्रेमवतीनानामस्माकं विरहपीडाननुसंधानात् । केशानां प्रसाधनं वेण्याकारेणाऽऽपीडाकारेण वा देवदन्तकङ्कतिकया नखैर्वा कृतम् । तुशब्दो

विपक्षनिरासार्थः । न त्वत्र ज्ञानार्थमुपवेशनं संभवति । द्वयोरपि कामाक्रान्तत्वादिति सूचयितुं, कामिन्या इत्यादि ॥ अहो सत्यमिति तत्सुहृद आहुः ॥ तानीत्यर्द्धेन ॥ कान्तामधिकृत्य तानि पुष्पाणि चूडाकारेण बध्नता ध्रुवमुपविष्टम् । यद्वा चूडायां पुष्पप्रवेशनमुत्थितेनाऽपि भवति, अतस्तानि क्रमेण चूडायां निवेशयता कान्तासमीपे विष्टमुत्थितमपि ध्रुवम् । अतस्तत्सादृश्यं दुर्लभमतः किमर्थं स्पर्द्धया खिन्ना भवतेति भावः ॥

निवृत्तिपक्षे, अतः परं पराजितास्तत्पक्षमनुमोदयन्ति ॥ केशप्रसाधनमिति॥कामिन्यास्तत्प्रतिपादनकामनावत्यास्तत्पदप्रतिपाद्यस्य केशस्य ब्रह्माद्यधीशस्य प्रसाधनमत्र ध्येयाकारप्रत्ययेषु कामिना स्वाऽनुगृहीतमोक्षाऽभिलाषुप्रभुणा कृतम् । तत्त्वमसिश्रुतिलक्षणां कान्तामधिकृत्य तानि तत्त्वमसीति पदानि चूडयता चूडास्थानीयैकव्यक्तिपरत्वं नयताऽधिकारिणा सहोपविष्टमभिन्नतया स्थितमित्यर्थः ॥ ३४ ॥

एवं गोपीमुखेनैव राधया सह भगवल्लीलामुपवर्ण्य स्वयमाह शुकः

रेमे तया चात्मरत आत्मारामोऽप्यखण्डितः ॥
कामिनां दर्शयन् दैन्यं स्त्रीणां चैव दुरात्मताम् ॥ ३५ ॥

रेम इति ॥ आत्मनि स्वरूप एव रतो, न तु स्त्र्यादौ । अत एवाऽखण्डितः स्वस्वरूपादप्रच्युतस्तथाभूतोऽपि भगवाँस्तत्प्रेमवशीकृतस्तया राधया यथा ताभिस्तर्कितं तथा रेमे चेत्यर्थः । यद्वा अखण्डितः । अस्याः सकाशादविच्युतः सन् । यद्वा अप्यर्थे चः । आत्मरतोऽपि आत्मारामोऽपि अखण्डितोऽपि स्त्रीविभ्रमैरनाकृष्टोऽपि तया रेमे । ननु तथाभूतः किमर्थं रेम इत्याशङ्क्य लोकोपदेशार्थमेवं विडम्बनं चकारेत्याह ॥ कामिनामिति ॥ का-

मिनस्त्वेवमेवातिदीना भवन्ति दैन्येन चैवमेव निरोधं प्राप्नुवन्तीत्युपदिशँस्तेषामनुकरणं कृतवानिति । तथा स्त्रीणां दुरात्मतां दौष्ट्यं दर्शयन् । वशीकृतपुरुषे दौष्ट्यमेव कुर्वन्तीत्युपदिशन्नेवं कृतवानित्यर्थः । तथाच कामवशैः स्त्रीवशैश्च न भाव्यमिति लोकान् शिक्षयामासेति भावः । यद्वा ईदृशप्रेमविहीनाः कामिनः कामिन्यश्च स्वक्रीडयापरास्तर्शिता इत्याह ॥ कामिनां देहेन्द्रियतर्पणेच्छारूपकामस्वभावानां दैन्यं दुर्गतत्वं स्त्रीणामपि तादृशीनां तदन्यासां दुरात्मतां दुर्गतनायकवशीकारेण गर्वादिदुष्टस्वभावतां दर्शयन्नित्यर्थः । यद्वा, कामिभिः सुरतप्रार्थनादिपरैर्दीनैर्भवितव्यं, स्त्रीभिस्तत्राऽसंमतिपराभिर्दुरात्मभिर्भवितव्यमिति रसिकान् बोधयन्नित्यर्थः ॥

निवृत्तिपक्षे, सर्वश्रुतिविरोधनिवृत्त्या तया रेमे तत्प्रतिपाद्योऽखण्डितः, अखण्डैकरसः सर्वकामविनिर्मुक्तः, अत एवात्मारामश्च । चकाराभ्यां, सत्यज्ञानानन्तानन्दस्वरूपः । अधिकार्य्यन्तःकरणवृत्त्यारूढो जात इत्यर्थः । न चाऽस्ति, द्वा सुपर्णा सयुजा सखाया समाने वृक्षे परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीतीतिश्रुतिविरोधः । तत्प्रकरणपर्यालोचनयास्य मन्त्रस्याभेदपरत्वावगमात् । तथाहि । ब्रह्मैवेदममृतं पुरस्तादिति वाक्ये ब्रह्मणः सर्वात्मत्वे निर्दिष्टे, ननु ब्रह्मणो भोक्तृभेदाद् भोक्तृत्वमपि स्यादतो न युक्तं सर्वात्मत्वमित्याशङ्कानिरासायाऽयं मन्त्रः पठ्यते । यौ द्वौ विम्बप्रतिविम्बभूतौ जीवेश्वरावस्मिञ्च्छरीरे वर्त्तेते तयोर्मध्ये यो बुद्धिप्रतिविम्बभूतस्तदभेदाध्यासात् तद्धर्माभिमानी कर्मफलं भुङ्क्ते स एवान्यः बुद्धितादात्म्यरहितः सन् स्वरूपभूतचैतन्यात्मना भोगरहितः प्रकाशते । औदासीन्यबोधाभ्यां चैतन्यमात्रमुच्यते । तथाच भोगानुवादो भोगनिषेधशेष इति । न च समाने वृक्षे पुरुषो निमग्नः अनीशया शोचति मुह्यमानः, जुष्टं यदा

पश्यंत्यन्यमीशमस्य महिमानमिति वीतशोक इत्युत्तरश्रुतिविरोधः । अस्याः पूर्वोक्तानशनस्य स्वाभाविकत्वबोधनार्थकत्वात् । तथाहि । जीवेश्वरपुरुषाश्रये शरीरं पुरुषो बुद्ध्युपहितो निमग्नः कर्तृत्वाभिमानी, अत एव, मुह्यमानः तत्कारणमोहावृतोऽनीशया स्वस्यानन्दरूपेश्वरभावाप्रतीत्या शोचति विषयागमापायनिमित्तं दुःखमनुभवति । जुष्टं कार्यकारणसंघातैः सेवितम् अविवेकिभिस्तदात्मतया गृहीतं यदाऽधिकारी, अन्यं विवेकात् शरीरत्रयात् पृथग् भूतं तत्साक्षितयावगतशोधितत्वम्पदार्थमीशं सन्तं पश्यति तदास्यात्मत्वेनं अवगतस्य महिमानमपरिच्छिन्ननन्दात्मताम् इति एति नान्तरीयकतया वीतशोकः सर्वानर्थविनिर्मुक्तः । यद्वा, जुष्टं विवेकवैराग्यादिभिः प्रक्षालिताशयमलैः सनकादिभिर्नैरन्तर्य्येणात्मत्वेन सेव्यमानम्, अन्यं कार्यकरणसंघाताद्विलक्षणमीशं यदा पश्यतीति । नाऽपि, पृथगात्मानं प्रेरितारं च मत्वा जुष्टं ततस्तेनामृतत्वमेतीति विरोधः । न ह्यात्मानं प्रेरितारं च पृथङ्मत्वाऽमृतत्वमतीति श्रुत्यर्थः । पामराणामपि तादृशमननसत्त्वेनाऽमृतत्वप्राप्तिप्रसङ्गात् । किन्तु शरीराद्यभेदेन गृहीतमात्मानं पृथङ्मत्वा पृथक्कृतमात्मानं प्रेरितारं च मत्वा ईश्वरत्वेन च निश्चित्य अमृतत्वमेतीति । तस्मान्नास्ति कयाचिदपि श्रुत्या तस्याः श्रुतेर्विरोधः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः, यन्मदन्यन्नास्ति कस्मान्नु बिभेमि तदिदमप्येतर्हि य एवं वेदाऽहं ब्रह्मास्मीति, स इदं सर्वं भवति, उदरमन्तरं कुरुते अथ तस्य भयं भवति, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, नात्र काचन भिदाऽस्त्यत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योः स मृत्युमाप्नोतीत्याद्याः श्रुतयो भेदमपाकुर्वन्त्यस्तस्य । भेदश्रुत्यैव मुख्यं रमणमावेदयन्तीति संक्षेपः । विपक्षे दोषं दर्शयन् रेमे इत्याह ॥ कामिनां पुरुषाणां श्रुत्यर्थविचारा-

ऽधिकृतानां दैन्यमनीशत्वाभिमानेनानर्थजालप्राप्तिं दर्शयँस्तथाविधानां स्त्रीणां चैव दुरात्मनां दुष्टात्मरूपतां संसारानर्थास्पदजीवात्मतां दर्शयन् । यथोक्तश्रुत्यर्थविचारविधुरस्य पुरुषादेरनर्थनिवृत्त्यभावं बोधयन्तीत्यर्थः । तथाच श्रुतिः—

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यतीति ॥ ॥ ३५ ॥

इत्येवं दर्शयन्त्यस्ताश्चेरुर्गोप्यो विचेतसः ॥
यां गोपीमनयत् कृष्णो विहायान्याः स्त्रियो वने ॥ ३६ ॥
सा च मेने तदात्मानं वरिष्ठं सर्वयोषिताम् ॥
हित्वा गोपीः कामयाना मामसौ भजते प्रियः ॥ ३७ ॥

अथेतरगोपीकृतं तल्लीलावर्णनमुपसंहरति इत्येवं भगवल्लीलाः परस्परं प्रदर्शयन्त्यश्चेरुः । यतो, गोप्यः ॥ गोपरूपेणावतीर्णस्य भगवतः सम्बन्धिन्यः । वस्तुस्वभावादेव गोपालजे तस्मिन् प्रेमवत्यो, न तु शास्त्रेण भगवदीया जाताः । विचरन्त्यश्च विचेतसो जाताः प्रकारत्रयस्यापि समाप्तत्वादित्थंव्याकुलमानसा बभूवुरित्यर्थः ॥

अथ वृषभानुनन्दिन्या विप्रलम्भांशं वर्णयितुं पीठिकां रचयति ॥ कृष्णः सदानन्दरूपस्तस्यामानन्दमाविर्भावयितुं यां गोपीमनयत् । अन्याः स्त्रियो वने विहाय । अन्यासु स्त्रीत्वं प्रगल्भतामालोक्य तासां त्यागः । तस्या गोपीत्वं मुग्धात्वमालक्ष्य नयनमिति द्योतयितुं स्त्रियो, गोपीमित्युक्तम् ॥

निवृत्तिपक्षे, इत्येवम् अविचेतसः समाहितचित्तस्य पुरुषस्य ब्रह्मस्वरूपं दर्शयन्त्यस्तस्यान्तःकरणवृत्तिषु विचेरुः । अन्याः श्रुतिलक्षणाः स्त्रियो वने अन्तःकरणे यां गोपीं कृष्णः सदा-

ऽऽनन्दस्वरूपः परमात्मा अनयव् मम रूपावबोधिकेयमित्यवभासयत् ॥ ३६ ॥

तस्यास्त्यागे निमित्तमाह ॥ सा चेति ॥ चकारात् पूर्वं सर्वासां स्मयो जात इदानीं तस्यामिति गम्यते । सर्वाभ्य उत्कृष्टमात्मानं मन्यमानायाः साधारणं रमणं स्मयकरं नासीदधुना त्वऽसाधारणं, तस्मात् सापि गर्वं प्राप्ता । अनेन समुदायदोषेण भगवान्न त्यजति, किन्तु प्रत्येकदोषेणेत्यपि ध्वनितम् । साऽपि सर्वासां योषितां मध्ये आत्मानं परमोत्कृष्टं मेने । तन्निमित्तं तच्चेतसि स्फुरितमाह ॥ कामयानाः ॥ कामयमानाः, कामो यानमागमनसाधनं यासामिति वा । गोपीः स्वभोग्या अपि हित्वा सर्वासामपि साधारण्येन प्रियः, असौ सर्वोत्तमो मामेकां भजते मन्मनोऽनुकूलमाचरति इति विचार्येत्यर्थः ॥

निवृत्तिपक्षे सापि श्रुतिरात्मानं सर्वश्रुतीनां मध्ये श्रेष्ठं मेने यतः सर्वा अपि गोपीः स्वसम्बन्धिनीः स्वप्रतिपादनकामनावतीर्हित्वा असौ प्रत्यगभिन्नः परमात्मा प्रिय आनन्दघनो मां भजते मत्प्रतिपाद्यतां प्राप्तः । महावाक्यश्रुतिबोध्यः परमात्मेत्यधिकारिचेतसि स्फुरितमिति भावः ॥ ३७ ॥

ततो गत्वा वनोद्देशं दृप्ता केशवमब्रवीत् ॥
न पारयेऽहं चलितुं नय मां यत्र ते मनः ॥ ३८ ॥

तत इत्येवं मनसि स्फूर्त्यनन्तरं तेनैव सार्द्धं कस्मिँश्चित् प्रदेशे प्रियेण सहैव गत्वा अखर्वगर्वाक्रान्तस्वान्ता सा, केशवं स्वस्याः केशान् वयते ग्रथ्नाति तम् । तथाच स्वाधीनकान्तायास्तस्या रसात्महो दर्पो जात इति भावः । रमणबहुवनभ्रमणादिना जातश्रमाऽहमतः परं चलितुं न पारये न शक्ता भवामि । ननु

भ्यो मुग्धे ताभ्यो दूरमग्रेऽतिमनोज्ञस्थानं वर्तते तत्पर्य्यन्तं यथाकथञ्चिच्चलनीयमितिचेत् तत्राह ॥ नयेति ॥ एवं तर्हि पूर्ववन्मामङ्के निधाय त्वमेव नय प्रापय, अहं तु पदमात्रमपि गन्तुं न शक्तेत्यर्थः । ननु किं पौष्पाभरणपुष्पतल्पशयनाद्यर्थं पुष्पोद्यानं नयामि, किं वा यमुनापुलिनं तत्र विहाराद्यर्थमित्यपेक्षायामाह ॥ यत्र ते मनः अनेनाऽऽलस्यमनुमोदनं च सूचितम् । यद्वा स्वप्रेमरज्जौ प्राप्तबन्धनं कान्तं निश्चित्य प्राप्तगर्वा केशवं ब्रह्मादिसमस्तस्वामिनं देहादिसम्बन्धातीतं प्रत्यब्रवीत् ॥

निवृत्तिपक्षे, ततोऽन्तःकरणलक्षणस्य वनस्य उद्देशे श्रेष्ठप्रदेशे शोभनप्रत्यये गत्वा अहमेव प्रत्यगभिन्नब्रह्मावभासिकेति गर्ववती ब्रह्माद्यधिष्ठानभूतं परमात्मानमब्रवीत् । अहं चलितुं स्वार्थाच्च्यावयितुं केनापि प्रमाणेन, वादिना वा न शक्या । अतस्त्वत्संबन्धाऽधिकारिमनो यत्राऽखण्डैकरसे त्वयि वर्तते तत्रैव मां नय तत्प्रतिपादकत्वेनैव मां स्थापय । तथाच यथोक्तश्रुतिवेद्यत्वं ब्रह्मणोऽस्तीति विवेकिचेतसि स्फुरितमिति भावः ॥ ३८ ॥

तच्छ्रुत्वा भगवतैवं विचारितम् । अनया मां स्वाधीनमवगत्य नृपालस्यादिमयं नर्मवाक्यमुक्तमतो नर्मवाक्यमुक्त्वान्तर्धानं कार्य्यम् । तच्चावश्यकम् । यत एतेनैतच्छृङ्गाररसपोषणं, महाप्रेमवत्या अस्या मद्वियोगजनितदशाया अवलोकनं मत्संश्लेषजनितसौभाग्यमवलोकयाऽतिविस्मितस्वान्तानां तासां परमचमत्कारमिन्धुनिमग्ननक्रराया असाधारण्या अस्या मद्विरहावस्थाया दर्शनपूर्वकं सर्वाभिरभिरमणाऽनुकूलस्यैकमत्यस्य सम्पादनं च सेत्स्यतीति तदेतदभिप्रेत्याह ॥

एवमुक्तः प्रियामाह स्कन्ध आरुह्यतामिति ॥

ततश्चान्तर्दधे कृष्णः सा वधूरन्वतप्यत ॥ ३९ ॥

एवमिति ॥ एवमुक्तः श्रीकृष्णो मम स्कन्ध आरुह्यतामिति प्रियामाह । यद्वा, स्कन्धः प्रकाण्डे काये चेति कोशात् स्कन्धः कायः । स च योग्यत्वादङ्करूपः । साऽपि तत्कृतं नर्माऽबुद्ध्वा तत्स्कन्धमारोढुं प्रवृत्ता । ततस्तत्प्रवृत्त्यनन्तरमेवाऽन्तर्दधे । यतः कृष्णः सदानन्दस्वरूपोऽन्तर्दधे, अतः सा तद्दर्शनैकजीवना वधूः परमप्रिया विश्लेषासहा अन्वतप्यत परमं पश्चात्तापमगच्छत् । तेन च बहुधा विललाप ॥

निवृत्तिपक्षे, एवमुक्तः परमात्मा स्कन्धं तत्स्थानीयमेकदेशं विशेष्यं चैतन्यमात्रमारुह्यतां प्रतिपाद्यतामित्येवंविधामाह । भागलक्षणया चैतन्यमात्रैकत्वं यथोक्तश्रुतेरधिकारिणावगतमित्यर्थः । ततो यथोक्तश्रुत्या ब्रह्मणः सुवेद्यत्वावगत्यनन्तरं कृष्णः अपरिच्छिन्नसदानन्दस्वरूपः परमात्मा अन्तर्दधे परिच्छिन्नतामाप्त्याऽविज्ञाततां गतः । यदि मन्यसे सुवेदेति, दहरमेव नूनं त्वं वेत्थ, अविज्ञातं विजानतामित्यादिश्रुतेः । सा वधूः तल्लक्षणा श्रुतिरन्वतप्यत पुनः पुनरनधिकारिणा विचारिता, अहो अस्य ब्रह्मणः श्रुतिवेद्यता कथमिति ॥ ३९ ॥

तत्कृतविलापमाह ।

हा नाथ रमण प्रेष्ठ क्वासि क्वासि महाभुज ॥
दास्यास्ते कृपणाया मे सखे दर्शय सन्निधिम् ॥४०॥

हेति ॥ आर्तिसंबोधनमिदं सर्वत्र योज्यम् । हा नाथ स्वामिन् पालक, हा रमण प्रियोचित सुखप्रद, हा प्रेष्ठ प्रेमविस्तारक । तथाचैवंविधस्य तव मादृग्युक्तनयाऽवस्थानं नोचितमित्याशयेनाह ॥ क्वासीति ॥ आलिङ्गनं स्मृत्वाह ॥ महाभुज ॥ दैन्येनाह ॥ ते

दास्याः ॥ सख्यादौ अयोग्यायास्तत्रापि कृपणाया एवंविधदुःखं सोढुमशक्तायाः परिहर्तुं वाऽजानन्त्या मम, सन्निधिं दर्शय सन्निहितोऽस्मीति ज्ञापय । यतस्त्वं सखा, मुख्यसख्या अपराधाः क्षन्तव्या एवेति भावः । यद्वा, हा हेति पश्चात्तापे। अयुक्तं जातमित्यर्थः । यद्यपि मया अयुक्तं कृतं, तथापि त्वया नाहं त्याज्या, किन्तु दोष एवोपेक्षणीयो, यतस्त्वमेव मम स्वामीत्याशयेनाह ॥ हे नाथ ॥ ननु संकटप्राप्तौ साहाय्यं करिष्यामीतिचेत् तत्राह ॥ हे रमण । तथाच रमणस्य भोक्तुस्तव भोग्याया मे त्वत्तो दूरेऽवस्थानं परमसंकटरूपं, तस्मात् त्राणं कर्तुं योग्योऽसीति भावः । ननु भोग्येच्छया भोक्ता न प्रवर्तते, किन्तु स्वेच्छया । तथाच ममेच्छाभावात् कथं रमणे प्रवृत्तिरित्याशङ्क्याह ॥ हे प्रेष्ठ ॥ यद्यप्येवं, तथापि मम प्रीतिविषयस्याभावात्त्वद्विरहे मरणमेव सम्भाव्यतेऽतोऽनुग्रहबुद्ध्या तथा कुर्वित्यभिप्रायः । अतस्तथाभूतस्त्वं क्वापि गन्तुमयोग्योऽत्रैव स्याः । अहं व्याकुलत्वाज्जानामि ततः पृच्छामि क्वासीति ॥ झटिति कथय, नोचेद् गच्छन्ति मम प्राणा इत्याशयेन पुनराह क्वासीति ॥ इत्युक्त्वा भूमौ निपातिता मूर्च्छाभिमुखा उत्थानार्थे संबोधयति ॥ हे महाभुजेति ॥ यतस्तवैवाहं दासी, तत्रापि सम्प्रति कृपणा तस्या मम सन्निधिं दर्शय ॥ हे सखे ॥ सख्युस्तवेदमुचितमिति भावः । यद्वा, हे नाथ, त्वदेकप्राणायास्त्वदधीनाया इमे प्राणाः सम्प्रति गन्तुकामा मया रक्षितुमशक्या, अतस्त्वमागत्याशु संरक्षेत्याशयः। तद्गमने तवात्यन्तं दुःखं भविष्यति । सर्वापेक्षयोत्कृष्टत्वेन संमतायां मयि मृतायामन्यत्र रतिमलभमानस्य पश्चात्तापेन रोदनावश्यम्भावादित्याशयेनाह ॥ हे रमणेति ॥ नन्वस्तु मम दुःखं, तव तेन किमितिचेत् तत्राह ॥ प्रेष्ठेति ॥ प्रेष्ठस्य तव दुःखं कोटिगुणितं सन्मय्येव फलिष्यतीति भावः

ननु सर्वथा निर्गन्तुं प्रवृत्ताः प्राणा मयापि कथं संरक्ष्या इतिचेत् तत्राह ॥ हे महाभुज, क्वासि क्वासि । झटित्यागत्य स्वभुजमृतसञ्जीवनौषधेन सुकरन्तद्रक्षणं सम्पादयेति भावः । नन्वेवं तर्हि, न पारयेऽहं चलितुमित्येवं किमर्थमुक्तवत्यसि, ततः सापराधां त्वां न स्पृशामीति चेत् तत्राह ॥ दास्यास्ते ॥ यद्यपि तदानीं प्राप्तगर्वयाऽऽलस्यादिवशात् तथोक्तं, सम्प्रति तु तन्निवृत्त्या दासीभावं प्राप्तास्मि, तत्रापि कृपणा परमदीना जातास्मि । ततः क्षमैवोचिता । इतः परं मरणस्यैवावशेषादपराऽघनिमित्तस्य दोषस्य निवृत्तत्वान्न कोप इति भावः । किञ्च वस्तुतो नास्ति ममापराधस्त्वयैव दास्ययोग्याया मम सख्यं कृतं, तदनुरूपं च मयाऽनुष्ठितमित्याशयेनाह ॥ हे सख इति ॥ ननु नास्ति मम कोप इतिचेत् तर्हि सन्निधिं दर्शय। प्रसन्नः सन् मत्समीपे आगतोऽसिचेत् तर्त्तर्हि विरहव्याकुलस्वान्तायाः पश्चात्तापदुःखेनान्धीकृतनेत्राया मम सन्निधिं स्पर्शादिना दर्शय, पश्चाद् अनाहिता सती द्रक्ष्यामीति भावः । एवं विलपन्ती भगवत्स्पर्शादिकमलब्धवती ततः परं विलापेऽप्यक्षमा मूर्च्छिता सती भूमावपतदित्यपि ज्ञेयम् । मोहितां ददृशुरिति वक्ष्यमाणानुसारात् ॥

निवृत्तिपक्षे, अथ ब्रह्मणः साक्षात्स्ववेद्यत्वाभिमानं विहाय स्वजन्यवृत्त्यावरणनिवृत्त्या सन्निधिं प्रार्थयते ॥ हा नाथेति ॥ हेति स्वजन्यवृत्तिरहितानाक्रोशति ॥ हे नाथ, सर्वेश्वर, हे रमण, जगत्सृष्टिस्थितिभङ्गलक्षणक्रीडापरायण—तत्पदार्थ, हे प्रेष्ठ वरप्रेमास्पद महाभुजाऽसंख्यातभुजाऽऽदिमहेश्वर—त्वम्पदार्थ, असि असीत्येवं नवकृत्वस्तवोपदेशपराया अधिकारिभिर्मदर्थाग्रहे कृपणाया दीनतां प्राप्ताया मम क्वचित् क्वचिव सखे निरुद्धैरिन्द्रियैः सह रममाणे शुद्धेऽन्तःकरणे, सन्निधिम् आवरणनाशकवृत्त्युत्थानेन मत्प्रतिपाद्यतां

प्रकटयेत्यर्थः ॥ ४० ॥

अथ ता अपि तत्राशु समागता इत्याह ।

अन्विच्छन्त्यो भगवतो मार्गं गोप्योऽविदूरतः ॥
ददृशुः प्रियविश्लेषमोहितां दुःखितां सखीम् ॥ ४१ ॥

भगवतो मार्गं मृगयमाणा गोप्यः, अविदूरतः समीप एव तां दुःखितां प्रियविश्लेषजन्येन तापेन मूर्च्छितां समानदुःखाक्रान्तत्वाद सखीं तथाभूतां दृष्ट्वा विगतेर्ष्यास्तां वस्त्रवातादिना सचेतनां कृतवत्य इत्यपि द्रष्टव्यम् ॥

निवृत्तिपक्षे, भगवतो मार्गं विदूरतोऽन्विच्छन्त्यो गोप्यः परमात्मसंबन्धिन्यः श्रुतयो दुःखिता आसन् । अहोऽस्माकं साक्षात्परमात्मप्रतिपादिका नास्तीति । यदा मुख्यामपि सखीं समानविषयत्वात् प्रियेण चिदात्मना योऽयं विशेषेण श्लेषो वाच्यवाचकत्वलक्षणसंबन्धस्तत्र मोहितामत एव दुःखितां ददृशुस्तदा यत्किञ्चित् स्वास्थ्यं प्राप्ता इत्यर्थः ॥ ४१ ॥

तया कथितमाकर्ण्य मानप्राप्तिं च माधवात् ॥
अवमानं च दौरात्म्याद्व विस्मयं परमं ययुः ॥ ४२ ॥

आयि सखि किं वृत्तमिति ताभिः पृष्टया तया हे सख्यो मुग्धाऽहं तेन नीतेत्यादिनिश्चयपर्यन्तं कथितं वृत्तमाकर्ण्य तत्र माधवाल्लक्ष्मीपतेः कान्तिपतेः सुन्दराद्वा मानप्राप्तिं चाकर्ण्य दौरात्म्यात् स्वदौर्जन्यादवमानं त्यागलक्षणं चाकर्ण्य परमं विस्मयं ययुः । अहो महान्तमियं मानं लब्धवती, स चैवंविधं मानं दत्वा कथमवमानं कृतवानाश्चर्य्यमिदमित्येवं परमं विस्मयं प्राप्तवत्यः ॥

निवृत्तिपक्षे, तया यथाश्रुत–तत्त्वम्पदार्थयोरभिन्नत्वं कथित-

माकर्ण्य माधवात् स्वजन्यब्रह्मविद्यापतेर्मानस्य प्रामाण्यस्य प्राप्तिं चाकर्ण्य, दूरे आत्मा शुद्धचिदानन्दघनो निर्विशेषो यस्याः सा दूरात्मा तद्भावो दौरात्म्यं, तस्माद्रागविषयप्रतिपादकत्वादवमानं तद्विषयकप्रमानुत्पादकत्वं चाकर्ण्याहो लब्धप्रामाण्याया अस्याः कथमप्रामाण्यमिति परमविस्मयं ययुरित्यर्थः ॥ ४२ ॥

ततस्तां हस्ते धृत्वोत्थाप्य तया सहिता अन्वेषणे प्रवृत्ता इत्याह ।

ततोऽविशन् वनं चन्द्रज्योत्स्ना यावद्विभाव्यते ॥
तमः प्रविष्टमालक्ष्य ततो निववृतुर्हरेः ॥ ४३ ॥

तत इति ॥ ततो विस्मयप्राप्त्यनन्तरं पदचिह्नानां वने प्रवेशमालक्ष्य वनमाविशन् तत्र यावत्पर्य्यन्तं वृक्षाणां विरलत्वाच्चन्द्रज्योत्स्ना विभाव्यते तावत् । ततो निबिडवृक्षेषु घनीभूततमःप्रविष्टं पदचिह्नैरालक्ष्य हरेरन्वेषणान्निवृत्ताः । स्त्रीत्वाद् भयेन तमो नाविशन्निति भावः । यद्वा हरेः संबन्धिन्यस्तथाच तत्र धूर्तान्तरास्थितिशङ्कया न प्रविष्टा इति भावः । यद्वा, अस्मासु तमः प्रविष्टासु सतीषु स बहिर्निःसृत्य गमिष्यतिचेत् सर्वथा न मिलिष्यतीति, न तत्र प्रवेश इत्याशयः । यद्वाऽस्मासु प्रविष्टासु संभ्रमादन्धकारे पलायनपरायणस्य परमसुकुमारपादाद्यवयवस्य प्रेष्ठस्य खेदो भविष्यतीति विचार्य्य निवृत्ता इत्यभिप्रायः । अथवा प्रकाशकराङ्गस्य भगवतोऽत्र प्रवेशे तमःप्रवेशो न संभवतीति तत्र प्रविष्टं तम आलक्ष्य तर्कयित्वा निववृतुरित्याशयः ॥

निवृत्तिपक्षे, ततो विस्मयं प्राप्यानन्तरं यावद्विवेकलक्षणचन्द्रस्य ज्योत्स्ना तत्र तत्पदार्थे तत्प्रकाशो विभाव्यते तावदतन्निरसनार्थमविशन् । अग्रे चैतन्यघने परमात्मनि तमः प्रविष्टप्रकाशात् सामर्थ्याद् आलक्ष्य हरेः संबन्धिन्यः श्रुतयो निववृतुः ॥ ४३ ॥

तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः ॥
तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरुः ॥ ४४॥

ननु सर्वथा कृष्णमलब्धवत्यः प्राप्तपरिश्रमाः स्वगृहान् प्रति कुतो न गता इतिचेत् तत्राह ॥ नात्मागाराणि सस्मरुः । आत्मानं परिश्रमादित्युक्तं, देहं गृहागाराणि गृहाँस्तत्रत्यानि वस्तूनि च न स्मृतवत्यः । स्मरणं विना कथं गमनादिकं तासां भवेदिति भावः । ननु कुतो न सस्मरुरित्याशङ्क्याह ॥ तन्मनस्का इति ॥ तस्मिन् भगवति मनो यासां ताः । तथाच स्मरणकरणस्य मनसो भगवति प्रविष्टत्वात् कथमन्यस्मरणं भवेदिति भावः ॥ आलापद्वारापि स्मरणं वारयति ॥ तदालापास्तत्सवन्ध्यालापो यासां ताः । तथाच गृहान् प्रति गन्तव्यमितिभाषणे कस्या अप्यवकाशो न जात इति भावः ॥ नापि हस्तादिसंज्ञया सूचनावकाशः कस्या अप्यासीदित्याशयेनाह ॥ तस्यैव विचेष्टा पूर्वकथा यासां ताः । ननु कदाचिन्मनसा गेहाद्यनुसंधानं कुतो न जातमितिचेत् तत्राह ॥ तदात्मिकाः ॥ स आत्मा यासां ताः । तथाचान्तर्हितात्मनां तासां तदन्यानुसन्धानादिकं दुर्लभमिति भावः । किञ्च गेहादिस्मृतिसंपादकं दुरदृष्टमपि नोत्थितं, तन्नाशकतद्गुणकीर्तनपरत्वादित्याह ॥ तदिति ॥ गुणान् गोवर्द्धनोद्धरणादिना गोकुलरक्षणादीन् । यद्वा, यतः काश्चित् तन्मनस्काः, अहो प्रेष्ठः संप्रति कुत्र वर्तते, कथं मिलिष्यतीत्यादितद्विषयकमनोराज्यपराः । काश्चित् तदालापाः । अहो अस्मान् विहाय कथं गत, इतः परं कुत्रान्वेषणीय इत्यादितद्विषयकवार्तालापपराः । काश्चित् तद्विचेष्टाः पूतनास्तनपानादितद्विचेष्टाकरणपराः । काश्चित्तदात्मिकास्तस्मिँल्लीनमनस्कत्वात् समाधिस्था इव तदेकस्फूर्त्तयः । काश्चित्

तद्गुणानेव गायन्त्यः सत्यस्तदाऽऽत्मागाराणि न सस्मरुः । यद्वा कदाचित् तन्मनस्काः कदाचित् तदालापा इत्येवं योज्यम् ॥

निवृत्तिपक्षे, काश्चित् तन्मनस्काः, प्रत्यगभिन्नब्रह्मविषयकाभिप्रायाः । काश्चित् साक्षादेव तदालापाः, सत्यत्वादिरूपेण तस्य प्रतिपादिकाः । काश्चित् तद्विचेष्टाः, सर्जनादिरूपतच्चेष्टाप्रतिपादिकाः । काश्चित् तदात्मिकाः, तस्मिन्नात्मा तत्प्राप्तिसाधनशान्त्यादिरूपः स आत्मतत्त्वेन वा प्रतिपाद्यो यासां ताः कारागृहस्थानीयानि तानि । काश्चित्तद्गुणान् सर्वज्ञत्वसर्वेश्वरत्वादिरूपानेव गायन्त्य आत्मनोऽगाराणि अज्ञानाहङ्कारादीनि न सस्मरुः । परमार्थत्वेन न प्रतिपादयामासुरित्यर्थः ॥ ४४ ॥

पुनर्विरहव्याकुलचित्ताः परस्परं विचारयामासुः । अहो कुत्र गत्वा तदन्वेषणं विधेयमिति कयाचिदुक्ते, अहो अन्वेषणं प्रियस्य क्लेशमात्रावहम् । समीपमागता अस्मानालक्ष्य पलायनपरस्य क्लेशावश्यम्भावादित्यन्याभिरभिहिते, अहो सत्यं तस्य करुणां विना तत्प्राप्तिर्दुर्घटाऽतस्तत्प्राप्त्युपायो विधेय इत्यपराभिः कथनपूर्वं विचार्य तत्कीर्तनमेव बलवदुपायं निश्चित्य तदर्थं पुनः कालिन्द्याः पुलिनमागता इत्याह ।

पुनः पुलिनमागत्य कालिन्द्याः कृष्णभावनाः ॥
समवेता जगुः कृष्णं तदागमनकाङ्क्षिताः ॥ ४५ ॥

पुनरिति ॥ यत्र प्रेमपूर्वं संगम आसीत् तदेव कालिन्द्याः पुलिनं स्वसुखहेतुभूतप्रसरच्छन्दम् । यत्र वस्तु लुप्यते तत्रैवान्विष्यत इत्याशयेनागत्य गुप्तकृष्णभावनाः । प्रेष्ठमेव भावयन्ति ध्यायन्ति तथा तस्य श्रीकृष्णस्यागमनं काङ्क्षितं यासां ताः, समवेता मिलताः सत्यः कृष्णमेव जगुरूर्ध्वं गानं चक्रुः । विरहजनकदोषनिवृत्त्य-

ऽर्थं तस्य करुणोत्पत्त्यर्थं चोच्चैर्गानं, तदर्थं च समवेतत्वम् । कस्या अपि भाग्याद् स्नेहेन कृपया वाऽऽगच्छेदित्याशयेन वा समवेताः । अन्यां काञ्चिदादाय पुनः पलायनं कुर्यादित्याशयेन वा ॥ निवृत्तिपक्षे,पुनर्मायालक्षणायाः कालिन्द्याः पुलिन इति ॥ ४९ ॥

इति श्रीमद्भागवतव्याख्यायां गूढार्थदीपिकायां

दशमस्कन्धे त्रिंशोऽध्यायः ॥ ३० ॥ २ ॥



अथैकत्रिंशोऽध्यायः ॥

एकत्रिंशे शुभाध्याये गोपिकागीतसंज्ञके ॥
प्रार्थयन्त्यो जगुः कृष्णं प्रेम्णा गोप्य इतीर्यते ॥ १ ॥

अहो तस्य कलगीतेनाकृष्टा यथा तदन्तिकं प्राप्तास्तथा सोऽप्यस्मद्गीतेनाकृष्टोऽस्मदन्तिकं प्राप्स्यतीत्याशयेन गानमवृत्तानां भगवत्प्रियाणां गानमुदाहरति ॥

श्रीगोप्य ऊचुः ॥

जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हि ॥
दयित दृश्यतां दिक्षु तावकास्त्वयि धृतासवस्त्वां विचिन्वते १

जयतीति ॥ मङ्गलार्थमादौ जयतीति प्रयोगः । तथाच मङ्गलाऽर्थकत्वादादौ क्रियापदप्रयोगो न दोषावहः । अहो व्रजकृतार्थतार्थं कृतावतारेण त्वया सर्वोऽपि व्रजः कृतार्थीकृतस्तत्रत्या वयं किमर्थमुपेक्ष्यन्त इत्याशयेनाहुः ॥ तवाजस्य जन्मनाऽऽदिकारणविधुरस्य जन्मना स्वेच्छामात्रविलसितेन जन्मना प्रादुर्भावेण व्रजस्तत्स्थानत्वाज्जयति समस्तभूमिभुवःस्वर्लोकप्रदेशेभ्यः सर्वेभ्यो ब्रह्मलोकान्तेभ्य उत्कर्षेण वर्तते। तत्राप्यधिकं वैकुण्ठादपि जयति यद्यपि तत्रापि भगवान् वर्तते तथाप्येवंविधं जन्मादायैवंविधा लीला नाऽऽचरति। यद्यपि जन्मस्थानं मथुरा, तथापि तत्रत्यानां तदनुपलम्भात् । देवकीवसुदेवाभ्यामपि नन्दयशोदावन्न तु जन्मोपलब्धमपि तु विष्णुस्वरूपदर्शनमात्रम् । अत्रत्यलीलादर्शनं तु सर्वस्याऽपि दुर्वारमतो व्रज एवोत्कृष्टतम इति भावः । ननु मज्जन्मना व्रजस्य परमोत्कर्षो भवतीभिः कथमवगत इतिचेत् तत्राहुः ॥ श्रयत इति ॥ हि यस्मादिन्दिरा श्रीरत्र व्रजे श्रयते । वैकुण्ठे तु सैव प्राधान्यात् सैवेरा श्रीयत इत्यर्थः । तत्र हि शश्वत् सर्वदा तु सै-

यं नित्यां भार्याऽस्तस्या नैश्चिन्त्याच्च सर्वदाऽऽश्रयणमावश्यक-मत्र तु चेहीनां सपत्नीनामस्माकं सत्त्वादवसरलाभाय सर्वदा सेवन-म्। युक्तश्चैतत् । पतिव्रताशिरोमणिभूतायास्तस्या, भक्तेष्वनुग्रहा-तिशयं ख्यापयितुमन्याधीनतया वर्तमानस्य पत्युरनुवर्तनमिति भावः । यस्मादस्मदर्थमत्र भवतो जन्म, यस्माच्च नास्ति लक्ष्म्या भयं तयाऽङ्गीकृतत्वादतो, हे दयित, दृश्यतां त्वया प्रत्यक्षीभूय-ताम् । प्राणप्रियस्य प्रत्यक्षं तव प्राणस्थितिसाधनमिति संबोधना-शयः । किञ्च तावका व्रजस्त्रियस्त्वां दिक्षु विचिन्वते । तथाचात्रा-ऽनुग्रहार्थमवतीर्णस्य तव ब्रह्मादिभिरन्वेषणमुचितं, न तु व्रजवा-सिभिरिति भावः । ननु युष्माकं तादृशी भक्तिर्नास्ति इति कृत्वा-ऽहं तिरोहित इतिचेत् तत्राहुः ॥ त्वयि धृता असवः प्राणाः सर्वेन्द्रि-याणि याभिस्तास्तथाचैवंविधाः । त्वदीयानाम् अनाथवद्दिक्षु भ्राम्य-तीनामिदं महदसंगतमिति महद्दैन्यं व्यज्यते ॥ अनभिज्ञापक्षे, हे दयित, ते जन्मना व्रजस्य सर्वोऽपि जनोऽधिकं जयति । यद्दिनमा-रभ्यात्र तव जन्म जातं तद्दिनमारभ्य ब्रह्माण्डस्थेषु मध्ये कस्माच्चि-दपि व्रजवासिनां मध्ये कस्यापि पराजयो न जात इत्यैश्वर्यस्य परा काष्ठा ध्वनिता ॥ इन्दिरा संपदादिरूपा श्रीरपि अत्र व्रजे शश्वन्निरन्तरं श्रयते । श्रीरिति स्वनामसार्थक्याय व्रजमलङ्कृत्य वर्तते हि प्रसिद्धमिदमिदानीं लोकत्रये । तथाच, नारायणसमो गुणै-रिति ज्योतिर्विदग्रगण्येन गर्गाचार्येण भवज्जन्मपत्रे लिखितत्वा-न्नारायणसमत्वं त्वय्यनुभूयते व्रजे वैकुण्ठतुल्यत्वम् । अतोऽस्माकं विरहरहितवैकुण्ठवासिसमानत्वं कुतो नास्ति । तस्मादस्मास्वपि तथात्वं सम्पादयितुमवश्यमस्माभिर्भवान् दृश्यताम् । नच वैकुण्ठ-वासिनां नारायण इव युष्माकं नाहं प्रेष्ठ इति चेन् तत्राहुः ॥ दिक्षु तावका इति ॥ सर्वासु दिक्षु यावच्छक्त्याद्याप्यस्माभिरन्विष्य-

ते, तथापि भवान्न लभ्यते तत्र वयं किं कुर्म इति भावः । तत्रापि तावकास्त्वदनन्या, अत एव त्वामेव । अनेनासमाहितता निरस्ता । ननु परोक्षार्थं तिरोहितेन मयाऽवगतं– नाद्यापि युष्मत्प्रेमपरिपाकावस्था सम्पन्ना । मद्विरहेऽपि जीवनदर्शनादितिचेत् तत्राहुः ॥ त्वयि त्वत्प्राप्त्याशया धृतासवो जीवन्तीत्यर्थः । तन्निवृत्त्या तु तावकानां जीवनं दुर्लभमतो झटिति दृश्यताम्।मरणपर्य्यन्तपरीक्षापा अनुचितत्वादिति भावः ॥ मानिनीपक्षे, तव व्रजो यासामस्माकं जन्मना अधिकं जयति श्रीश्च शश्वदत्रैव श्रयते, तथाभूतास्तावकास्त्वां विचिन्वत इति दृश्यतां ज्ञायताम् । परमोत्कर्षैश्वर्य्यादिहेतुभूतस्वजनदुःखाऽपरिज्ञानरूपमान्ध्यं नोचितमिति भावः । न च साधारणसम्बन्धः, किन्तु प्रेष्ठो भवानिति सम्बोधनाशयः । किञ्च, त्वयि धृतासवस्त्वत्प्राप्त्याशया धृतजीवनाः । तथाच तन्निवृत्त्या मृतास्वस्मासु तवापि परमोत्कर्षादिकं न स्थास्यतीति भावः। यद्वा, ननु दयिते मयि वियुक्ते भवतीनामेतावत्पर्य्यन्तं कथं प्राणा देहे स्थिता इतिचेत् तत्राहुः ॥ त्वयीति ॥ कठोरशिरोमणिभूते असंख्यातस्वसखीजनपरमतापहेतुक्रीडापरे स्वीयदुःखजनितदुःखाऽम्बुधिमग्ने धृताः स्थापिताः प्राणाः याभिस्ताः । तथाच यथा स्वगृहे दह्यमानेऽप्यन्यदीयगृहस्थं वस्तु न दह्यते तथा त्वयि स्थितत्वादस्मत्प्राणानामेतावत्पर्य्यन्तं रक्षा जातेति भावः । यद्वा यद्यपि तव जन्मना व्रजोऽधिकं जयति श्रीश्च शश्वदत्रैव श्रयते तथापि वृथैवेदं सर्वम् । यतस्त्वयि धृतासवस्त्वदर्पितप्राणादयस्तावकास्त्वां विचिन्वते । अद्यापि दुःखिता एव सन्ति, तस्मात् सुहृदननुग्राहिकायाः समृद्धेर्वैयर्थ्यं दृश्यतां ज्ञायताम् । तद्वैयर्थ्यपरिहाराय प्रत्यक्षीभूयतामिति वा । दयितत्वात् तवेदं हितं वदाम इति सम्बोधनाशयः ॥

निवृत्तिपक्षे, अधिष्ठानभूतचिदात्मनैवेदं देहादिसमस्तं शोभत इति श्रुतय आहुः ॥ जयतीति ॥ हे दयित परप्रेमास्पद तव जन्मना प्रादुर्भावेण व्रजो देहेन्द्रियसंघातोऽधिकं जयति सत्तास्फूर्तिमत्तयाऽवभासते तथेन्द्रियशोभाप्यत्रैव निरन्तरं श्रयते सौन्दर्यादिगुणाक्रान्ततया प्रतीयते । तस्माद् यस्यात्मनस्तव सत्तादिना मिथ्याभूतस्यात्यन्तमलिनस्याऽप्येवं प्रतीतिस्तेन त्वया दृश्यताम् । विद्वदनुभवविषयत्वं प्राप्यताम् । के ते विद्वांस इत्यपेक्षायाहुः ॥ ये त्वयि धृतासवस्तावकाः । तानि सर्वाणि संयम्य युक्त आसीत मत्परः, मच्चित्ता मद्गतप्राणा इत्यादिनोक्तलक्षणा भवदीयास्त्वां सर्वाधिष्ठानभूतं परमात्मानं विचिन्वते अन्वेषणपराः सन्ति । तथाच पञ्चकोशविवेचनात्मकान्वेषणप्रकार उक्तस्तैत्तिरीयश्रुतौ । तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तरात्मा प्राणमयः । तस्माद्वा एतस्मात् प्राणमयादन्योऽन्तरात्मा मनोमयः । तस्माद्वा एतस्मान्मनोमयादन्योऽन्तरात्मा विज्ञानमयः । तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तरात्माऽऽनन्दमयस्तस्य प्रियमेव शिरो मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्ष आनन्द आत्मा ब्रह्मपुच्छं प्रतिष्ठा । असन्नेव स भवत्यसद् ब्रह्मेति वेदचेत्, अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति । यद्वा व्रजः श्रुतिकदम्बस्तव जन्मना प्रादुर्भावेण प्रकटवेदार्थभूतेन त्वयाऽधिकं जयतिं शोभां च महतीं प्राप्नोति । हि यस्मादतो ये त्वयि धृतासवस्त्वां विचिन्वते तेषां श्रुतिकदम्बे भवान् दृश्यतामित्यर्थः । यद्वा तवाविर्भावेण व्रजः संघातोऽधिकं जयति, श्रीश्च विद्वद्देहादौ शश्वच्छ्रयते । अतो ये विचिन्वते तेषां दृश्यताम् । एषु पद्येषु पादद्वितीयाक्षरहलैक्यं केषुचित् पादेषु प्रथमसप्तमाक्षरहलैक्यमालङ्कारिकसमयसिद्धसावर्ण्यात् क्वचिदैक्यमिति द्रष्टव्यम् । एकादशाक्षरे त्रिष्टुप्संज्ञके छन्दसि चतुःषष्ट्युत्तरषट्शत-

तमो भेदः ॥ १ ॥

अहो यो गुडदानेन म्रियेत तस्मै विषं किमर्थं देयमिति लौकिकन्यायादीषदारक्तकटाक्षसाध्याऽस्मद्वधार्थतिरोधानं नोचितमित्याशयेनाहुः ॥

शरदुदाशये साधुजातसत्सरसिजोदरश्रीमुषा दृशा ॥
सुरतनाथ ते शुल्कदासिका वरद निघ्नतो नेह किं वधः ॥ २ ॥

शरदिति ॥ शरत्कालीनो यः स्वच्छजलाशयस्तत्र साधु सम्यक् प्रकारेण जातं सत्समीचीनं यत् सरसिजं कमलं तदन्तर्वर्तिनी या श्रीरारुण्यशोभा तां मुष्णातीति तथा तादृशरूपया रोषेणेषद्रक्तया दृशा नेत्रेण अमूल्यदासिका नो निघ्नतो मारयतस्तव त्वया क्रियमाणोऽयमिह लोके किं वधो न भवति । किं विरहानलज्वालया वधो भवति । यतो, हे सुरतनाथ सुरतस्य सम्भोगस्य नाथ तत्प्रद । तथाच सुरतनाथस्य तव रोषदृष्ट्यैवाऽस्माकं मरणं सुकरमिति भावः। ननु रोषतिरोधानयोरुभयोरपि मरणहेतुत्वाविशेषात् किमर्थमेवमुच्यते इति चेत् सत्यं, तथापि क्षमापनादिना रोषदृष्ट्युपशमस्यापि सम्भवादस्ति विशेष इत्याशयेनाहुः ॥ वरदेति ॥ समक्षे प्रेष्ठेऽतिप्रार्थनया वरदत्वं सम्पादयितुं शक्यमऽसमक्षे त्वशक्यप्रतीकारतेति भावः । तथाचाऽस्मद्दर्पनाश एव भवतः कर्तुं समीहितो, न तु प्राणवियोगः । करुणानिधेरिष्टदेवस्य तत्साधने प्रवृत्त्यसम्भवादतस्तन्निवृत्तिस्त्वीषद्रोषदृष्ट्यैव सुकराऽतो वृथैव तिरोहितोऽसीति भावः । यद्वा, ननु नाहं युष्माकं मरणे व्यापृतः, स्वत एव भवतीनां प्राणा अपगच्छन्ति चेत् तत्र मम कोऽपराध इतिचेत् तत्राहुः ॥ शरदिति ॥ तत्र दृशा दर्शनेन निघ्नतः किं वधो न । तत्रापि हे सुरतनाथ । सुरतार्थमागतानां तत्प्राप्तिस्तु

दूरे गता, प्रत्युत मरणमेव मध्य उपस्थितमित्यतोऽस्मन्मन्दभाग्यस्य सुरतप्रदान्मरणप्रापकत्वस्य माहात्म्यमिति भावः । किञ्चास्मद्वधे किंचिदं त्वद्दर्शनं तथाभूतां श्रियमपि मुष्णाति नाशयतीति तथा। किञ्च सर्वेषां वरप्रदस्त्वमस्मान्मारयसीति महच्चित्रमित्याशयेन संबोधयति हे वरदेति ॥ तथाच सर्वेषां वरदानाय प्रत्यक्षभवनशीलस्य तवाऽस्मन्मन्दभाग्यवशादस्मन्मरणसाधनं तव तिरोधानं सम्पन्नमित्याक्रोशोऽपि ध्वनितः ॥ अनभिज्ञापक्षे, विचिन्वन्तु भवत्यो, मया तु नागम्यत इति चेत् तर्हि दृशाऽस्मत्सर्वस्वमपहृत्य गतेन त्वयाऽस्मद्वध एव संपादित इत्याशयेनाहुः ॥ शरदिति ॥ यथोक्तया दृशा निघ्नतस्तव त्वया क्रियमाण इह लोके वधो न किम्। अभिचारादिकर्मणा कृतो लोकैरज्ञातोऽपि वधोऽनिष्टसाधनं किं न भवतीति भावः॥ दृशैव शुल्केन मूल्येन दासिका अपि मारयतः। कन्प्रत्ययेन सूचनेनात्यन्तकरुणापात्रतां व्यञ्जयन्ति । यद्वा वयं तु न त्वया मूल्येन क्रीता नापि विवाहिता, अपि त्वऽशुल्कदासिकाः स्वयमेव मौग्ध्येनाभूमेत्यर्थः। तस्मात् सुरतरूपवरप्रदानेनास्मत्प्राणप्रत्यर्पणाय दृश्यतामित्याशयेनाहु ॥ हे सुरतनाथ, हे वरद ॥ मानिनीपक्षे, अहो अस्मद्वधायानुनयं कर्तुं प्रवृत्तस्य तवाभिप्रायस्तदानीमस्माभिर्न बुद्धोऽधुना त्वसंख्यातस्त्रीवधादपि भयशून्यस्तथा प्रवृत्त इत्याशयेनाहुः॥ शरदिति ॥ दृशा सुरतयाचक ! न केवलयाचनमात्रसमर्था तव दृक्, किन्तु चौर्य्यकर्माऽपीति द्योतनाय विशिषन्ति ॥ शरादिति ॥ यथा चौरः सतामपि निगूढां कठिनदुर्गस्थामपि नायिकां मुष्णातीति तथा। तथा यदेवम्भूता श्रीरपि हृता तदा सरलानां सर्वत्र भ्रमतीनां विवृतश्रोत्रादिकवाटानां मनआदिहरणे किञ्चित्रमिति भावः। यद्वा, हे सुष्ठु रतानां नाथ उपतापक, हे निजवरच्छादक, अशुल्कदासिकाः परमप्रेमवतीः सखीर्नः । अतो मित्रद्रोहाऽऽदि-

दोषपरिहारायागम्यतामिति भावः ॥

निवृत्तिपक्षे, तव दर्शनेनैव संसारनिवृत्तिर्नान्यथेत्याहुः ॥ शरदिति ॥ शरत्कालीनजलवत्स्वच्छे आशये अन्तःकरणे ते तव दृशा दर्शनेन किं किमप्यनिर्वचनीयमज्ञानं शुल्कस्य तत्तद्विषयस्य दासिकास्तत्तदाकारा अन्तःकरणवृत्तीश्च निघ्नतो नाशयतो विदुष इह वधो नाशो जन्ममरणलक्षणसंसृतिप्रवेशलक्षणो न भवति । तथाच श्रुतयः आत्मन्येवात्मानं पश्येत् । तरति शोकमात्मवित् । ब्रह्मविदाप्नोति परम् । न स पुनरावर्तत इत्याद्याः । अज्ञानतत्कार्ययोर्ज्ञाननिवर्त्यत्वमुक्तमित्याशयेनाहुः ॥ असाधुजातमनिर्वचनीयोत्पत्तिमद्, यत् सरसिजं सद्रूपब्रह्मलक्षणे सरसि अधिष्ठाने प्रतीतं कमलस्थानीयमज्ञानं तदुदरश्रीश्च तदुभयं मुष्णाति नाशयतीति तथा तयेत्यर्थः ॥ २ ॥

किञ्च बहुभ्यो मृत्युभ्यो रक्षित्वा विरहाग्निना मारणाय प्रवृत्तौ निमित्तं न विद्म इत्याशयेनाहुः ।

विषजलाप्ययाद् व्यालराक्षसाद् वर्षमारुताद्वैद्युतानलात् ॥
वृषमयात्मजाद्विश्वतो भयादृषभ ते वयं रक्षिता मुहुः ॥ ३ ॥

विषेति ॥ विषजलं कालियह्रदजलं तेनाप्ययो गोपानां नाशस्तस्मात् । व्यालराक्षसाद् वत्सपालान् गिलतोऽघासुराद् वत्सपालादिरक्षणेन परम्परया वयमपि रक्षिताः । वर्षयुक्तान्मारुताद् वैद्युतानलादशनिपाताच्चेन्द्रकृताद् गोवर्द्धनधारणेन । साक्षाद् वृषो वृषभासुरारिष्टः । मयात्मजाद् व्योमासुरात् । तच्चरितमग्रे वक्ष्यमाणमपि रासोत्सवात् पूर्वं जातमिति द्रष्टव्यम् । तल्लीलाया आंतबाल्य एव योग्यत्वात् । किं बहुना अन्यस्मादपि सर्वतो भयाद्, हे ऋषभ सर्वोत्तम वयं रक्षिताः । तथाच यथा श्रेष्ठत्वात् पूर्वं रक्षि-

तास्तथेदानीमपि दर्शनप्रदानेनास्मद्रक्षणमेवोचितं, न तु स्वभाव-स्याग इति भावः ॥ अनभिज्ञापक्षे, तत्र तत्र स्वरक्षणेन यथा वयं रक्षितास्तथेदानीमपि स्वप्रकटनेन रक्षणीया इति भावः ॥

मानिनीपक्षे, ननु यदि भवतीनां वधो ममाऽभीप्सितः स्यात् तर्हि भवत्यो न रक्षिताः स्युरित्याशङ्क्याहुः ॥ विषेति ॥ तथाच स्वहस्तेन वधार्थमेव रक्षिता इति वर्तमानकालीनया प्रवृत्त्या ज्ञायत इति भावः । तत्र तत्र रक्षणपरायणे श्रेष्ठत्वेन ख्याते त्वयि विश्वस्तानामस्माकं घातो नोचितो, विश्वासघाताख्यकर्मकर्तृत्वायोग्यत्वाच्छ्रेष्ठस्य तवेति संबोधनाशयः ॥

निवृत्तिपक्षे, किञ्चास्माकमपि तत्र तत्त्वज्ञानादेव रक्षणं भवति, नान्यथेत्याहुः ॥ विषेति ॥ ते तव ज्ञानादिति शेषः । हे ऋषभ क्षराक्षरातीतपुरुषोत्तम, तव ज्ञानाद्धेतुभूतादधिकारिभिस्त्वदनुग्रहेण संपादितात्पुनः पुनर्वयं रक्षिता जाताः।परमात्मज्ञानस्य विशेषणानि विषरूपस्य, बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यतीति भयहेतुत्वेनाभितस्य जलस्य, डलयोरभेदाज्जडस्याल्पश्रुतस्याप्ययात् पलायनकरात् । पुनश्च व्यालानां बहुश्रुतत्वेऽपि विपरीतार्थकल्पकत्वात् खलानां, राक्षसाद् राक्षसवद्भयङ्करात् । व्यालो दुष्टगजे सर्पे खले श्वापदसिंहयोरिति मेदिनी । वर्षस्य दुःखवृष्टेर्मारुताद् वातवत्तन्नाशकरात् । तत्र को मोहः कः शोक एकत्वमनुपश्यत इत्यादिश्रुतेः । तथा वैद्युताद् विद्युद्वद् निष्प्रभतरणादिस्थानीयं ज्ञानं वैद्युतम् । विद्युत्तडिति सन्ध्यायां स्त्रियां त्रिषु तु निष्प्रभे इति मेदिनी । तदेव वैद्युतं, तत्सम्बन्ध्यहङ्कारादिकं वा । तस्याऽनलादनलवद्दाहकात् । तथा वृषमयात्मजाद् भगवदाराधनलक्षणं निष्कामं कर्म नित्यादि समाध्यन्तं वृषशब्दप्रतिपाद्यम् । तन्मयादात्मनोऽन्तःकरणाज्जातात् । अत एव, विश्वतः सर्वतः

अभयात् सर्वमकारिणाऽनुच्छेद्यात् । हेतुबाधेन सर्वभयोच्छेदकरादिति वा । द्वितीयाद्वै भयं भवतीति श्रुतेः ॥ ३ ॥

युक्तं चास्मदादिरक्षणं, तदर्थमेव नन्दनन्दनविग्रहात्मनाऽऽविर्भूतत्वादित्याशयेनाहुः ।

न खलु गोपिकानन्दनो भवा-
नखिलदेहिनामन्तरात्मदृक् ॥
विखनसार्थितो विश्वगुप्तये
सख उदेयिवान् सात्त्वतां कुले ॥ ४ ॥

नेति ॥ गोपिकाया यशोदाया नन्दनः सुतो भवान्न भवतीति प्रसिद्धम् । किन्तु सर्वप्राणिनां योऽन्तरात्मा तस्य दृक् साक्षी अन्तर्यामी भवान् एवम्भूतोऽपि विखनसा ब्रह्मणाऽर्थितो विश्वस्य रक्षणाय प्रार्थितः सन् सात्वतां यादवानां कुले उदेयिवान् प्रादुर्भूतः । नन्वेवंजानतीभिः किमित्युक्तं— निघ्नतो नेह किं वध इति तस्मात्तिरोहित एव स्थास्यामि, यथा युष्माकं कदापि दर्शनं न भवेदित्याशङ्क्याहुः ॥ सख इति ॥ तथाच भवद्दत्तसख्यानुरूपेयमुक्तिः करुणोद्दीपिका, न तु कोपावहाऽतो विश्वगोपनाय प्रादुर्भूतस्य तव तन्मध्यगतानां स्वयं सखीभावावेशितानां करुणयापालनमेवानुरूपमिति भावः । यद्वा सर्वान्तरवृत्त्यभिज्ञस्य तवास्मदन्तःकरणानि प्रेमानिरेकोपरि दृष्टिः कर्तुं युक्ता, न तु दर्पाभासोपालम्भोत्पादिगणनेत्याशयेनाहुः ॥ नेति ॥ अनभिज्ञापक्षे, तथाच कालियमर्दनादिना स्वीयरक्षणादिना लोकोत्तरसामर्थ्यप्रकटनाद्वयमेवं तर्कयामि इत्याशयेनाहुः ॥ नेति ॥ खलुशब्दो वितर्के । सर्वापेक्षयाऽल्पबलाया गोप्याः सुतो भवान्न, किन्तु सर्वदेहिनामन्तरात्म-

हगिति तर्क्यतेऽस्माभिः । ननु सर्वान्तर्यामिणो मम देहिभावेन कथमुत्पत्तिरित्याशङ्क्याहुः ॥ विखनसेति ॥ सात्त्वतां सात्त्विकानां सज्जानानां कुले विश्वगुप्तये उदेयिवान् । तस्मात तवाविर्भावो, न तु जन्माऽतः सर्वपालनायावतीर्णस्य तव सखीनामस्माकमुपेक्षा नोचिता । दर्पोऽप्यस्माकं त्वदुत्कर्षहेतुरतः कोपं विहायागन्तव्यमिति भावः ॥ मानिनीपक्षे अहो निर्दयशिरोमणिरयं क इति बहु विचार्य्य यथाऽस्माभिर्भवान्निश्चिनस्तथेत्याशयेनाऽऽहुः ॥ नेति ॥ भवान् करुणाहीनः प्रेयसीदुःखाभ्यां तदाविष्टस्वान्तायाः श्रीयशोदाया नन्दनस्तदीयानां दुःखदत्वादानन्दजनकः सुतो न भवति । तर्हि कोऽहं निश्चिन इतिचेत्तत्राहुः ॥ सर्वप्राणिनामन्तर्यामीस एव परमदुःखदनां दुःखं पश्यन्नपि तदन्तः सुखं वमाति । सर्वान्तःस्थस्य तस्यावहिराविर्भावे निमित्तमपि वयं विद्म इत्याहुः ॥ विखनसेति ॥ स्वसृष्टिवृद्धिमभीप्सुना ब्रह्मणा विश्वगुप्तये प्रार्थितः—त्वद्भक्त्या जीवानां मोक्षो भवत्यतस्त्वमवतीर्य्य गुप्तस्तिष्ठतदेश्वरत्वादिनामपि त्वीश्वरमन्यं मन्यमानानामपि मोक्षो दुर्लभो भविष्यति, तत एव मे सृष्टेर्वृद्धिर्भविष्यतीति विधिवाञ्छितसिद्ध्यर्थं परदारपरद्रव्यचौर्य्यादिकं स्वस्वभावप्रतिकूलं स्वगोपनार्थमङ्गीकर्तुं सात्त्वतां कुले उदेयिवान् । अत एव परदाराणामस्माकं सख्यमाश्रितवानिति संबोधनाशयः । यद्यपि स्वगोपनार्थमेव त्वं प्रवृत्तस्तथाप्यस्मद्दुःखकरमौदासीन्यं किमिति स्वज्ञापकं चिह्नं पुनर्गृहीतवानतः स्वप्रकटतासंपादकं तद् सर्वथा नाश्रयणीयमिति भावः । यो विश्वस्य प्रपञ्चस्य मोक्षमार्गेऽप्रवृत्तिसम्पादनेन संरक्षणार्थं सात्त्वतां दयादिसात्त्विकधर्मवतां कुले तेषामपि ततो वैमुख्यसम्पादनार्थमुदेयिवान् अस्माकमपि स्वधर्माद्विच्युतिसिद्ध्यर्थं सख्यं गृहीतवानिति सम्बोधनाशयः । यद्वा प्रथमं निर्दिष्टस्य

नञः सर्वपादैः सम्बन्धः । भवान् गोपिकानन्दनो न खलु प्रसिद्धं तद्रक्षणाद् व्यावृत्तत्वात् । नाप्यखिलदेहिनां हृद्गतभावज्ञः । अस्मन्मनोगतप्रेमातिरेकाज्ञानात् । तथा विखनसां, न हिंस्यात् सर्वाभूतानीत्यादिवेदवाक्यैर्विश्वगुप्त्यर्थं न प्रार्थितो, यथोक्तप्रार्थनावाक्यमपि न श्रुतवान्, अस्मद्धिंसापरायणत्वात् । नाऽपि सात्त्वतां कुले उदेयिवान् तत्कुलोचितकृपालुत्वाद्यदर्शनात् । तथा तद्धर्मासम्पादनाद् वृथैव गोपिकानन्दनत्वादिना ख्यातोऽसीति भावः । अत एव सखित्वेन ख्यातः सखा न भवसि शत्रुधर्म्माक्रान्तत्वादित्याशयेन सम्बोधयति, हे असख्य इति ॥

निवृत्तिपक्षे, खलुशब्दो निषेधे । भवान् गोपिकानां श्रुतीनामस्माकमानन्दकरो न भवतीति न, यतोऽखिलदेहिनामन्तरात्मदृक् । यो विज्ञाने तिष्ठन् विज्ञानमन्तरो यमयति यं विज्ञानं न वेदैष त आत्मान्तर्याम्यऽमृत इति श्रुतेः । विशेषेणाखनति वेदार्थं विचारयतीति विखना विद्वान् तेनार्थितो विषयीभूतमोक्षरूपो विश्वस्य सर्वस्य सकार्यकारणसङ्घातस्य गुप्तये सत्त्वः स्वैरिन्द्रियैः सह वर्तमानः सन् सत्त्ववतां मनआदीनां समुदाये उदेयिवान् । अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि । अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् * जीवभूतां महाबाहो ययेदं धार्य्यते जगदिति श्रुतिस्मृतिभ्याम् ॥ ४ ॥

तस्मात् त्वद्भक्तानामस्माकमेतत्प्रार्थनाचतुष्टयं सम्पादयेत्याहुः ।

विरचिताभयं वृष्णिधुर्य्य ते
चरणमीयुषां संसतेर्भयात् ॥
करसरोरुहं कान्तकामदं
शिरसि धेहि नः श्रीकरग्रहम् ॥ ५ ॥

विरचितेति, चतुर्भिः ॥ करसरोरुहं नोऽस्माकं शिरसि धेहि तत्र स्थापनेनान्तःकरणस्थस्य तापस्योपशमो भविष्यति सरोरुहात्मकस्यात्यन्तशीतलत्वादिति सरोरुहपदेन सूचितम् । न केवलं तापोपशामकं किन्तु कामदं सकलमनोरथपूर्तिकरम् । ननु स्वकान्तस्येदं कृत्यमिति चेत्व तत्राहुः ॥ कान्तेति ॥ ननु योगिध्येयः कस्यापि कान्तो न भवति, कुतो भवतीनामित्याशङ्क्याहुः ॥ श्रियः करस्य ग्रहो ग्रहणं येन तत् । यथा तव गृहस्थो भगवान् यथा श्रियं हस्ते गृहीतवाँस्तस्माच्छिरसि हस्तं धारयतु, नास्ति किञ्चिद्बाधकमिति भावः । ननु श्रियो विधिपूर्वकं हस्तग्रहणम्भवतीनां शिरोग्रहणे को हेतुरस्तीति चेत्तत्राहुः ॥ शरणमीयुषां तव शरणागतत्वाभिलाषाणां विरचितमभयं येन तत् । एवञ्च विवाहितापेक्षयापि शरणागतानामस्माकं कामशत्रोः सकाशात् पालनमत्यावश्यकम् । शरणागतपालनस्येश्वरस्य तव निजधर्म्मत्वात् । ननु तथापि निषिद्धोऽयं प्रकारः सर्वथापि वर्जनीय इतिचेत् तत्राहुः ॥ वृष्णिधुर्य्य, यदुकुलोद्भवस्य वहुस्त्रीकस्य वृष्णेर्वंशधुर्य्यः श्रेष्ठो भवान् पतित्वेन वृतोऽस्माभिरतो नास्ति दोषः । तस्माद् दृष्टादृष्टदुःखमपाकर्तुं योग्योऽसीति भावः । यद्वा यस्माद्विश्वस्य गुप्तये भगवत उदयस्तस्मादावश्यकत्वाद्यथाऽस्मद्रक्षणं तथा त्वयावश्यं विधेयमित्याहुः ॥ विरचितेति ॥ मदीया भवत्य इत्याश्वासनार्थं करसरोरुहं नः शिरसि निधेहि तत्स्थापनेन त्रिवर्गसिद्धिरस्माकं भविष्यतीत्याशयेनाहुः ॥ कामदम् ॥ यतोऽस्मत्कान्तत्वेनावतीर्णस्य भगवतोऽस्मन्मनोरथपूर्तिरावश्यकीत्याशयेन सम्बोधयन्ति ॥ कान्तेति ॥ ननु भवतीनां सन्ति पतयोऽतः कथमहं कान्तः, कथं च मद्धस्तसरोरुहं कामदमितिचेत् तत्राहुः ॥ श्रीकरग्रहम् ॥ यथा श्रीपतित्वेन प्रसिद्धा अपि न वस्तुतः श्रियः पतयः, किन्तु सुव-

र्णादिमायिकरूपापन्नायास्तस्याः । अत एव भगवद्धस्तकमलं स-त्करग्रहं, तथाऽस्माकमपि मायिकरूपान्तरमभजँस्ते । मुख्यस्तु कान्तो भवानेवात एवास्मान् स्वीकृतवानित्याशयः ॥ किञ्च, संसृतेर्भयाच्छरणमीयुषां विरचिताभयं मोक्षप्रदं चरणं प्रपन्नानामित्यर्थः । सर्वस्य मनोरथानुरूपफलप्रदानाय वृष्णिषु श्रेष्ठत्वेन भवानवतीर्ण इत्याशयेनाहुः ॥ वृष्णिधुर्य्य ॥ अनभिज्ञपक्षे, युष्मत्प्रार्थनामाकर्ण्य स्वस्मिँस्तत्करणसामर्थ्यमवधार्य्याहं प्रकटितो भविष्यामीति तदभिप्रायमालक्ष्य सुकरं प्रार्थयन्ति ॥ हे कान्त, करसरोरुहं नः शिरसि धेहि । किमर्थमितिचेत् तत्राहुः ॥ कामदम् ॥ शरप्रहारपरस्य कामस्य खण्डनकरं तदुद्दीपकं च । अनेन रतिप्रार्थनमपि व्यञ्जयन्ति । अन्यथा सर्वाप्यस्माकम् अलंक्रिया कान्ताननुमोदनाद् वृथाभविष्यतीत्याशयेनाहुः ॥ श्रीकरः सर्वशोभापूर्तिकरः ग्रहो येन यत्कर्तृकं शिरोग्रहणं सर्वालङ्कारशोभाकरमिति यावत् । नन्वार्य्यमार्गाद् यद्भयं तत्सत्त्वे कथं तेन सुखं भविष्यतीतिचेत्तत्राहुः ॥ सम्यक्सृतेर्मार्गाद्यद्भयं तदुल्लङ्घनजन्यं तस्मादपि तव शरणं गतानां विरचिताभयम् । इन्द्रादेरपि पराजयं कर्तुं समर्थस्य तव त्वदीयानां च नास्ति सन्मार्गादपि भयम् । प्रबलेन त्वया प्रवर्तितस्य सन्मार्गत्वात् । तदुक्तं, सर्वं बलवतां पथ्यं सर्वं बलवतां शुचि * सर्वं बलवतां धर्म्मः सर्वं बलवतां स्वकमिति । प्रागयं वसुदेवस्येत्यनुरोधेन वृष्णिधुर्य्येति सम्बोधनम् । तथाच पालनशक्तिमनस्तवास्मत्पालनमेवोचितमिति तदाशयः ॥ मानिनीपक्षे, नोऽस्माकं मध्ये तव सतः सम्यक्पलायनादितोऽपि दूरतरतिरोधानाद्यद्भयं तस्माच्छरणं प्राप्तानां शिरसि करसरोरुहं निधेहि । यतः पूर्वं विरचितमभयं येन । जन्मान्तरे क्षत्रवंशोद्भवत्वादभयप्रदत्वमुचितमेव तव हस्तस्येति द्योतयन्त्यः सम्बोधयन्ति ॥ हे वृष्णिधुर्य्येति ॥

पुनश्च हे तत्कान्त ॥ तासां कामद । तथाच कान्तभावमङ्गीकृत्य येन हस्तकमलेन कामं दत्तवाँस्तस्याधुना शिरसि स्थापने को विलम्ब इति भावः । पुनश्च, श्रीकरग्रहम् ॥ शोभाकरग्रहणयोग्यम् । तथाच तदभावे तासां शिर एव पतिष्यतीति भावः ॥

निवृत्तिपक्षे, अतः स्वस्वरूपप्रकाशनार्थं त्वं कुर्विति प्रार्थयन्ति । विरचितेति ॥ हे वृष्णिधुर्य्य, नृणां निःश्रेयसार्थं गृहीतकृष्णाद्यवतार, तव शरणमीयुषां भगवच्चित्तत्वादिप्रपन्नलक्षणवतां श्रीकरग्रहं मोक्षश्रीसम्पादकमाग्रहं नोऽस्माकं श्रुतीनां शिरसि मस्तके उपनिषद्भागे. कं तद्रूपो रसो, ब्रह्मानन्दात्मकरसं राति ददातीति करमरस्त्वं निधेहि । श्रीकरेति सम्बोधनं वा । तथात्वे सति मत्प्राप्तिस्तेषां सुकरेत्याहुः ॥ हे कान्त ॥ अस्मत्प्रतिपाद्य, कामं द्यति खण्डयतीति तं सर्ववासनोच्छेदकरम् । पुनश्च, अरुहम् अरूणि वेदरूपशब्दप्रमाणाद् बाह्यानि मतानि हन्तीति तथा तम् । अत एव संसृतेर्भयाद्विरचिताभयम् । एवम्भूतग्रहस्य त्वत्कृपां विनोदयासम्भवात्तदर्थं त्वां प्रार्थयाम इति भावः ॥ ५ ॥

अपराः प्रार्थयन्ति ।

व्रजजनार्तिहन् वीरयोषितां
निजजनस्मयध्वंसनस्मित ॥
भज सखे भवत्किङ्करीः स्म नो
जलरुहाननं चारु दर्शय ॥ ६ ॥

व्रजजनार्तिहन् व्रजजनपीडानाशाय कृतावतार । तथाच स्वावतारसामान्यप्रयोजनमवलोक्याप्यस्मदार्तिनाशनं तवोचितम् । न चातोऽधिका काचिदार्तिरस्त्यस्माकमिति भावः । किञ्च, हे

योषितां वीर दानशूर ब्रह्मादिभिरप्यशक्यपूरणाया अस्मदिच्छायाः पूरक । ननु सत्यमेवं तथापि भवतीनां मानरूपं दोषमवलोक्य तन्निरासाय तिरोहितोऽस्मीतिचेत् तत्राहुः ॥ निजेति ॥ निजजनानामस्मदादिस्वसेवकानां स्मयस्य गर्वस्य ध्वसनं स्मितं यस्य । तथाच स्मितमात्रस्यैवोत्कटप्रार्थनोत्पादनेन तन्नाशकस्य सम्भवात् किमर्थं तिरोधानाय प्रवृत्तोऽसीति भावः ॥ स्मितेन हाससङ्केतेनैव गर्वध्वंसो भवतीति वा । अतोऽस्मान् भज सेवय । ननु पालनप्रार्थनाधिकारवतीनां, भजेति प्रार्थनादद्यापि स्मयो न निवृत्त इति गम्यत इतिचेत् तत्राहुः ॥ भवत्किङ्करीरिति ॥ अस्मत्कृतसेवनसदृशभवत्कर्तृकसेवनेनैवास्मत्पालनं नान्यथा । तच्चावश्यकम् । ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमितिभवत्प्रतिज्ञासत्त्वात् तदनुसारेण गृहीतसखिभावस्य यथोक्तप्रार्थनायामनौचित्यशङ्का नो कार्येति द्योतनाय संबोधयन्ति ॥ हे सख इति ॥ अस्मत्कैङ्कर्यं प्रसिद्धम् । यद्वा यथेच्छास्ति तथा कुरु, संप्रति तु कमलात्मकं स्वमुखं चारुमनोहरमस्माकं दर्शयेति सदैन्यं प्रार्थनम् ॥ अनभिज्ञापक्षे, हे वीर प्रदेयस्य दाने समर्थ नोऽस्मान् भजाऽस्मन्निकटे सर्वदा तिष्ठ । प्रथमं तु चारु जलरुहाननं योषितामबलानां नो दर्शय । यतो, हे व्रजजनार्तिहन् ॥ अन्यथास्मन्मरणावश्यम्भावादार्तिनाशनव्रतभङ्गः स्यादिति भावः । गर्वध्वंसनायान्तर्धानं नोचितं, तस्य सुकरोपायसाध्यत्वादित्याशयेनाहुः ॥ निजेति ॥ ननु पूर्वं कुतो गर्वं कृतवत्य इत्याशङ्क्य किङ्करीणामप्यस्माकं त्वयैव सख्यपदे संस्थापितत्वादित्याशयेनाहुः ॥ सखे, भवत्किङ्करीरिति ॥ यद्वा अस्मत्त्याग एव यदि तत्राग्रहस्तर्हि संप्रत्यस्मन्मरणकाले चारु स्वमुखपद्मं संदर्शय, दृष्ट्वा प्राणत्यागं करिष्याम इत्यर्थः ॥ मानिनीपक्षे, व्रजजनार्तिहर्तापि योषितां वीरस्तद्वधे समर्थः । अत एव

# विज्ञापनम् ।

## बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषाविबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य कृते ॥।) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां कृते १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

### तत्र मुद्रिता ग्रन्थाः ।

| | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख०६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ६ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्डानि ३ । द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहित खण्डानि ३ ) | ६ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |

| | | |
|---|---|---|
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ८ | ८ | ० |
| वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ | ३ | ० |
| टुप्टीका खण्डानि ४ | ४ | ० |
| पातञ्जलदर्शनम्। श्रीरामानन्दयतिकृतमणिप्रभाख्यवृत्ति स० | १ | ० |
| व्याकरण मिताक्षरा। श्रीमदन्नंभट्टप्रणीता खण्डानि १० | १० | ० |
| रसमञ्जरी। व्यङ्ग्यार्थकौमुदी प्रकाशेन च सहिता ख० ३ | ३ | ० |
| भेदधिक्कारः व्याख्यासहितः श्रीमदप्पयदीक्षितकृत उपक्रम पराक्रमसहितः खण्डे २ | २ | ० |
| बोधसारो नरहरिकृतः नाच्छ्यदिवाकरकृतटीकया स० ख० | १० | ० |
| ब्रह्मसूत्रदीपिका श्रीमच्छङ्करानन्दभगवद्भिर्रचिता खण्डे २ | २ | ० |
| दैवज्ञकामधेनुः अर्वाक् नु प्राचीनज्यौतिषग्रन्थः खण्डानि ३ | ३ | ० |
| श्रीमदणुभाष्यम्। श्रीवल्लभाचार्यविरचितम्। गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितभाष्यप्रकाशाख्य-व्याख्या समेतम् खण्डानि १५ | १५ | ० |
| तत्त्वशेखरः। श्रीभगवल्लोकाचार्यप्रणीतः। तथा—तत्त्वत्रयचुलुक-संग्रहः। कुमारवरदाचार्यश्रीमद्वरदगुरुविरचितः। | १ | ० |
| श्रीभाष्यवार्त्तिकम्। श्रीमद्रामानुजाचार्यविशिष्टाद्वैतसिद्धान्तप्र-तिपादनपरम्। यतीन्द्रमतदीपिका च। श्रीगोविन्दाचार्यसूनु-श्रीनिवासाचार्यकृता। रामानुजाचार्यमतसंग्रहश्च। खण्डे २ | २ | ० |
| गूढार्थदीपिका। श्रीमद्भागवतदशमस्कन्धस्थरासपञ्चाध्यायी-व्याख्या खण्डे २। | २ | ० |
| आश्वलायनसूत्रप्रयोगदीपिका। श्रीविद्वद्वरमंचनाचार्यभट्ट-विरचिता खण्डे २। | २ | ० |
| काव्यालंकारसूत्राणि। पण्डितवरवामनविरचितवृत्तिसमेतानि कामधेनुसमाख्यव्याख्यासहितानि खण्डे २। | २ | ० |
| श्रुत्यन्तसुरद्रुमः। श्रीपुरुषोत्तमप्रसादविरचितः खण्डानि ३। | ३ | ० |
| चतुर्विंशतिमतसंग्रहः। श्रीभट्टोजिदीक्षितसंकलितः खण्डे २। | २ | ० |

**व्रजभूषण दास और कम्पनी**

**चांदनीचौक के उत्तर नई सड़क बनारस सिटी।**

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

G. THIBAUT, PH. D.

*No. 146.*

श्रीमद्भागवतदशमस्कन्धस्थरासपञ्चाध्यायीव्याख्या ।

# गूढार्थदीपिका ।

पण्डितवर–श्रीधनपतिसूरिकृता ।

रसव्याख्या च ।

श्रीमदाचार्यश्रीवल्लभाधीश्वर–श्रीविठ्ठलनाथदीक्षितशुद्धाद्वैत-
संप्रदायविदुषा रत्नगोपालभट्टेन परिशोधिते ।

## GÛDHÂRTHADÎPIKÂ,

A Commentary on Râsa Panchâdhyâyî
of the Tenth Chapter of Srîmad Bhâgawata,
BY PANDIT DHANAPATI SÛRI;
*And RASAVYAKHYA.*
*Edited By Ratna Gopal Bhatta.*
*Fasciculus. III.*

BENARES:
*Published by the Proprietors Messrs. Braj B. Das & Co.*
AND SOLD BY H. D. GUPTA,
*Secretary, Chowkhamba Sanskrit Book Depot.*

Printed at the Vidyâ Vilâs Press
By Harikrishna Dasa.
BENARES.

1908.

# सूचीपत्रम् ।

| | रु० | आ० | पा० |
|---|---|---|---|
| गणपाठः | ० | ४ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ४ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ० |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( शिला -) ) | ० | २ | ० |
| धातुरूपावली ( शिला )॥ ) | ० | १ | ६ |
| परिभाषापाठः | ० | ० | ६ |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| फक्किकाप्रकाशः | ० | ८ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ४ | ० |
| मनोरमा शब्दरत्नसहिता | ७ | ० | ० |
| मुहूर्तमार्तण्डः सटीकः | ० | ८ | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ३ | ० |
| लघुकौमुदीभाषाटीका (पं० मथुराप्रसादमिश्र कृत) ( टिप्पणीसहित ) | ४ | ० | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| विष्णु सहस्रनाम | ० | १ | ० |
| व्याकरणकौमुदी (उपक्रमणिका का दूसरा भाग ) | १ | ० | ० |
| शब्दरूपावली | ० | ० | ९ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| सिद्धान्तकौमुदी ( पं० वामनाचार्येण संशोधिता ) | १ | ८ | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | २ | ० | ० |
| उपसर्गवृत्ति | ० | १ | ० |
| क्षेत्रकौमुदी | ० | ६ | ० |
| क्षेत्रसंहिता | १ | ० | ० |

निजजने यः स्मयस्तेन, निजजनस्मयध्वसनं स्मितं यस्य । अतो यथोक्तप्रवृत्तिं दृष्ट्वा वयमपि सम्प्रति मरणायोद्युक्तास्तस्मात् तवास्मज्जीवनमपेक्षितं भवेत्तर्हि शीघ्रमागत्य भवत्किङ्करीरस्मान् भज सेवनायाश्रय । शठं प्रति शठं कुर्यादित्युक्तत्वाद्यथा सखापि भवानस्मद्दुखाय तिरोहितस्तथा सख्योऽपि वयं तव दुःखाय धूर्तशिरोमणेस्तवाग्रे तिरोधानसामर्थ्याभावान्मरिष्याम इति सूचयन्त्यः सम्बोधयन्ति ॥ हे सख इति ॥ किञ्च झटिति जलरुहाननं चारु दर्शय अन्यथा पश्चात्तापं करिष्यसीति भावः । यद्वा, जिघांसन्तं जिघांसीयादित्युक्तत्वात् सर्वा दण्डयितुं किमर्थं प्रवृत्तोऽस्यत एता भवत्किङ्करीः भज यथेष्टं सेवय, नोऽस्माकं तु चारु जलरुहाननमात्रं दर्शय । अपकर्तुरपि सख्युर्मुखदर्शनेच्छा न निवर्तते । इदं प्रार्थयामः । किं कुर्म इति, सख इति सम्बोधनाशयः ॥

निवृत्तिपक्षे, स्वानुग्रहादुपनिषत्सु लब्धाग्रहस्य व्रजो वेदस्तत्सम्बन्धिन आस्तिकशिरोमणिभूतस्य जनस्यार्त्तिं जन्ममरणलक्षणसंसृतिदुःखं हरतीति तथा । यतो योषितां श्रुतिलक्षणस्त्रीणामस्माकमस्मदीयानां च रक्षणे परमसमर्थ ॥ रक्षणप्रकारमाहुः ॥ निजजनानां स्वाभि[illegible] स्मयस्याऽहङ्कारादिदोषस्य ध्वंसनाय स्मितं मन्दहासो यस्य । हासो जनोन्मादकरी च मायेति हासशब्दाभिधेयायाः सर्वानर्थबीजभूताया मायायाः मन्दत्वं स्वल्पप्रवर्तनं तस्मात्, सखे सर्वदास्मत्संपृक्त, भवत्किङ्करीर्भवत्प्रातिपाद्य रूपसेवापरायणा, अस्मत्प्रतिपाद्यतामाश्रय । तथा च विवेक्यन्तःकरणेऽस्मत्प्रतिपाद्यतां प्राप्य, तस्य जलरुहस्य चतुर्दशभुवनात्मकपुष्करस्य कमलस्य चाननं सत्तास्फूर्तिप्रदं स्वरूपं दर्शय । को ह्येवाऽन्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यादित्यादिश्रुत्या सर्वसत्तास्फूर्तिदः परमात्मा प्रतिपादित इति प्रकाशयेत्यर्थः ॥ ६ ॥

अन्याः प्रार्थयन्ति ॥

प्रणतदेहिनां पापकर्षणं
तृणचरानुगं श्रीनिकेतनम् ॥
फणिफणार्पितं ते पदाऽम्बुजं
कृणु कुचेषु नः कृन्धि हृच्छयम् ॥ ७ ॥

प्रणतेति ॥ पदाऽम्बुजं नः कुचेषु कृणु कुरु बहुवचनं समुदायाभिप्रायेण । ते त्वदीयानां न इति वा । ननु विरहानलज्वालातप्तेषु स्तनेष्वतिसुकुमारचरणस्थापनप्रार्थनं नोचितमिति चेत्तत्राहुः ॥ फणिनः कालियस्य शेषस्य फणासु अर्पितम् । तथाच परमकोमलमपि विलक्षणशक्तिमत्त्वान्न केनापि पीडयितुं शक्यमिति भावः । ननु तथापि स्तने चरणस्पर्शो नोचित इतिचेत्तत्राहुः ॥ श्रीनिकेतनम् । लक्ष्म्यावासस्थानम् । तथाच श्रीर्यत्र सर्वदा तिष्ठति तस्य स्तनेषु स्पर्शेऽन्यासां कः सन्देह इति भावः । ननु कामाक्रान्तस्वान्ततया निकृष्टानां युष्माकमनुरोधो नोचित इतिचेत् तत्राहुः ॥ तृणचरानुगम् ॥ ... भगवता पाल्यमाना अपि गावस्तृणं परित्यज्यापि नाश्नन्ति, किन्तु तृणमेव तासामभिमतं ( भ० ... तेन त्वया नोपक्ष्यन्तेऽपि तु तदनुरोध एव क्रियते, तद्वद्भगवदीया अपि वयं यद्यपि कामासक्तास्तथापि नोपेक्ष्या इति भावः । ननु तथापि युष्माकमजितेन्द्रियतादिसम्पादकं पापं वर्ततेऽतस्तत्सत्त्वे कथं मत्पादस्पर्शाधिकारस्तस्मात्तन्निवर्तककर्मानुष्ठानानन्तरं तथा करिष्यामीतिचेत् तत्राहुः ॥ प्रणतदेहिनां पापकर्षणं प्रकर्षेण धर्मत्यागपूर्वकं ये नताः देहाभिमाननिवर्तकतत्त्वज्ञानरहिताश्च तेषां पापनिवर्तकयोः स्वधर्मतत्त्वज्ञानयोरभावात्

स्वत्पदाऽम्बुजमेव स्मृतं दृष्टं स्पृष्टं वा तन्निवर्तकं नान्यदतस्तथ, भूतानामस्माकं तेनैव पापानिवृत्तिसंभवा ज्ञानुष्ठानान्तरमपेक्षितमिति भावः तत्र तदर्पयित्वा हृच्छयं कामं कृन्धि विनाशय। तथाच न पापनिवृत्तिरस्माकमभिलषिता, किन्तु कामस्य निवृत्तिरिति भावः । यद्वा भवत्यः कामोपाधिकप्रीतिमत्यो न दर्शनमात्रस्याधिकारिण्य इतिचेत् तत्राहुरेव श्चेत्तर्हि तत्प्रतिबन्धकं काममेव कृन्धि। कथमित्यपेक्षायामाहुः॥ नः कुचेषु स्वपदाऽम्बुजं कुरु। ननु न जातु, कामः कामानामुपभोगेन शाम्यति * हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धत इत्युक्तत्वात् तत्स्थापनेन न तन्निवृत्तिर्भविष्यति, किन्तु प्रत्युताभिवृद्धिरिति शङ्कापि पदस्थापनप्रार्थनया निराकृता। हस्तस्थापनस्य तदभिवृद्धिहेतुत्वात् । ननु तत्स्थापनस्याऽभिवृद्धिहेतुत्वाभावेऽपि कथं तन्निवृत्तिहेतुत्वमित्याशङ्क्याहुः ॥ फणीति ॥ तथाच कालियफणार्पणेन यमुनाह्रदस्य निर्विषत्वं त्वया संपादितम् । तद् दृष्ट्वा देहलक्षणफणिनः कुचलक्षणफणार्पणेन यमुनाह्रदस्थानीयहृदयस्य कामरूपविषस्य निःसरणेन निर्विषत्वसंपादनसमर्थत्वमित्यनुमीमहे इति भावः। न केवलं दोषनिवर्तकमात्रं किन्तु गुणाधायकमपीति द्योतनायोक्तं— श्रीनिकेतनम् ॥ तथाच तत्त्वात्सर्वज्ञानैश्वर्यादिलक्षणाश्रियः स्पर्शमात्रेणाधायकमिति भावः। ननु परमोत्कृष्टस्य मत्पदाऽम्बुजस्य स्पर्शोऽपि दुर्लभ इत्याशङ्कानिरासायोक्तं— तृणचराऽनुगम्॥ तथाचास्मदधिकाराभावेऽपि तव करुणया तस्य सौलभ्यमिति भावः। ननु तथापि पापनिवृत्तिं विना कथं तत्सम्भव इत्याशङ्कानिवृत्त्यर्थमुक्तं— प्रणतेति॥ अनभिज्ञापक्षे, अथ हृत्तापशान्तिकरोपलेपौषधमिव बहिर्हृदि अङ्गसङ्गमभीप्सन्त्यो दैन्येन चरणसङ्गमेव प्रार्थयन्ते ॥ प्रणतेति ॥ ते पदाऽम्बुजमस्माकं तप्तेषु कुचेषु निधेहि । ननु पापभयान्नैवं कर्तुं शक्नोमीति चेत् तत्राहुः ॥ प्रणतानां

कृष्णप्रणामी न पुनर्भवायेति। एवम्भूतेन काण्डद्वयप्रतिपादितेन सम्यगुपासितेन निजजनस्य हृच्छयं कामं कृन्धि विनाशयेत्यर्थः॥७॥

अपरा एतावता दुःखनिवृत्तिमपश्यन्त्यः प्रार्थनानां किं दारिद्र्यमिति विचिन्त्य परमोत्कृष्टं वस्तु प्रार्थयन्ते ।

मधुरया गिरा वल्गुवाक्यया
बुधमनोज्ञया पुष्करेक्षण ॥
विधिकरीरिमा वीर मुह्यती-
रधरसीधुनाऽऽप्याययस्व नः ॥ ८ ॥

मधुरयेति ॥ मां हि पार्थव्यपाश्रित्य येऽपि स्युः पापयोनयः * स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् । कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति । सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच इत्यादिरूपया मधुरया अर्थतोऽत्यन्तमिष्टया वल्गूनि मनोज्ञानि वाक्यानि यस्यां तया शब्दतोऽप्यत्यर्थं मधुरया । अत एव, बुधमनोज्ञया बुधानां विदुषां हृद्यया विधिकरीः किङ्करीरस्मान् । तथाच नास्माकमविचारतो प्रवृत्तिरिति भावः । संप्रति तिरोधानलक्षणया लीलया मुह्यतीर्मूर्छां मरणपूर्वावस्थां लभमाना इमा झटित्यागत्य द्रष्टव्याः । हे पुष्करेक्षण पुष्करे हृदयकमल ईक्षणं यस्य सः । तथाचान्तर्यामिणा त्वया सर्वं ज्ञायत एव, नास्ति विज्ञापनकृत्यमिति भावः । विशालनेत्रेण त्वयेदमागत्य प्रत्यक्षेणोपलब्धव्यमिति वा । दृष्ट्वा च स्वाधराऽमृतेन नोऽस्मानाप्याययस्व सञ्जीवय । यतो हे वीर, निजजनार्तिनिराकरणमेव शौर्यकृत्यमिति भावः । याः स्वभावत एवाज्ञाकरीः संप्रति विरहदुःखेन मुह्यतीरस्मानागत्याप्याययस्व । कथ-

मिति चेद्वादौ गिरा । ननु वाणीमात्रेण कथं मोहनिवृत्तिरिति चेत्तत्राहुः ॥ मधुरयेति ॥ मायामयस्य मोहस्य सच्चिदानन्दरूपस्य तव मुखान्निःसृतया माधुर्य्यव्याप्तया तापनिवृत्तिरवश्यं भविष्यतीति भावः। तत्रापि सत्यप्रियहितार्थकत्वाद्वल्गूनि वाक्यानि यस्यां सा । तत्रापि बुधमनोज्ञया ज्ञानरूपया । यच्च तन्निवृत्तौ प्रतिबन्धकं तदप्यागत्यापि कुर्वित्याशयेनाहुः ॥ पुष्करेक्षण । तथाच लोकोत्तरसौन्दर्य्याद्यलङ्कृतविग्रहं दर्शयित्वा तद्दर्शनाभिलाषं निवर्तय तथाऽधराऽमृतपानेच्छामपि तत्प्रदानेन पूरयेत्याशयेनाहुः ॥ अधरेति ॥ सर्वमपि कर्तुं प्रदातुं च समर्थोऽसीति द्योतयन्त्यः सम्बोधयन्ति ॥ हे वीरेति ॥ अनभिज्ञापक्षे, न केवलं बहिर्हृदि लेपमात्रेणास्य तापस्य शान्तिः कर्त्तुं शक्या किन्त्वत्रोपायबाहुल्यमपेक्षितमित्याहुः ॥ मधुरयेति ॥ नोऽस्मानाप्यायय स्वाऽऽह्लादय यतो मुग्धतीरूपान्त्यां दशां प्राप्ताः कथमिति चेत् तत्राहुः ॥ गिरा तत्रापि, न प्रतियात व्रजमिति वज्रवत्कठोरया, किन्तु मधुरया । नापि, स्वागतमितिवत् प्रतारणरूपयेत्याहुः ॥ वल्गुवाक्यया ॥ यद्यपि मुग्धानामस्माकं नास्ति विवेकस्तथापि त्वया बुधजनमनोज्ञैव सा प्रयोक्तव्येत्याशयेनाहुः ॥ बुधेति ॥ तथाचैवंविधया गिरा वयं वक्तव्या इत्येको मूर्च्छानिवृत्त्युपायः । द्वितीयमाहुः ॥ हे पुष्करेक्षण । तथाच कमलवद्विशालनेत्राभ्यां वयं सम्यग् द्रष्टव्या इति भावः । तृतीयमाहुः ॥ अधरेति ॥ तथाभूतम् । अमृतरूपमौषधं मृतानामप्युज्जीवनकरं पाययितव्यमिति भावः । तत्रापि विलम्बो नोचित इत्याहुः ॥ इमाः क्षणमात्रमपि विलम्बासहाः । ननु मम का भवत्यो यदर्थमेवंविधपरिश्रमो मया कर्त्तव्य इत्याशङ्क्याहुः ॥ विधिकरीरिति ॥ तथाप्यनल्पमिदमौषधं दातुं न शक्नोमीतिचेत् तत्राहुः ॥ वीर ॥ परमोदारत्वाद् दानशूर सर्वस्वमपि दातुं

समर्थ। यद्वा यथोक्तोपायेन गतमूर्च्छा भवत्यो यथोक्तोपायकर्त्रे स-र्वदायं मह्यं किं प्रदास्यथेति चेत्तत्राहुः ॥ विधिकरीरिति ॥ जन्म-जन्मान्तरेषु तव किङ्कर्यो भविष्यामो, न वाऽन्यत् किञ्चित् तुभ्यं दातुं वयं योग्यास्तस्मादेतत्प्रतिनिधिभूतस्येतरवस्तुनोऽभावा-च्छरीरमेवार्पयिष्याम इति भावः । तावतापि नास्ति ऋणपरिहारो-यद्यपि तथापि दानशूरेण त्वया न किमपि विचार्य्यं, प्रत्युपकारान-पेक्षदानस्यैव सात्त्विकत्वाभिधानात् ॥ मानिनीपक्षे, ननु नैतावता मम हृच्छयस्य शान्तिर्भविष्यति, तदुपशामकमस्त्येकं युष्मत्सन्निधौ वस्तु तथापि भयान्न तत्प्रार्थयामीति सदैन्यप्रार्थनामालक्ष्याहुः ॥ मधुरयेति ॥ कठोरा भव मृद्वी वा प्राणस्त्वमसि राधिके * अस्ति नान्या चकोरस्य चन्द्रलेखां विना गतिरित्यादिरूपया मधुरया व-ल्गुवाक्यया प्रतारणरूपया अत एवाऽबुधमनोज्ञया गिरा पूर्वं तव-वचनकर्य्यो वयं जाता, अत एव संप्रतिं प्रतारणफलभोगसमये मु-ह्यन्त्यः मरणोपान्त्यदशां प्राप्ता यद्यप्येवं तथापि सज्जनैरपकर्ताप्युप-कर्त्तव्य इति न्याममनुसृत्यास्माभिरनुज्ञायतेऽस्माकमधराऽमृतेन स्वात्मानमाप्यायस्वागत्याह्लादय भयात्तिरोहितो मा तिष्ठेति भा-वः । भ्रूलक्षणधनुर्द्वयेक्षणलक्षणाऽक्षयबाणधीरो वीरशिरोमणिस्त्वं किमर्थं बिभेषीति संबोधनद्वयाशयः ॥

निवृत्तिपक्षे, तस्मात्साधकानुग्रहार्थं लीलाविग्रहमादाय, न हि ज्ञानेन सदृशं पवित्रमिह विद्यते * उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् । क्षेत्रज्ञं चापि मा विद्धि सर्वक्षेत्रेषु भारत, अना दिमत्परं ब्रह्म न सत्तन्नासदुच्यते, यदा भूतपृथग्भावमेकस्थम-नुपश्यति, तत एव च विस्तारं ब्रह्म संपद्यते तदेत्यादिरूपया मधु-रया यथाभूतार्थप्रतिपादकत्वाद्वल्गुवाक्यया । अत एव बुधजनमनो-ज्ञया तवौष्ठपुटनिःसृताऽमृतरूपया नोऽस्मान् आप्यायस्व । य-

तस्तत्तद्वाग्युक्त्यावितमिथ्याभूताऽतिकर्कशतर्काऽतिपुष्टवादान्धकारेण, मुह्यतीर्नचोपेक्ष्या, यतो त्रिधिकरीभवदाज्ञारूपाविधिप्रतिपादिकास्तव किङ्करीभूताः । अतस्तथाभूतया गिराऽवश्यमस्मान् पालय । अनेन धर्मसंस्थापनरूपः स्वपालनहेतुरुक्तः । साधुपरित्राणरूपं द्यो रन्त्यः संबोधयन्ति ॥ पुष्करेक्षण ॥ सौन्दर्य्यादिगुणालंकृतविग्रहेण स्वस्मिन्नासक्तिसंपादनेनास्मान् परिपालयेति भावः । अस्मत्पालनाय दुष्कृतिनोऽपि नाशयेत्याशयेनाहुः ॥ वीरेति ॥ ८ ॥

तव कथाऽमृतं तप्तजीवनं
कविभिरीडितं कल्मषापहम् ॥
श्रवणमङ्गलं श्रीमदाततं
भुवि गृणन्ति ये भूरिदा जनाः ॥ ९ ॥

ननु युष्माकं प्रेमातिरेकपरीक्षार्थमन्तर्हितोऽहं, ततश्च संप्रति ज्ञातवानहं नाद्यापि भवत्यो मत्प्रेमातिरेकभूमिमारूढा, मद्विरहेऽपि जीवनधारणादित्याशङ्क्य,नास्माकमपराधस्तव कथा त्वत्सदृशगुणाऽस्माञ्जीवयति, वयं किं कुर्म इत्याशयेनाहुस्तवेति ॥ तव कथाऽमृतम्, अत एव तप्तानामस्माकं जीवनम् । तत्र प्रमाणमाहुः ॥ कविभिः क्रान्तदर्शिभिः सर्वज्ञैर्नारदादिभिरीडितं स्तुतम् । एतेन प्रसिद्धाऽमृतादुत्कृष्टत्वं सूचितम् । तद्धि विषयार्थिभिः स्तूयते, न तु कविभिः । किञ्च कल्मषापहम् । न हि प्रसिद्धं तत् कल्मषं निवर्तयति, किन्तु निवृत्तकल्मषप्राप्यमिदं तु तन्नाशार्थं साधनान्तरं नापेक्षत इति भावः । किञ्च, श्रवणमङ्गलम् ॥ न हि तच्छ्रवणमात्रेण मङ्गलप्रदमिदं श्रवणमात्रेण मङ्गलरूपम् । किञ्च, श्रीमत् ॥ प्रसिद्धं तु तद् न श्रीप्रदम्, इदं मोक्षश्रीपर्य्यन्तं समस्तश्रीप्रदम् । यद्वा श्रीमत्सु शान्तं, तत्तु मादकम् । तत्राप्याततं चतुर्दशभुवनेषु व्या-

मं प्रसिद्धन्तु तन्नैवम् । अतो ये भुवि गृणन्ति तेऽस्माकं बहुप्रदाः परमोपकारकास्तस्मादेवं विधषड्गुणयुक्तेन भवत्तुल्येन जीवनहेतुत्वाददनिरोहितत्वाच्च किञ्चित्दधिकेन च तव कथाऽमृतेन त्वत्प्राप्त्यर्थं जीवामोऽतो न वयं परीक्षायोग्याः, किन्त्वनुकम्प्या इति भावः ॥ अनभिज्ञापक्षे, अहो महति संकटे निमग्नानां मरणमप्यस्माकं न भवति, किं कुर्म इत्याशयेनाहुः ॥ तव कथालक्षणममृतं प्राप्तानां मरणयोग्यानामप्यस्माकं जीवनसाधनं जातम् । ननु कुतस्तल्लभ्यत इतिचेत् तत्राहुः ॥ कविभिः पूतनाघातादिकानां भवच्चरितानां गीतविशेषरचनायां कुशलैरीडितं स्तुतम् । उत्तमश्लोकनलादिचरितवत् कल्मषनिवर्तकम् । श्रवणमात्रेण मङ्गलकरं च यतः श्रीमत् शोभायुक्तम् । न चैवंविधं किञ्चित् स्थानमस्ति यत्र तन्नास्तीत्याहुः ॥ आततं व्याप्तं, यतो ये भूरिदा महान्तो दातारस्त उत्तमश्लोकाश्च ते भुवि सर्वस्यामपि भूमौ तत्र तत्र स्थिता गृणन्ति । तस्मात् किमर्थं स्वविरहसंतापं भोजयितुं स्वकथाऽमृतेन जीवयसि । यदि सर्वथा तवानागमननिश्चयः स्यात्तर्हि किञ्चिदस्मत्स्मरणोपायं रचयित्वा निश्चिन्तन्तया पलायस्वेति भावः । यद्वा, ननु मत्कथया क्षणमात्रजीवनं धार्य्यतामितिचेत् तत्राहुस्तव कथैव स्मृतिरुद्दीपनविधया मरणसाधनं यतस्तप्ते तैलादौ जीवनं जलमिव । अतः कविभिरननुभूतार्थकल्पनाकुशलैरेव कल्मषापहत्वेनेडितं स्तुतम् । दुःखभोगेन कल्मषनिवर्तकमिति वा । तथा श्रवणमङ्गलमापातरम्यमतो व्यर्थमत्र श्रीमदेन सौन्दर्य्याखर्वगर्वेण सर्वत्र प्रसृतम् । तस्मादस्मदग्रे ये गृणन्ति ते भूरिदा महाघातुकाः । दोऽवखण्डन इति स्मरणात् । तस्मादलं तव कथयेति भावः ॥ मानिनीपक्षे, नन्वनेकगुणवत्त्वेन यत्कथाऽमृतं कविभिरीडितं तस्मिन्नपि मयि भवत्यो नानुरज्यन्त इत्याशङ्क्याहुः ॥ तव कथेति ॥

कविभिरतिशयोक्तिपरैस्तप्तजीवनत्वादिरूपेणेडितमपितत्र कथाऽमृतं भूरिदा उदारा अस्मत्तुल्या जनाः श्रीमदेन ततं व्याप्तं गृणन्ति । अतो नास्माभिस्त्वय्यनुरज्यत इति भावः ॥

निवृत्तिपक्षे, किञ्च, तत्र चरित्रकथाऽमृतपानेनानेकेषामुद्धारो भविष्यतीत्याहुः ॥ तव कथाऽमृतं, यतः, तप्तानां त्रिविधतापतप्तानां जीवनं तापनिवर्तकम् । यद्वा, पीता गात्र इतिवत्तप्तानां ज्ञानिनां जीवनरूपम् । तप आलोचन इति स्मरणात् । यतः कविभिर्ब्रह्मविद्भिः सनकादिभिरीडितम् । किञ्च, न तत्र कथाऽमृतमविनां कृच्छ्रचान्द्रायणादिकर्मापेक्षेत्याहुः ॥ कल्मषापहम् ॥ कथान्तरायभूतनिरयप्रदपापकर्मनिवर्तकम् । तत्रापि, श्रवणमङ्गलम् ॥ कृच्छ्रादि घोररूपत्वाच्छ्रवणेऽप्यमङ्गलम्, तवोदारचरिताऽमृतं तु श्रवणमात्रेणाप्यानन्दप्रदम् । नचापातरम्यमपि तु श्रीमद् वासनवमप्रस्तोद्धारशोभालंकृतम् । अत एवाततं सर्वत्र व्याप्तं, न त्वेकदेशि तस्माद्ये भुवि अधिकारभूमौ गृणन्ति ते भूरिदा महान्तो दातारः सर्वयज्ञानुष्ठानसर्वस्वदाक्षिणादिफलवन्तः । यद्वा ये जन्मान्तरेषु भूरिदास्त एवास्मिञ्जन्मनि गृणन्ति । यद्वा मुमुक्षूणामनुग्रहार्थं ये गृणन्ति ते भूरिदा जना, अभयदानसमं दानं नास्तीत्युक्तत्वाद् अभयदातृत्वेनानल्पदाः । यद्वा, ये गृणन्ति ते, भूरिदाश्च ते अजना विष्णुस्वरूपाश्च । हे भूरिदेति वा । तस्माल्लीलाविग्रहमादायास्मदुद्धारो लोकोद्धारश्चावश्यं सम्पाद्य इति भावः ॥ ९ ॥

ननु यावद्रमणं जातं तावतैव संतोषो विधेय, इतः परं च मत्कथाऽमृतपानेन जीवतीभिर्मद्ध्यानमेव संपाद्यमिति चेत् तत्राहुः

प्रहसितं प्रिय प्रेमवीक्षणं
विहरणं च ते ध्यानमङ्गलम् ॥

रहसि संविदो या हृदिस्पृशः
कुहक नो मनः क्षोभयन्ति हि ॥ १० ॥

प्रहसितेति ॥ हे प्रिय, हे कुहक, यद्यपि परमात्मा त्वं कपटलीलयाऽस्मत्प्रियविग्रहं प्रकटितवाँस्तथापि त्वद्विषयकरमणेच्छाऽस्माकं न निवर्तते । तादृशदोषवशादेव मनः स्थिरं न भवति । तत्र भगवतस्तत्र प्रहसितं प्रेमपूर्वकवीक्षणं विहरणं क्रीडनं च एतत्त्रितयं ध्यानेऽपि मङ्गलं, तथा रहसि याः संविदः क्रीडासंकेता हृदिस्पृशः अन्तःकरणे प्रविष्टास्तेऽस्माकं मनः क्षोभयन्ति क्षणमात्रं तदनुसंधानपरायणमपि मनः हा संप्रति भगवत्प्रहसितादिकं नोपलभ्यत इति वृत्त्युदये क्षुब्धं भवति । प्रहसितादयो यद्यपि गुणास्तथाप्यस्यां विरहदशायां दोषा जाता, अतो वयं किं कुर्म इति । बहुवचनेन बह्वीनामनुभवं प्रमाणयन्ति । हिशब्देन प्रसिद्धिं द्योतयन्ति ॥ अनभिज्ञापक्षे, तव कथायां क्रियमाणायां तत्र नान्तरीयकतया स्मृतानि प्रहसितादीनि मारकाणि बहूनि स्मृतिपथमारुहन्तीत्याहुः ॥ प्रहसितं प्रकर्षेणोच्चैर्हसितम् । अस्मान् दृष्ट्वैवात्यन्तप्रसन्नताविष्करणरूपं तव प्रहसितं संप्रति स्मृतं सदस्मन्मनःक्षोभकरं भवति । यतो हे प्रिय प्रियेण समक्षे कृतं यदानन्दावहं प्रहसितं तस्य विरहदशायां मरणावहमेव भवतीति भावः । तथा प्रहासानन्तरं यत् प्रेमपूर्वकं वीक्षणं विशिष्टं शोभनमीक्षणं कटाक्षद्वारा च केवलं वा तत् । तथा विहरणं सखिभिः सखीभिर्विहारः विशेषेण वेणुनादादीनां हरणमाकारणमिति वा । एतत्त्रितयम् अध्यानमङ्गलं ध्याने स्मरणे मङ्गलस्वरूपं न भवति, किन्तु दर्शन एव । तथा रहस्येकान्ते याः संविदस्ता अपि यतो हृदिस्पृशः फलपर्यवसायिन्यः सत्यो हृदयविलोकसः । तदेतत्परमसुखकरमपि सर्वं तवानया

कपटप्रवृत्त्या परमदुःखात्रहं सम्पन्नमित्याशयेन संबोधयन्ति ॥ हे कुहकेति ॥ हि निश्चितं क्षोभयन्ति । अत्र संशयं विहाय स्वकुहकतानिरासायास्मन्मनःक्षोभं निवर्तयेति भावः ॥ मानिनीपक्षे, अहोऽस्माभिरदीर्घदर्शित्वादबुद्ध्वैव यदनुष्ठितं तस्य फलमिदानीमुपस्थितमित्याशयेनाहुः ॥ प्रहसितेति ॥ त्वया सह यदस्माकं प्रहसितं यच्च प्रियस्य तव प्रेमपूर्वकं वीक्षणम् । हे प्रियेति वा । प्रियं मत्वेति भावः । विहरणम् एतत्त्रयं ते ध्याने अहो एतासां कदा प्रहसितादिकं द्रक्ष्यामीति चिन्तने मङ्गलम् । यावत्तादृशं तव चिन्तनं स्थितं तावदेव त्वत्कर्तृकप्रार्थनादिरूपमस्माकममङ्गलं स्थितम् । संप्रति तव चिन्तनासिद्धावसरेऽस्माकं परममङ्गलं जातमिति भावः । तथा रहसि यास्तव हृदिस्पृशः संविदस्ताश्च नो मनः क्षोभयन्ति । अहो नायं प्रहसितादिपात्रभूतः स्थितोऽतो वृथैवानभिज्ञस्याकृतज्ञशिरोमणिभूतस्याग्रे प्रहसितादिकमनुष्ठितं कुटिलभ्रूविजृम्भैश्चरणोपान्तयोरवस्थितस्तस्मान्मौर्ख्येण विपरीतमनुष्ठितमतः किं कुर्म इत्येवं स्मृतानि प्रहसितादीनि नो मनः पुनः पुनर्व्याकुलयन्ति । हि निश्चितम् । यथा कश्चिद्वञ्चकः सेवको भूत्वा दैन्यसेवनादिना मनो रञ्जयित्वा स्वामिन् विश्वासमुत्पाद्य मादकवस्तु प्रदाय सर्वस्वमादाय पलायते तथा त्वमपि कृतवानसि । अहो कष्टं, किं कुर्म इति कार्यावेशेन संबोधयन्ति ॥ हे कुहकेति ॥

निवृत्तिपक्षे, एवं रूपोऽपि त्वं जीवरूपेण स्वस्यैव वञ्चको जातस्तस्य वञ्चनहेतुभूतानि चेष्टितानि नो दुःखकराणीत्याशयेनाहुः ॥ प्रेति ॥ दुःखे सुखताभ्रमस्तथा, हे प्रिय अनित्यासत्येषु नित्यत्वसत्यत्वभ्रमः । तद्विषयाणां प्रेमपूर्वकमीक्षणं तथाऽशुचौ शुचित्वभ्रमाद्विहरणं तदेतत्त्रयं ध्यानेऽपि न मङ्गलम् । तथा रहसि विषयसंभोगसङ्केतास्तत्रापि हृदयप्रविष्टाः । सम्यगुत्पादिताभिनिवे-

क्षा एतानि कुहकत्वं प्राप्तस्य तव चेष्टितानि नो मनः क्षोभयन्ति अहो किमिति नित्यमुक्तपरमात्मना स्वबन्धचेष्टितान्याश्रितानीति क्षोभं जनयन्ति हि निश्चितम् ॥ १० ॥

चलसि यद् व्रजाच्चारयन् पशू-
न्नलिनसुन्दरं नाथ ते पदम् ॥
शिलतृणाङ्कुरैः सीदतीति नः
कलिलतां मनः कान्त गच्छति ॥ ११ ॥

अहो रात्रौ परमकोमलपदपद्मकृतपलायनस्यास्मत्स्वामिनः का वा पीडा जाता स्यादिसनुसन्धाय तु मूर्छावस्थामेवानुधावत्यस्मन्मनो यतो दिनेऽपि पदा त्वं व्रजाच्चलसि तदाऽपि मूर्छावस्थामेव गच्छतीत्याशयेनाहुः ॥ चलसीति ॥ यद्यदा व्रजात् पशून् चारयन् चलसि तदा हे नाथ नलिनात् स्थलकमलादपि सुन्दरं कोमलं ते पदं शिलैः सशूकवन्यधान्यकणिशैः तृणकुशकाशादितीक्ष्णाग्रतृणैरङ्कुरैश्च सद्यो भूमिं निर्भिद्य निःसृतैः सीदति क्लिश्येदिति नो मनः कलिलतामस्वास्थ्यं गच्छति प्राप्नोति । तत्र व्रजादिति प्रातरारभ्य खेदः । चलसीति चलनात् खेदः । त्वं चलसीत्युक्त्या तव पदं त्वस्मान् विहाय न गच्छति, त्वमेव बलात् तच्चालयसीति सूचितम् । तत्रापि पशून् चारयन् पशवश्च पर्वतारण्यकृच्छ्ररूपायां भूमौ चरन्ति, तदनुगमनं च नग्नपद्भ्यां भूम्याद्यनुग्रहार्थं पाल्यानां चर्मणोऽपरिधेयताबुद्ध्या पादुकाग्रहणात् । नलिनरूपत्वाच्च कोमले स्थाने अस्माकं वा अङ्के स्थातुं योग्यम् । नाथेति संबोधनाद् बहव एवात्रार्थे नियोज्याः सन्ति तथापि स्वयं चलसीत्यत्यन्ताश्चर्यमिति ध्वनितम् । कान्तेति संबोधनात्त्वेतदस्मद्दुःखावहमिति सूचितम् ॥ अनभिज्ञापक्षे, किञ्च,त्वय्यस्मिन्नत्यन्तार्द्रस्वान्तास्वस्मासु कपटाचरणं न न्याय्यमित्या-

हुः ॥ चलनीति ॥ यद्वा, न केवलमधुनैवास्मद्दुःखाय स्वात्मानं दुःखयस्यपि तु सर्वदैव तवेयं रीतिरित्याहुः ॥ चलसीति ॥ कलिलतां व्याकुलताम् । यद्वा कलिं कलहं लाति गृह्णातीति कलिलं तस्य भावः कलिलता कलहकर्तृता, तां गच्छति प्राप्नोति । वाक्कलहं करोतीति यावत् । तथाहि अहो वने भ्रमतः कृष्णस्य परमं कोमलं पदं सीदति, अरे मनः नैवं, तथा चेत् मत्यहं तत्र न गच्छेत् । तस्मात् किमर्थं वृथा खिद्यसि । अयि निर्बुद्धिगोपालिका मदीयं पादयुगलं स्थलपद्मादपि कोमलतरं किं न पश्यत । अरे मुग्धमनः वालुकामये सुकोमले पथि पदं स्थापयत्यतो न सीदति । तत्रापि विचारविधुराः पशवः किं तथाभूते स्थले चरन्त्यतस्तान् चारयँस्तदनुगच्छति तदा तदीयं पदं शिलादिभिः कथं न सीदति । अरे प्रेमान्ध विशालनेत्रो ऽसौ त्वदुपरि पदं किमर्थं स्थापयति । अयि प्रेमलेशेनापि विधुरा तदनुभ्रमणकाले तदुपर्य्यवश्यं पदं पतत्येव, तेन च पीडा भवत्येव । अहो भो भ्रान्तश्चेतः सत्यमुक्तं त्वया, नास्त्यसावस्मदधीनो येन वयं तं चारयामोऽन एवंविधदुःखं सहन्त्यो जीवेम । अस्मदर्थमेव विधात्रा सृष्टत्वात् । भो दुःखिन्यो जीवन्तु भवत्योऽहं तु युष्मत्कान्तपददुःखं द्रष्टुं नालमतो युष्मद्देहेभ्यः प्राणैः सार्द्धमधुनैव यामीति ॥ मानिनीपक्षे, अहो वृथैव वयं त्वामुपालब्धुं प्रवृत्ताः । स्वाङ्गेषु दयालेशरहितस्यान्यत्र तत्प्रसक्त्यभावादित्याशयेनाहुः ॥ चलनीति ॥ हे नाथ शोभनवस्तुपालनोपतापनस्वभाव । यदा पशून् चारयन् चलसि तदा शिलादिभिः परमकोमलं पदं सीदति, नो मनः कलिलतां दयया आर्द्रीभावं गच्छति परमकठोरान्तःकरणस्य तव तु तत्र करुणालेशोऽपि नोत्पद्यते । अतः कान्त कस्य स्वकीयस्य परकीयस्य च सुखस्यान्त नाशक । तथाचैवंविधकठिनचित्तस्तु विधातृसृष्टौ कोऽपि नासीन्नास्ति न

भविष्यति चेति भावः॥

निवृत्तिपक्षे, पुनः क्षोभकरां तच्चेष्टामावेदयन्ति॥ यत् यदा व्रजाद्देहमध्यात् पशूनिन्द्रियलक्षणान् चारयन् विषयलक्षणेषु मार्गेषु भ्रामयन् स्वयमपि चलसि, अहं श्रोता स्प्रष्टेत्याद्यभिमानवान् भवसि तत् तदा पद्यते गम्यते इति पदं सच्चिदानन्दघनस्वरूपं नलिनं चतुर्दशभुवनात्मकपदं सुन्दरं. येन पदाधिष्ठितं सत्सुन्दरतया प्रतीयते तत् तथाभूतपदं यथोक्त्या शिलतृणाङ्कुरस्थानीयैराध्यात्मकाधिदैविकाधिभौतिकसंज्ञैर्दुःखैः सीदतीति कृत्वा नो मनः कलिलतां व्याकुलतां गच्छति। यतो हे नाथ स्वतन्त्रस्य तवैवंविधं पारतन्त्र्यमासाद्य दुःखोपभोगो नोचित इति भावः। किञ्च, हे कान्त, कस्य सर्वस्यापि सुखस्यान्तः परिसमाप्तिरन्तर्भावो यस्मिन् सः। तथाच यथा श्वा शुष्कास्थिचर्वणं कुर्वन् स्वदन्तनिःसृतरुधिरमास्थिसंबन्धि मन्यते तथा स्वरूपभूतं सुखं विषयसंबन्धि मत्वा तदर्थं वृथा खेदं प्राप्नुवन्तं त्वामालोच्यास्माकं खेदो भवतीति भावः॥ ११॥

दिनपरिक्षये नीलकुन्तलै-
र्वनरुहाननं बिभ्रदावृतम्॥
धनरजस्वलं दर्शयन्मुहु-
र्मनसि नः स्मरं वीर यच्छसि॥ १२॥

भगवतस्त्वस्मदभाग्यवशात् करुणा नोत्पद्यते इत्याशयेनाहुः॥ दिनेति॥ दिनस्य परिक्षये संध्याकाले। परिक्षयपदेन दिने प्रद्वेषो ध्वनितः। दिनपरिक्षये आगत्य आयासीति भावः। प्रविष्टान्धकारकालेऽप्यागतः कमलरूपमाननं नीलवर्णैः कुन्तलैरावृतं स-

ऽप्यगदृश्यमानं, तत्रापि, धनं गोधनवित्तयोरितिकोशाद्गोरजोऽव्याप्तम् । इतस्ततः प्रेक्षणेन पुनः पुनर्दर्शयन्नपि नो मनसि स्मरं काममेव यच्छसि, न त्वङ्गसङ्गम् । तत्रापि कामबाणैर्वर्धयन् वीरत्वमेव प्रकटयसीति संबोधनाशयः ॥ अनभिज्ञापक्षे, त्वं तु संयोगसमयेऽप्यस्मद्दुःखायैव यतस इत्याशयेनाहुः ॥ दिनस्य विरहनिमित्तत्वात् परमशत्रोः परिक्षये सम्यग्नाशे सायंकाले । अनेनोद्दीपनकाल उक्तः । भ्रमरकुलमालावृतजलजवन्नीलकुन्तलावृतं मुखम् इत्यालम्बनस्य सौन्दर्यातिशयो व्यज्यते । तत्रापि धनरजस्वलमिति गोपोचितवेषेणोद्दीपनम् । तादृशं मुखं सर्वतो व्यावर्तनेन पुनः पुनर्दर्शयन् । तेन स्वापेक्षां सूचयन् नो मनसि स्मरं स्मरणमात्रेणापि क्षोभकरं बलाद्यच्छसि अर्पयसि । हे वीर अत्रैव त्वं वीरो, न तु कामयुद्धेऽत एव सर्वदा स्मरमेव यच्छसि, न त्वङ्गसङ्गमिति तव सर्वं सकपटमेव चेष्टितमस्माकं तु तत्सकलं प्रेममयमिति भावः ॥ मानिनीपक्षे, यथा दयां विहाय स्वाङ्गेषु त्वया चेष्टितं तथाऽस्मास्वपीत्याहुः ॥ दिनेति ॥ तथाभूतं मुखं मुहुर्दर्शयन्नो मनसि स्मरं यच्छसि । तथाचास्मान् कामयुद्धाय बलात्कारेणोद्योज्य सम्प्रति तद्युद्धावसरे पलाय्य गतोऽसीति दृष्टं तव वीरत्वमित्याशयेन संबोधयन्ति ॥ हे वीरेति ॥

निवृत्तिपक्षे, तथा दिनस्य तत्स्थानीयस्य विवेकस्य परिक्षये धनरुहस्य यथोक्तपद्मस्याननं सत्तास्फूर्तिमद्‌चैतन्यं नीलकुन्तलस्थानीयैः घटपटादिप्रत्ययैरावृतं बिभ्रत् । तथा धनरजस्वलं त्रिगुणार्थं विक्षेपोत्पादकेन रजोगुणेनावृतं पुनः पुनस्तत्तज्जन्मसु दर्शयन्नोऽस्माकं मनसि स्मरमग्निं यच्छसि । स्मेत्याश्चर्ये । यतस्त्वं वीरः अविवेकादिसमस्तशत्रुपराजये समर्थ इत्याशयेन संबोधयन्ति ॥ हे वीरेति ॥ १२ ॥

ननु यद्यहं करुणारहितस्तर्ह्यलं मया युष्माकमिति तत्कोपमाशङ्क्य, हे भगवन्न वयं त्वयि दोषमारोपयामः, किन्तु स्वमन्दभाग्यं वर्णयामः । इतस्तव संगमप्रतिबन्धकदोषनिरासायेत्थं प्रार्थयाम इत्याशयेनाहुः ।

प्रणतकामदं पद्मजार्चितं
धरणिमण्डनं ध्येयमापदि ॥
चरणपङ्कजं शंतमं च ते
रमण नः स्तनेष्वर्पयाधिहन् ॥ १३ ॥

प्रणतेति ॥ ते तव चरणकमलं नः स्तनेष्वर्पय । यद्यपि त्वदीयं चरणसरोजमन्तर्हृदयेऽस्माभिः स्थापयितुमिषितं, तथापि तत् तत्र स्थापयितुमशक्यमतस्तत्र त्वमेव स्थापय । चरणस्यापि षड्विधैश्वर्य्यसंपन्नत्वात्तत्स्थापनेनास्माकं सर्वप्रयोजनं सेत्स्यतीत्याशयेन तत्त्वप्रतिपादकानि विशेषणानि । तत्र प्रकर्षेण नतानामनन्यशरणानां कामप्रदमभिलषितसमस्तैश्वर्य्यप्रदं पदपद्मं तत् स्तब्धैर्ग्रहीतुमशक्यमतः प्रणतेत्युक्तम् । पद्मजेन ब्रह्मणा पद्मजया लक्ष्म्या च अर्चितमिति धर्माधारतोक्ता । तथा धरण्या मण्डनमलङ्करणरूपमनेन यशोऽधिकरणता निरूपिता । तथा आपदि ध्येयं श्रीप्रदानेनापन्निवर्त्तकमिति श्रियोऽधिकरणता कथिता । शंतमं कल्याणतममिति वैराग्यज्ञानाश्रयता दर्शिता । ततश्च हृदयस्थं कामाधिं नाशयेति ध्वनयन्त्यः सम्बोधयन्ति ॥ हे आधिहन्निति ॥ तन्निवृत्तिरपि नैतावता, किन्तु रमणे कृत इत्याशयेनाहुः ॥ हे रमणेति ॥ एवञ्चान्येषां तत्तत्फलप्रदमप्यस्माकं यथोक्तफलमात्रप्रदमस्त्विति भावः । यद्वा, चरणपङ्कजमस्माकं स्तनेषु अर्पय । एतावतैवास्माकं मनोरथपूर्तिर्भविष्यति । तस्य सर्वफलप्रदत्वादित्याशयेन

आहुः ॥ प्रणतेति ॥ एवं ब्रह्मलक्ष्म्यादिभिरपि तदेवार्चितम् । किञ्च धरणिमण्डनमतोऽस्मत्स्तनमण्डनं कथं न भविष्यतीति भावः । किञ्च ध्यानमात्रेणापद्विवर्तकं, स्पर्शेन त्वापल्लेशोऽपि न तिष्ठतीति भावः । किञ्च, शंतमं मोक्षपर्य्यन्तशान्तिसम्पादकम् । ततश्च तत्स्पर्शेनास्माकं मोक्षोऽपि नालभ्य इति भावः । नचास्ति भगवतोऽस्माकं चानेन कश्चिद्दोष इत्याशयेनाहुः ॥ हे रमणेति ॥ किञ्च समस्ताधिनाशाय कृतावतारस्य तवावश्यं स्वीयानामस्माकमाधिनाशः कर्तव्य इत्याशयेनाहुः ॥ हे आधिहन्निति ॥

अनभिज्ञापक्षे, अतः संप्रति कपटं विहायैवं कुर्विति प्रार्थनामावेदयन्ति ॥ प्रेति ॥ प्रणतानां नाग–तत्पत्न्यादीनां कामप्रदं सर्वार्थप्रदम् । अत एव वत्साहरणान्ते पद्मजेनार्चितम् । धरणिध्वजादिचिह्नैर्मण्डयतीति तथा । अनेन कृपालुत्वं सौन्दर्यातिशयवत्त्वं च दर्शितम् । तथाऽऽपदि ध्येयं महेन्द्रकृतवाततवर्षाद्यापद्विवर्तकत्वेनानुभूतम् । एवं सुखसाधनत्वमभिधाय सुखरूपत्वमाहुः ॥ शंतममिति ॥ एतावताप्यस्मदाधिनाशे तव किं छिद्यते इत्याशयेन आहुः ॥ हे आधिहन् ॥ तत्र तदर्पणयोग्यश्च त्वमित्याशयेनाहुः ॥ हे रमणेति ॥ यद्वा तेन तवापि सुखमेव भविष्यत्यतो न वयम् । आयासकरे कर्मणि त्वां प्रेरयामः, त्वं तु स्वार्थाविरुद्धमप्यस्मत्प्रयोजनं न सम्पादयस्यत्यन्तमाश्चर्य्यमिति ध्वनयन्त्यः सम्बोधयन्ति ॥ हे रमणेति ॥ मानिनीपक्षे, ननु युष्मद्दर्शनान्मम मनसि कामोद्दीपने तच्छान्त्युपायः को वा भवतीभिर्विचार्य्याङ्गीकृत इतिचेत् तत्राहुः ॥ चरणपङ्कजं स्वीयं नस्तनेष्वर्पय । तेन च स्वकीयाधिं नाशयेत्याशयेनाहुः ॥ हे आर्तिहन् ॥ यत एतावतैव रतिसुखमवाप्स्यसीत्याशयेनाहुः ॥ हे रमणेति ॥ नचैतावताऽस्माकं मानहानिस्तव पादपद्मस्य सर्वकामप्रदत्वात् सर्वैरादृतत्वाच्चेत्याशयेनाहुः ॥ प्रणतेत्यादि ॥

निवृत्तिपक्षे, तस्मात्स्वात्मत्वेनाभिमतस्य जीवात्मनो यथोक्त-संसृतिप्रवाहोपशमार्थं स्वचरणसरोजं नस्तनेषु कर्मोपासनापरभागेषु अर्पय । ते तादृशवेदभागा भगवच्चरणारविन्दार्चनध्यानपरा इत्यधिकारिचेतस्याविर्भावय । ततश्च तदर्चनध्यानपरस्य तस्य सर्वं सेत्स्यतीत्याशयेनाहुः ॥ प्रणतेति ॥ अत एव ब्रह्मादिभिरर्चितम् । भक्तपारवश्यमाह ॥ धरणीति ॥ स्वीकृतरामकृष्णाद्यवतारस्य तव आपदि गजेन्द्रादिभिर्ध्येयं शतमम् आराधितं ज्ञानोदयद्वारा मोक्षसुख प्रदं जीवरूपेण संसरणमीश्वररूपेण नित्यमुक्ततयाऽवस्थानमाराधकभावश्चेत्येतत्सर्वं तव लीलामात्रं, न तु वस्तुत इत्याशयेनाहुः ॥ हे रमणेति ॥ १३ ॥

इदं तु स्वदोषनिवृत्त्यर्थमस्माभिः प्रार्थितं, त्वं प्रसन्नश्चेत्तर्हि मुख्यमस्मदीयं प्रार्थनीयं शृण्वित्याशयेनाहुः ॥

सुरतवर्द्धनं शोकनाशनं
स्वरितवेणुना सुष्ठु चुम्बितम् ॥
इतररागविस्मारणं नृणां
वितर वीर नस्तेऽधराऽमृतम् ॥ १४ ॥

सुरतेति ॥ हे वीर, स्वस्याधरामृतं वितर देहि । नन्वनेन किं भविष्यतीतिचेत्तत्राहुः ॥ सुरतेति ॥ यथा बह्वन्नभोजनानुकूला क्षुत् तत्करेण रसनोद्बोध्यते तथाऽपरिच्छिन्नकामेन त्वया संभोगयोग्यतासिद्ध्यर्थं परिच्छिन्नस्यास्मत्कामस्य वर्द्धनम् । तत्रापि न लौकिकसाम्यमित्याशयेनाहुः ॥ शोकस्य नाशनं मोक्षप्रदमपि । लौकिकं नैवं, तस्य प्रत्युत शोकोत्पादकत्वात् । किञ्च स्वरितेन नादितेन वेणुना सुष्ठु चुम्बितं परमभक्तेन वेणुना लोकोत्तरमाहात्म्य-

धर्त्वेन गीतं, ब्रह्मलोकपर्य्यन्तं ख्यातकीर्तीति यावत् । अत एव नृणामपि इतरेषु सार्वभौमादिसुखेषु रागमिच्छां विस्मारयति विलाययति तथा तत् । किमुत वक्तव्यमस्माकमतो तदेवास्माकमपेक्षितत्वादवश्यं देहीत्यर्थः । यद्यपीदमनल्पं वस्तु तथापि दानशूराणां किमप्यदेयं न भवतीत्याशयेन संबोधयन्ति ॥ वीरेति ॥ यद्वा नृणां स्वरितवेणुना चुम्बितं सत् तच्छिद्रद्वाराऽऽनन्दरूपेण निःसृत्वं स्वस्य कर्णद्वारा हृये प्रविष्टं सत् इतररागविस्मारणे स्वरितवेणुरूपेण परिणतेनान्तःकरणेन चुम्बितं सदिति वाऽस्माकं तु साक्षात्तद्ग्रहणेऽधिकारात् साक्षादेव हि । यतः साक्षादेव पीतं सद् अस्माकं सुरतवर्द्धनं शोकनाशनं च भविष्यतीत्यर्थः ॥ अनभिज्ञापक्षे, हे वीर, यदि त्वं स्मरयुद्धकातरस्तर्हि स्तनेषु चरणाम्बुजमर्पय । यदि च सुरतसमरप्रतिभटप्रियजनविजयसमर्थस्तर्ह्यधराऽमृतं देहीति भावः । ननु दत्तमेव पूर्वं, किमिति पुनस्तदेव प्रार्थ्यत इत्याशङ्क्योक्तं— सुरतस्य प्रेममयस्य भोगेच्छां वर्द्धयतीति तत् अनेन तस्य मध्वादिवन्मादकता, तत्र तस्य भावश्च दर्शितः । अत एव त्वद्विरहादिजनितशोकस्य नाशनं, तत्रापि स्वरितवेणुना सुष्ठु चुम्बितं नादाऽमृतवासितमिति भावः । ननु लोकयशोनाशनिबन्धनशोकोत्पादकत्वात् कथं सर्वथा शोकनाशनमित्युक्तमित्याशङ्क्योक्तम्— इतरेषु लोकद्वयभोग्येषु रागं विस्मारयतीति । एवञ्च निमित्तापाये नैमित्तिकस्याप्यपाय इति भावः । तत्रापि नृणाम् । अनधिकारिणामपि यथा राहोः सुरादिरागविस्मारकम् अमृतं जातं तद्वत् । किमुत नारीणां तत्राप्यस्माकमिति भावः । यद्वा नृणां मध्ये तव यदेवंविधमधराऽमृतं तन्नो देहीत्यर्थः ॥ मानिनीपक्षे, ननु नैतावता ममान्तःकरणनिष्ठदाहस्य निवृत्तिर्भविष्यतीत्यतोऽन्यदपि किञ्चित् तदुपशामकं कर्म ज्ञायतामिति प्रार्थयन्त-

मिवालक्ष्य विरहव्याकुलत्वादीषत्तिरोहितस्वभावाः सर्वमप्यनुजानन्ति ॥ सुरतेति ॥ नोऽस्माकमधराऽमृतं ते तुभ्यं स्वस्मै वितर देहि तेन तव मनोरथपूर्तिर्भविष्यति । यतः सुरतवर्द्धनं शोकस्याऽस्मदप्राप्तिहेतुकस्य नाशनम् । अनुभूतपूर्वत्वादत्र संशयो न कर्तव्य इत्याशयेनाहुः ॥ स्वरितो वेणुर्यस्य तेन त्वया पूर्वं सुष्ठुचुम्बितम् । किञ्चेदममृतं वागगोचरमात्रानुभूतमाहात्म्यमित्याहुः ॥ इतरेषां सर्वेषामपि नृणां योषिदधरामृतमितरागविस्मारकत्वेन प्रसिद्धम् । असुराणां मोहिन्यधराऽमृतपानाऽऽशया क्षीरोदमथनोत्थाऽमृतविषयकरागस्य त्यक्तत्वादिति भावः । तथापि यथोक्ताऽमृतास्वादनसमये प्रायो नायकस्य पराजयो भवत्यतस्त्वया तदा नो वीरता विधेया, नो चेदुपहास्यो भविष्यसीति हितैषित्वात् प्रथममेव त्वां सूचयाम इत्याशयेन संबोधयन्ति ॥ हे वीरेति ॥

निवृत्तिपक्षे, ततश्च भवदर्चनध्यानाभ्यां येषामन्तःकरणं शुद्धिमैकाग्र्यं च प्राप्तं तेषां विवेकवैराग्यादिसाधनसंपन्नानामधिकारिणां नृणां धारयत्यज्ञानादिकं सर्वमिति धरः सर्वाधिष्ठानभूतपरमात्मा तस्य सम्बोधनं, हे धर । ते नः, यथोक्तस्य तव प्रतिपादिकानामस्माकमुपनिषदाममृतम् । अस्मच्छ्रवणजन्यं ज्ञानाऽमृतं वितर करुणया देहि । यतस्त्वमेव वीरः, न हि ज्ञानेन सदृशं पवित्रमिह विद्यते * इत्युक्तत्वात् सर्वोत्तमज्ञानाऽमृतदातृत्वात्तद्दानशूरस्तदन्तःकरणवृत्त्यारूढः सन्, तदज्ञानादिसमस्तशत्रुध्वंसकरत्वाद्युद्धशूरश्चेद, ददामि बुद्धियोगं तं येन मामुपयान्ति ते, तेषामेवानुकम्पार्थमित्यादि ध्वनयन्त्यः, हे वीरेति ॥ न च स्वस्य त्वदभिन्नज्ञानवतस्त्वत्प्रतिनिवृत्तिः शङ्क्या । प्रियो हि ज्ञानिनोऽत्यर्थमित्याशयेनाहुः ॥ सुरतस्य परस्परप्रीतेर्वर्द्धनम् । न चैतदमृतं विना जीवस्य शोकनिवृत्तिः सम्भवतीत्याशयेनाहुः ॥ शोकस्य तदुप-

लक्षितबन्धस्य नाशनम् । तरति शोकमात्मवित्, ब्रह्मविदाप्नोति परं, तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते इति श्रुतेः । नचैतदस्मद्विचारमन्तरा लभ्यमित्याशयेनाहुः ॥ स्वरितो ध्वनिव्यञ्जितो वेणुस्थानीय उपनिषत्कदम्बो येन तेन वेदान्ताभ्यासव्रता पुरुषेण सुष्ठु चुम्बितं सम्यगास्वादितम् । वेदान्तविज्ञानसुनिश्चितार्था इत्यादिश्रुतेः । अनात्मपदार्थेषु राग एवानर्थकरः । स च मिथ्याज्ञानाविजृम्भितस्तत्त्वज्ञानाऽमृतेन मिथ्याज्ञाननिवृत्त्या निवर्त्तते इत्याहुरितरत्रानात्मपदार्थेषु यो रागस्तस्य नाशकम् । यं लब्ध्वा चापरं लाभमित्युक्तत्वात् ॥ १४ ॥

अटति यद्भवानह्नि काननं
त्रुटिर्युगायते त्वामपश्यताम् ॥
कुटिलकुन्तलं श्रीमुखं च ते
जड उदीक्षतां पक्ष्मकृद् दृशाम् ॥ १५ ॥

अहो अपराऽमृतायोग्यकालेऽपि त्वद्विरहोऽस्माकमसह्यः, किमु वक्तव्यमस्यां रात्रावित्याशयेनाहुः ॥ अटतीति ॥ भवान् स्वतन्त्रो वारयितुमशक्यो यदा दिने दिने काननं वृन्दावनं प्रति अटति गच्छति तदा त्रुटिः क्षणस्य कश्चिदंशोऽपि त्वामपश्यतां व्रजस्थानां सर्वप्राणिनां युगवत् प्रतीयते, किमु वक्तव्यमस्माकम् । पुनश्च कथञ्चिदिनस्य परिक्षये व्रजं प्रत्यागतस्य तव कुटिलकुन्तलाननं श्रीमुखमुच्चैरीक्षमाणानां प्राणिनां दृशां पक्ष्मकृद् ब्रह्मा जडो मन्दः । भवच्छ्रीमुखापेक्षयातिक्षुद्रसुखविषयदर्शनार्थं देवानां पक्ष्म न कृतवान् ! अलौकिकविषयदर्शनपराणामस्मदादीनां तु तत् कृतवान् । कालं च महान्तं कृतवानतस्तस्य जडत्वं स्पष्टमेवेति भावः

तथाच निमेषप्रतिबन्धोऽपि यत्रासह्यदुःखप्रदस्तत्रैवंविधसमये बहुकालं त्वद्विरहं कथं सहामस्तस्मात् कृपां कुर्विन्त्याशयः ॥ अनभिज्ञापक्षे, किञ्च प्रत्यहं क्षणमपि त्वददर्शने दुःखं, दर्शने च सुखमनुभूय सर्वसङ्गपरित्यागेन यतय इव त्वामुपगताः, त्वं त्वेवंविधा अप्यस्मान् परित्यज्य गत इत्यहो कष्टमिति सकरुणमाहुः ॥ अटतीति ॥ त्वामपश्यतां त्रुटिरपि युगायते, त्वं तु सूर्योदयादारभ्य तदस्तपर्यन्तं वनमटति। तत्रापि तत्र गमनं यदा सार्थकं भवेत्तर्हि स्याद्यथाकथञ्चित्सन्तोषः। परन्तु दिनमात्रं वृथा काननमेवाटति, अस्माकं तु तदत्यन्तमसह्यमिति भावः । दर्शनसमये निमेषमात्रमप्यन्तरमसह्यमिति दर्शनसुखमुक्तम् । उदीक्षतां मध्ये यः पक्ष्मच्छेदकः स एवाऽजडः प्रतिबन्धकनिवर्तकत्वात् कुशल इति वा। तथाच तत्प्रतिबन्धकस्याङ्गस्यापि छेदनीयत्वात् तत्सुखस्योत्कर्ष इति भावः। यद्वा अस्माकमयं सुखजनक इति भ्रमाद्वयं दुःखसमुद्रे पतिताः, विचारे कृते दुःखजनकत्वमेव सिद्ध्यति । सर्वदा तथैव तव प्रवृत्तिदर्शनादित्याशयेनाहुः ॥ अटतीति ॥ तथाच प्रयोजनं विना चिरकालं वने भ्रमणं दर्शनकाले कुटिलकुन्तलैर्मुखस्याच्छादनं चेत्येतत्सर्वं केवलमस्मद्दुःखायेत्यर्थः । किञ्च तवैव कोऽपराधो, दैवमप्यस्मद्दुःखाय बद्धपरिकरमित्याहुः ॥ पक्ष्मकृदिति ॥ तस्माद् बहु जातमितः परं करुणा विधेयेति भावः ॥ मानिनीपक्षे, ननु सम्प्रतीषद् गर्वशैथिल्यं जातं वर्तते, प्रकटिते तु मयि पुनर्गर्वगिरिशृङ्गारूढा भविष्यथ इतिचेदस्मदर्थं नागम्यतां, यासां तु त्वद्दर्शनादर्शनयोः सुखदुःखसागरप्रवेशस्तदर्थमेवागम्यतामित्याशयेनाहुः ॥ अटतीति॥

निवृत्तिपक्षे, यथोक्तज्ञानाऽमृतरहितानां क्षणमात्रमपि कालो दुःखकालत्वान्महानित्याहुः॥ अटतीति॥ त्वामपश्यतामह्नि अविद्यालक्षणे दिने संसृतिलक्षणं यत् काननं तुच्छत्वात् यदटति तत्र त्र-

ष्टिरपि कालो युगवद् भवति । मुखं निःसरणे वक्त्र इति कोशात् श्रियो धर्मादिसम्पत्तेर्निःसरणं यस्मात् तथाभूतं चेतनं, कुटिलः कुन्तलो जत्रो विषयाभिमुखो वेगो यस्य तादृशमुदीक्षतां मध्ये यस्तुभ्यं त्वत्प्राप्त्यर्थं दृशां चक्षुराद्यानां पक्ष्मकृन्निरोधकः स एव अजडश्चेतनस्त्वत्स्वरूप इत्यर्थः ॥ १५ ॥

पतिसुतान्वयभ्रातृबान्धवा-
नतिविलङ्घ्यतेऽन्त्यच्युताऽऽगताः ॥
गतिविदस्तवोद्गीतमोहिताः
कितव योषितः कस्त्यजेन्निशि ॥ १६ ॥

किञ्च, सर्वथा अत्याज्या अस्मान् किमर्थं त्यक्तवानसीति न विद्म इत्याशयेनाहुः ॥ पतीति ॥ हे अच्युत भगवतोऽप्यच्युतस्वरूप यत् कदापि तेन वियोगो न भविष्यतीति विचार्य्य पतयः सुताः अन्वयो वंशः भ्रातरः बान्धवाः संबन्धिन एते सर्वथाऽप्यलङ्घ्यास्ता-नप्यतिलङ्घ्य तवान्ति समीप आगताः । यतस्त्वं गतिवित् कर्म्मोपा-सनज्ञानफलज्ञाता तत्प्रदानाय साक्षाद्द्रष्टा । सर्वा अपि गतयो भगवत एव भवन्तीति । वयं वा गतिविदः । पत्यादिभजने भगवद्भजने च गतितारतम्यविद इति वा । किञ्च, त्वयाप्याकृष्टा इत्याहुः ॥ त-वोद्गीतेनोच्चैर्गीतेन मोहिताः पत्यादिवैमुख्यापादकेन गिताऽमृतेन त्वयैव स्वस्मिन्नासक्तचित्ताः संपादिताः कस्त्यजेत् । यस्त्वं स्व-स्मिन्नासक्ताः स्वयमाहूय फलमदत्वा त्यक्तवान् स भगवान् क इति न विद्म इत्यर्थः । ननु स्वपत्यादिसन्निधावेवेतः परं गन्तव्यमिति चेत् तत्राहुः ॥ कितवानां त्वत्स्वरूपानभिज्ञत्वात् स्वपरवञ्चका-नां संबन्धिन्यः स्त्रियः । अतस्तदाभिमुख्यं कदापि मास्तु, त्वदेक-

शरणा वयं त्वयैव रक्षणीया इति भावः । अनभिज्ञापक्षे, आस्तां तत्, अत्र तु अत्यन्तमनुचितं कृतमित्याहुः ॥ पत्यादीनतिक्रम्य तव समीपमागताः, यतस्तवोत्कृष्टेनोच्चैर्गीतेन मोहिताः । यतस्तव गतिविदः । अस्मन्मोहकान् गीतगतिविशेषाञ्जानतः । उद्गीतेन मोहिता अवश्यमागमिष्यन्तीत्यस्माकं गतिविद इति वा । यद्वा तव गतिं स्वभावं जानन्त्यो विदग्धा अपि वयं मोहनमन्त्रात्मकेन उद्गानेन मोहिता एव स्वयमेवाहूता योषितो निशि अरण्ये त्वाम् ऋते कस्त्यजेत् । कापि स्त्रियो न त्याज्यास्तत्रापि निर्जनवने, तत्रापि निशि, तत्रापि यदर्थमाहूतास्तददत्त्वैवेति तवैव शठस्यैवंविधं चेष्टितं सम्भवति, नान्यस्येति कितवेति संबोधनाशयः । यद्वा, हे कितव एवंविधः कितवोऽपि कश्चिन्नास्ति । स हि कैतवाल्लब्धं वस्तु स्वीकरोति, न तु तिरस्करोतीति भावः । तथाच नास्त्यस्मत्त्यागे किमपि कारणम् । प्रच्युतिलक्षणं तु तव त्वयि नास्त्येवेत्यच्युतेति संबोधनाशयः ॥ मानिनीपक्षे, तिष्ठत्वस्मदर्थं गमनागमनविचारः एतास्तु पत्यादीनतिलङ्घ्य तव समीपमुपागताः किमर्थं त्यक्त्वा-नसीत्याहुः ॥ पतीति ॥ च्युतिरहितं मत्वा समागतास्त्वं तु स्वयमेव पलायित इत्याश्चर्य्यमिति अच्युतेति संबोधनाशयः । शठं प्रति शठं कुर्यादिति न्यायमजानन् वृथैव कितवः संपन्नोऽसि । सरलाः प्रति कैतव्याचरणादित्याशयेनाहुः ॥ हे कितवेति ॥

निवृत्तिपक्षे, एवंविधाधिकारिणमपेक्ष्यैव पत्यादिस्थानीयानर्थान् वादिनो वाऽतिविलङ्घ्य, हे अच्युत, स्वरूपाववोधिका यास्तवोद्गीतेन—समन्वयात्, स विजिज्ञासितव्यः, सोऽन्वेष्टव्य इत्यादिरूपेण, मायै=विवेकज्ञानाय तत्प्रदत्त्वेनोहिताः, कितवेन कैतव्येन व्याजेन योषितः स्वाभीष्टपतिपरायणा योषित इव परब्रह्मणि तात्पर्येण संगता अस्मान् को वा विद्वान्निशि कर्मादिरूपेण परि-

णतायामविद्यायां निशि त्यजेत् क्षिपेद्, ब्रह्मातिऽरिक्तपरत्वप्रतिपादनेनान्धगर्ते क्षपयेत् पातयेत् सजेत् स विद्वानित्यर्थः ॥ १६ ॥

रहसि संविदं हृच्छयोदयं
प्रहसिताननं प्रेमवीक्षणम् ॥
बृहदुरः श्रियो वीक्ष्य धाम ते
मुहुरतिस्पृहा मुह्यते मनः ॥ १७ ॥

ननु किमर्थं परमेश्वरबुद्धिमाच्छाद्य रमणबुद्धिं कृतवत्यो यथेदानीं दुःखसागरे निमग्नाः । अतस्त्यज्यतां सा बुद्धिरित्याशङ्क्य तव स्वरूपमेव तादृशबुद्धिमुत्पादितवान्, सा चेदानीमस्माभिर्निर्वर्तयितुमशक्येत्याशयेनाहुः ॥

रहसीति ॥ रहसि संविदः सङ्केता यस्मात् । अलुगार्षः । हृच्छयस्य कामस्योदयो येन । प्रहसितमाननं यस्य, प्रेमपूर्वकं वीक्षणं यस्य तथाभूतं त्वां श्रियः स्थानं तव बृहद्वक्षःस्थलं च पुनः पुनर्वीक्ष्यास्थितानामस्माकम् । अतिस्पृहा जाता तया चास्मन्मनस्तस्याप्त्यभवान्मुह्यते पुनः पुनर्वाञ्छां प्राप्नोतीत्यर्थः । यद्वा भावक्लिन्नतः स्पृहिस्तथाचाऽस्मन्मनो वीक्ष्य तया मुह्यतीत्यर्थः । अतिस्पृहमिति क्वचित् पाठः । यद्वा स्पृहोत्पत्तौ कारणत्रयं— रहसि संविद्रूपमेकं, कामोदयकरं प्रेमपूर्वकवीक्षणविशिष्टं प्रहसिताननमिति द्वितीयं, श्रियो धाम विशालमुरश्च तृतीयम् । तथाच त्वदीयं मोहिनीविग्रहमालोक्य दग्धकामो महारुद्रोऽपि यत्र मोहितस्तत्र ततोऽपि कोटिगुणितसौन्दर्य्यादिविशिष्टे त्वयि सति वराकीणामस्माकं व्यामोहे किं चित्रमिति भावः ॥ अनभिज्ञापक्षे, त्वद्दर्शनजन्यत्वदङ्गसङ्गस्पृहा त्वद्वियुक्तानामस्माकं रोगरूपा संपन्नाऽतः

स्वाङ्गसङ्गेन तच्चिकित्सा त्वयाऽवश्यं विधेयेत्याहुर्द्वाभ्याम् । पूर्वमस्माकं कामो न स्थितः । तव प्रहसितयुक्तस्य मुखस्य दर्शनेन उदयं प्राप्तः, प्रेमपूर्वकं वीक्षणेन स्थिरतां गतः, ततो रहसि संविदा सम्भोगचातुर्यसूचनेनातिसौन्दर्य्यविशिष्टस्य विशालस्योरसो दर्शनाज्जातेन स्वयोग्यताज्ञानेन चोत्कण्ठा तच्छान्तिस्पृहोत्पन्ना। तद्विषयालाभात्तद्युक्तं मनः केवलं मुहर्मुहुर्मुह्यते, मृत्युरपि नायात्यत उभयभ्रष्टानां जीवनमरणान्यतररहितानाम् अस्माकं धिग् जीवनमित्यर्थः ॥ मानिनीपक्षे, यद्यपि भवान् सम्प्रति परोक्षस्तिष्ठति तथापि त्वदीयमनसोऽवस्थां वयं सम्यगवगच्छाम इत्याशयेनाहुः ॥ अस्मत्कृतं त्वत्तोषार्थं सङ्केतं तथा कामोदये हेतुभूतं प्रेमवीक्षणं, प्रहसितयुक्तमस्मदीयं मुखं, श्रियः स्थानमुरःस्थलं च वीक्ष्य तत्प्राप्तिस्पृहया तव मनो मुह्यति तथाप्यस्मद्दुःखार्थं तादृशं दुःखमपि सहसे, न त्वागच्छस्यतः किं वक्तव्यमाश्चर्यं तव हृदयस्य माहात्म्यमिति भावः ॥

निवृत्तिपक्षे, यद्यप्येवं तथापि कामिनोऽस्मदभिप्रायं नाशयन्तीत्याहुः ॥ प्रमदाकृतां रहसि संविदं, तथा तदीयं यथोक्तमाननं यथोक्तमुरश्च वीक्ष्य कामरूपेण स्थितस्य तत्र जातया स्पृहया अस्माकं मनो मुह्यते तात्पर्य्यन्यस्यासं भजत इत्यर्थः ॥ १७ ॥

स्वदुःखनिवृत्तेरनायाससाध्यतामावेदयन्ति ॥

व्रजवनौकसां व्यक्तिरङ्ग ते
वृजिनहन्त्र्यलं विश्वमङ्गलम् ॥
त्यज मनाक् च नस्त्वत्स्पृहात्मनां
स्वजनहृद्रुजां यन्निषूदनम् ॥ १८ ॥

व्रजेति ॥ हे करुणानिधे तवाभिव्यक्तिः सर्वेषां व्रजौकसां वनौकसां च विशेषेणात्यर्थं वृजिनहन्त्री दुःखनिरसनी । अतो दुःखप्रदानायान्तर्धानमनुचितमिति भावः । यद्वा वृजिनस्य पापस्य नाशिका । तथाच स्वाङ्गसङ्गप्रतिबन्धकं पापमभिनाशयितुं समर्थस्यान्तर्धाने प्रयोजनं न पश्याम इति भावः । किञ्च, विश्वस्य सर्वस्याप्यर्थं मङ्गलरूपा । तथाच विशेषसम्बन्धवतीनामस्माकं संप्रति विपरीता सम्पन्नेत्यहोऽस्मदभाग्यमहिमेति भावः । अतः स्वाभिव्यक्त्यनुरूपैव चेष्टा न्याय्येत्याशयेनाहुः ॥ नोऽस्माकं मनागीषदायासरहितत्यागं किञ्चित् त्यज । अस्मभ्यं हि अनादरेणापि त्वया कृतेऽस्मत्कार्यं भविष्यतीति ज्ञापयितुं त्यजेत्युक्तम् । यतस्त्वय्येव स्पृहायुक्त आत्मा अन्तःकरणं यासाम् । तथाचोत्कटस्पृहायुक्तान्तःकरणानामादरानादरविचारः कुतस्त्य इति भावः । किं त्याज्यमित्याकाङ्क्षायामाहुः ॥ स्वजनानां गोपीनां हृदयरोगाणां यदेवं नितरां सूदनं नाशनं भवति तदेव तदभिज्ञस्त्वं देहि, तन्नाम न वक्तव्यमिति भावः ॥ मनागिति याचकरीत्या । वस्तुतस्तु हृद्रुजामिति बहुवचनेन, निषूदनमित्यत्र निशब्देन च चिरकालं निरन्तरं च लोकोत्तराङ्गसङ्गसुखं प्रार्थनीयत्वेनाभिप्रेतं ध्वनितम् ॥

अनभिज्ञापक्षे, स्वरोगोपशामकौषधप्रदानोत्साहम् उत्पादयितुं याचकरीतिमनुसरन्त्यः स्तुवन्ति ॥ तव व्यक्तिर्जन्म वृजिनस्य दुःखस्य पापस्य च हन्त्री । अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथेति गर्गाचार्येणोक्तत्वात् पूतनादिसंहारेण नलकूबराद्युद्धारेण च तत्त्वस्यानुभूतत्वाच्च । किञ्च, नैतावदपि तु सर्वस्यापि मङ्गलरूपा । तव जन्मप्रभृति क्वाप्यमङ्गलस्यादर्शनात् । एवं स्तुत्या स्वाभिमुखं प्रियमालक्ष्याहुः॥मनागीषत्, न तु बहु, तन्नावश्यं त्यक्तव्यमेव

देहि त्यज। किं तदित्यपेक्षावन्तमिवालक्ष्य भिक्षुपादप्रसारन्यायमा-श्रित्याहुः ॥ स्वजनेति ॥ तथाच केषाञ्चिद् दुःखस्य नाशकः, केषा-ञ्चिन्मङ्गलरूपफलविशेषस्य प्रदाता, अस्माकं तु रोगस्य निवर्तको भवान् तत्र कार्पण्यं तवोचितमिति भावः ॥ मानिनीपक्षे, जन्मप्रभृ-ति यादृशस्तव स्वभावः स्थितः सम्प्रत्यपि तथाभूत एवास्माक-मपेक्षित इत्याशयेनाहुः ॥ व्रजेति ॥ तथाच यथास्माकमपि दुःखं न भवेन्मङ्गलं च स्यात् तथात्वयानुष्ठेयमिति भावः । तर्हि कथ-मेवं भवेदितिचेत् तत्राहुः ॥ त्यजेति ॥ हे स्वजन, नोऽस्माकं यत् हृदयकान्तीनां निषूदनमीषदौदासीन्यं तत् त्यज यतस्त्वत्कर्तृका या स्पृहा तस्यामात्मा मनो यासां त्वत्कृतमानासक्तचेतसां तथा-च संप्रति स्वीकृतमीषदौदासीन्यं विहायाऽऽगत्य पूर्ववत् प्रार्थना-दिकं कुर्वित्याशयः ॥

निवृत्तिपक्षे, तस्माद् यथाऽस्मत्संरक्षणं जीवानां समुद्धार-श्च भवेत् तथा त्वया कृपा विधेयेति प्रार्थयन्ते ॥ व्रजेति ॥ व्रज-स्य वेदस्य संसारारण्यपतितानां जीवानां चात्, वृजिनहन्त्री सर्वा-ऽनर्थनिवृत्तिकरी । तथा विश्वस्यालं मङ्गलरूपा परमानन्दाविर्भाव-करी हे परमात्मँस्तव व्यक्तिः साक्षात्कारः । तस्मात् स्वजना-नां स्वभक्तानामज्ञानाहङ्कारादिलक्षणरोगाणां यन्निषूदनं तदस्म-त्संबन्धिविज्ञानलक्षणं किंचित् स्वजनेभ्यो देहि । यतस्त्वद्विषया याऽस्मज्जिज्ञासा तत्कर्तव्यतायामात्माभिप्रायो यासाम् । तथाचौ-पनिषदेन स्वविज्ञानेन स्वजनानुद्धरेति भावः ॥ १८ ॥

एवं बहूक्तेः परविरहव्याकुलस्वान्ता गतधैर्या रुदन्त्य आहुः।

यत्ते सुजातचरणाऽम्बुरुहं स्तनेषु
भीताः शनैः प्रिय दधीमहि कर्कशेषु ॥

तेनाटवीटमसि तद्व्यथते न किंस्वित्
कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः ॥ १९ ॥

इति श्रीभागवते दशमस्कन्धे रासपञ्चाध्याय्या-
मेकत्रिंशोऽध्यायः ॥ ३१ ॥ (३) ॥

यदिति ॥ यत्तव सुजातं चरणकमलं स्तनेषु भीताः सत्यः शनैः दधीमहि भयेन शनैर्धारणे हेतुः–कर्कशेषु। नन्वेवं तर्हि किमर्थं धारयथेति चेत्तत्राहुः ॥ हे प्रिय, स्वसुखार्थं धार्ष्ट्येन धारयामः तत्रापि सुजाताम्बुरुहरूपत्वात् सुगन्धि शीतलं हृदयस्थतापोपशामकम्। प्रियपदमितस्तद्धारणमिति सूचनार्थमुक्तम्– सुजातेति ॥ त्वं तु तादृशकोमलेनास्मान् परित्यज्यास्मद्द्वेषेण संप्रति रात्रौ अटवीं शर्करादिव्याप्तमरण्यमटसि भ्रमसि। किं स्वित् तत्पादपद्मं तत्रत्य-शर्करादिभिर्न व्यथते। यद्यपि तेन तादृशवने भ्रमणेन तद् व्यथते, न वेति संदेहो भवति, तथा नाऽस्माकं संदेहोऽस्मद्दोषवशात् पलायितेन त्वया तद्व्यथामगणयित्वा भ्रमणाश्रितत्वाद् व्यथत एवेति निश्चयात् । तथाच स्वसुखहेतुत्वात्तत्पीडापि यद्यस्माक-मसह्या, तदा परमदुःखकारणभूता वनभ्रमणजनितव्यथा त्वस-ह्यतमाऽतोऽस्माकं बुद्धिस्तामनुसन्धाय भ्रमति घूर्णत इत्यर्थः। यतो भवदायुषां भवदेकप्राणानामस्माकं तादृशभवत्पादपीडानुसंधा-नेन मरणमेवोपस्थितमहो कष्टमिति भावः ॥ अनभिज्ञापक्षे, अहो यत् प्रार्थ्यते तन्मयाऽवगतं, तथापि मदीयं पादसरोजं युष्मत्स्त-नेषु स्थापितं व्यथामवाप्नोति, तेषां कठोरत्वादतो भवतीनां प-रोक्षं वन एव भ्रमामीत्याशङ्क्य सरोदनमतिचित्रमाहुः ॥ यदिति॥ तथाचातिसुकुमारत्वात् पीडाशङ्कयाऽस्माभिः कठोरेषु स्तनेषु-

शनैः शनैः स्थाप्यते, तेन त्वमटवीमटसीत्यतिचित्ररूपोऽन्यायस्तवैव शोभत इति भावः । स्तनस्पर्शजनितदुःखासहनं, कूर्प्पादिस्पर्शे व्यथासहनं च किन्निवन्धनमिति तु वयं न विद्म इत्यप्यनेन ध्वनितम् । तत्र मनसोऽवस्थां को वेद कीदृशो वर्ततेऽस्माकं बुद्धिस्तु संशयचक्रारूढा स्थैर्य्यं न लभते, किं कुर्म इत्याहुः ॥ तदू व्यथते परमसुकुमारत्वादाहो स्विन्न व्यथते, भ्रमणे प्रवृत्तत्वादिति द्वयोः पक्षयोरेकस्यानिर्धारणादस्मद्धीर्भ्रमति । तथाहि । अहो तस्य पदं तु व्यथते, तथाप्यसावस्मास्विव स्वाङ्गेष्वपि निर्दयः। किवाऽस्मद्दुःखार्थं स्वाङ्गे दुःखमुत्पाद्य सहते, किं वाऽस्मद्दुःखजन्यसुखेन दुःखमपि सुखमेव मन्यते, किं वा दैववशाद्विरहं प्राप्तः प्रेमभराक्रान्तस्वान्तत्वादुन्माददशां प्रविष्टस्तत्पीडां नानुसन्धत्त इत्यादिप्रथमपक्षानुकूलतर्कान् प्रति धावति । किं संसर्गजा दोषगुणा भवन्तीति न्यायाद्यथा हृदयमतिकोमलमप्यस्मत्कठोरकुचसङ्गेनातिकठोरमभूत् तथा त्वत्पदाऽम्बुजमप्यतो न व्यथते । किं वा सुकुमारसङ्गेन कूर्पादयः कोमलतां गताः, किं वा भूमिरेव कारुण्यान्माधुर्यरसास्वादनाय वा तदधः स्वजिह्वां स्थापयति, किं वा कयाचिदिन्द्रजालविद्यया भूमिं स्पृशतीत्यादिद्वितीयपक्षे तर्कान् प्रति धावति । ननु मिथ्येदं, प्राणधारणादिति चेत्तत्राहुः ॥ भवत्येव समर्पितमायुर्यासामतः सुखिनि त्वयि स्थितत्वान्न नश्यतीति भावः ॥ मानिनीपक्षे, अतिकोमलचित्तस्य परमसुकुमारावयवस्य स्वभावविपर्य्ययमालक्ष्य वयमतिव्याकुलाः संपन्नाः, किं कुर्म इत्याशयेनाहुः ॥ यदिति ॥ कुचानां कठोरत्वाच्चरणस्यातिसुकुमारत्वाद्धारणे भीयसे इति कृत्वा तद्धारणम् । यतो हि प्रिय । तथाच तव संयोगोऽप्यस्माकं दुःखहेतुरेव, यतः कुचानां कठोरत्वे तव पादपीडामयुक्तं दुःखं, व्रतादिना तत्कोमल-

त्वत्प्रार्थनायां तत्र दुःखानुसन्धानेन दुःखमिति भावः । तादृशेनापि त्वमटवीमटसि । तत्तु निश्चयेन व्यथत एव, तत्र तु तस्मिन्नपि दया नोत्पद्यतेऽतस्तत्त्वत्स्वभावविपर्ययमालक्ष्यास्मद्धीर्भ्रमतिमरणमूर्छां गन्तुं प्रवृत्ता, त्वं त्वत्स्मद्विरहितोऽत्रशिष्टास्मदायुर्भिरपि चिरं सुखेन न विहरसीत्याशयेनाहुः ॥ भवत्यर्पिताऽऽयुपामिति ॥

निवृत्तिपक्षे, जीवरूपेण संसरणं तु नास्मभ्यं रोचतेऽतः पुनरपि वदाम इत्याशयेनाहुः ॥ यदिति ॥ तव परब्रह्मणो यत् साधकानुग्रहार्थं प्रकटितं सगुणं स्वरूपं सुजाते चरणाऽम्बुरुहे यस्य तदपि कठिनानुष्ठानप्रतिपादकेषु स्तनस्थानीयेषु कर्मोपासनाप्रतिपादकयागेषु, अहो निर्गुणस्य निरवयवस्य कथमर्चनादिकं प्रतिपादयाम इति भीताः सत्यः शनैः साधकचित्तशुद्ध्यादिक्रमेण तस्य ज्ञानोदयार्थं दधीमहि । तेनैव जीवत्वं प्राप्तेन रूपेण संसाराटवीमटसि तत् किंस्विन्न व्यथते ? किन्तु व्यथत एव । तत्रत्यैः कूर्पादिस्थानीयैराध्यात्मिकादिदुःखैः । यद्वा किं व्यथते न वेति अस्माकं धीर्भ्रमति । अनेन संसारस्यानिर्वचनीयत्वं बोधितम् । यतो भवद्बोधनार्थमेवास्माकं प्रादुर्भावोऽत एव वदाम इत्याहुः ॥ भवदिति ॥ १९ ॥

इति श्रीधनपतिसूरिविनिर्मितायां गूढार्थदीपिकायां
एकत्रिंशोऽध्यायः ॥ ३१ ॥ (३) ॥

## अथ द्वात्रिंशोऽध्यायः ॥

द्वात्रिंशे गोपिकाऽऽलापविक्लिन्नहृदयोऽच्युतः ॥
तासामाविर्हितस्ताश्च पूजितः प्रत्यपूजयत् ॥ १ ॥

इत्थं विरहव्याकुलचेतसां चेष्टावर्णनमुपसंहरति ॥

### श्रीशुक उवाच ॥

इति गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा ॥
रुरुदुः सुस्वरं राजन् कृष्णदर्शनलालसाः ॥ १ ॥

इतीति ॥ इत्येवं पूर्वोक्तप्रकारेण सर्वा एव गोप्यः प्रकर्षेण उच्चैः परमप्रेम्णा गायन्त्यः, तथा चित्रधा अनेकप्रकारेण प्रलपन्त्यः विरहव्याकुलत्वादनर्थकान्यपि वचांसि प्रयुञ्जन्त्यः । एवं कृतेऽपि यदा प्रेष्ठदर्शनं न जातं तदा सुस्वरं करुणोत्पादकदीर्घस्वरेण रोदनं कृतवत्यः । एतत् सर्वं न स्वदेहरक्षाद्यर्थं, किन्तु कृष्णदर्शने लालसा उत्कटोत्कण्ठा यासां ताः । यथा दुःखिता दुःखनिवृत्त्यर्थं राजाग्रे रोदनेन तान्निवेदयन्ति तद्वदिति सम्बोधनाशयः ॥

निवृत्तिपक्षे, गोप्यः श्रुतयो मुख्याधिकारिणं प्रति प्रकर्षेण मुख्यतात्पर्येण परमात्मानमेव गायन्त्यः कर्म प्रति प्रलपन्त्यः, अनर्थकवचनत्वेन प्रतिपद्यमानाः परमजडं प्रति रुरुदुः हा महामूर्खोऽयं सर्वथास्मद्विमुख इति रोदनमेव कुर्वन्त्यः ! अधिकार्यभाव उपदेशवाक्यानां रोदनरूपत्वाभिधानात् । यतः कृष्णस्य सदानन्दरूपस्य परमात्मनो दर्शनं जीवानां मोक्षार्थं भवत्विति लालसा यासां ताः । आत्मा वा अरे द्रष्टव्य इत्यादिश्रुतेरित्यर्थः ॥ १ ॥

ततः परं भगवानप्यन्तर्धानतया स्थातुं नाशकत्, किन्त्वति-

प्रबलेन तत्प्रेम्णा समाकृष्टचेता आविर्भूत इत्याह ॥

तासामाविरभूच्छौरिः स्मयमानमुखाऽम्बुजः ॥
पीताऽम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥ २ ॥

तासामिति ॥ मया ततमिदं सर्वं जगदव्यक्तमूर्तिनेत्युक्तस्वरूपेण तावत्कालं स्थितः पुनस्तदभीष्टो वासुदेवात्मना आविर्भूतः। एवं दुःखनिवृत्त्यनुकूलं शौर्य्यं प्रकटनीयं, सर्वदुःखनिरासाय यदुवंशेऽवतीर्णत्वात् । स्वापराधशङ्कया ग्लायमानमानसास्तास्तोषयितुं स्मयमानं स्मितयुक्तं मुखपद्मं यस्य सः । तथाच भवतीनां विरहवैक्लव्यदर्शनार्थमहं तिरोहितो, न तु किञ्चिद्दोषं मनसि निधायातो यथोक्तवैक्लव्यमवलोक्यातिप्रसन्नोऽहमिति सूचयन्निवेत्यर्थः तत्तोषोत्पादकं तत्स्वरूपं चाह ॥ पीताम्बरधरः लक्ष्म्या सह रमणयोग्येन वैकुण्ठस्वरूपेण । अत एव स्रग्वी ब्रह्मणा लक्ष्म्या वा समर्पितया मालया अलङ्कृतः । तत्रापि केवलकरुणयैवाऽऽविर्भूतो, न तु कामकृताऽऽकर्षणेनेति बोधनायाह ॥ साक्षाद् यो मन्मथमन्मथस्तस्य चैवम्भूतस्य नास्ति कामवश्यतासम्भावनेति भावः ॥ अनभिज्ञापक्षे, दुःखितः शुकः, क्षत्रियजातित्वात्तासु प्रेमभराक्रान्तासु शौर्य्यं प्रकटितवानिति द्योतयितुं शौरिरित्युक्तवान् । अत एव दुःखितास्वपि तासु स्मयमानमुखाम्बुजस्तत्रापि यः कामाधिष्ठातृदेवस्तस्यापि मन्मथः स्वस्मिन्मनःसक्तिकरः । तद्दशासु हासानौचित्यमभिप्रेत्य हाससंकोचार्थं मुखाग्रे हस्तेन पीताम्बरधरः स्रग्वी वनमालया शोभमानः साक्षान्मन्मथमन्मथ इति॥ तासां तादृशस्यापि विरहदुःखस्य विस्मरणार्थं तादृश इति भावः ॥ मानिनीपक्षे, शौरिरपि तत्प्रेमपराधीनत्वादाविरभूत् । स्मयमानमुखाम्बुजः । अहो हासार्थं मयेदमनुष्ठितमतः कामो न

विधेय इति सूचनार्थं तथाभूतः । अन्तस्तुष्यद्बहिर्विरहाद् संतप्त एवेति भावः । अत एवापराधक्षमापनार्थं स्कन्धाभ्यां पुरोलम्बिनीकृत्य बद्धहस्ताभ्यां पीताऽम्बरधरः । युष्मत्परिधापितामेव मालां धारयन् । युष्मान् स्मरन्नेव क्वचिदेकान्ते विकलिचित्त एवाहं स्थितो, न तु कयाचिद्रममाण इत्यम्लानपुष्पां मालामवलोक्य प्रतीयतामिति सूचयन्निवेति भावः । ननु तथापि तासां कोपनिवृत्तिः कथं जातेत्याशङ्क्याह ॥ साक्षादिति ॥ २ ॥

ततः किं वृत्तमित्यपेक्षायामाह ।

तं विलोक्यागतं प्रेष्टं प्रीत्युत्फुल्लदृशोऽबलाः ॥
उत्तस्थुर्युगपत् सर्वास्तन्वः प्राणमिवागतम् ॥ ३ ॥

तथाभूतमागतं विलोक्यं तासां विह्वलतादशायामाविर्भूतत्वाद् तच्छरीरसुगन्धाघ्राणादिना ससंज्ञाः सत्यः, अहो आगतोऽयं प्रेष्ठ इत्यमन्यन्तेति सूचयितुमागतमित्युक्तम् । प्रीत्या विकसितनेत्रपद्माः प्रीतिप्राबल्याद् कोपनिवृत्त्या तादृशा जाता इति भावः । तत्राप्यऽबलास्तत्प्रतीकारबलरहिता यदा विरहेण कृषतां गताः । बलरहिता अपि । यतः, प्रेष्ठम् ॥ तद्दर्शनमात्रेणागतबला इति भावः । सर्वा अपि युगपदेवोत्तस्थुः । आगतं प्राणं प्राप्य तन्वः करचरणादयः शरीरावयवा यथा । यद्वा, त्यक्तान्यनेकानि योगिशरीराणि प्राणं प्राप्य यथा युगपदुत्तिष्ठन्ति तद्वत् । एक एव कृष्णस्तासां प्राण इति बोधनाय, प्राणमित्येकवचनम् ॥ ३ ॥

तत्र युगपदुत्थितानां सर्वासां मध्ये मुख्यानां पृथक्चेष्टितान्याहुः ।

काचित् कराऽम्बुजं शौरेर्जगृहेऽञ्जलिना मुदा ॥

काचिद्दधार तद्बाहुमंसे चन्दनभूषितम् ॥ ४ ॥

काचिदितिं ॥ चन्द्रावली श्यामा शैव्या पद्मा राधा ललिता विशाखा भद्रेत्यष्टौ मुख्यसख्यः । तत्राद्याश्चतस्रः सरलस्वभावत्वाद्दक्षिणाः । उत्तराश्चतस्रः वामस्वभावत्वान्मानिन्यः । अत एव मुनिनाऽपि सरलानां मध्य एकैकस्याश्चेष्टितमर्द्धेनोक्तम् । वामानां मध्ये त्वेकैकस्या एकैकवृत्तेनोक्तम् । तत्रादौ कान्तपराधीनाया दक्षिणाया वृत्तमाह ॥ काचिच्छौरेर्दक्षिणं करकमलम् अञ्जलिना संहतहस्तद्वयेन जग्राह । तत्रापि मुदा परमहर्षेण भ्रमणप्राप्तश्रमं मत्वा स्पर्शौत्कण्ठ्यात् करावलम्बनव्याजेन प्रेम्णा तद्गृहीतवतीत्यर्थः। इयं तु राधाप्रतिस्पर्द्धिनी चन्द्रावलीसंज्ञा । तथाचोक्तं विल्वमङ्गले, राधामोहनमन्दिरादुपगतश्चन्द्रावलीमूचिवान् राधे क्षेममिहेति तस्य वचनं श्रुत्वाऽऽह चन्द्रावली * कं सक्षेममये विमुग्धहृदये कंसः क्व दृष्टस्त्वया राधा क्वेति विलाज्जितो नतमुखः स्मेरो हरिः पातु व इति अथ द्वितीयायाः स्वाधीनकान्ताया दक्षिणायाश्चेष्टितमाह ॥ काचिच्चन्दनलिप्तं विरहतापोपशामकं तस्य प्रेष्ठस्य बाहुं स्कन्धे मुदा दधार । इयं राधासुहृद्भूता श्यामलाख्या सखी ॥ ४ ॥

काचिदञ्जलिना गृह्णात् तन्वी ताम्बूलचर्वितम् ॥
एका तदङ्घ्रिकमलं संतप्ता स्तनयोरधात् ॥ ५ ॥

अथ तृतीयायाः कान्ताधीनाया दक्षिणाया वृत्तमाह ॥ काचिच्छौरेस्ताम्बूलचर्वितं परमादरादञ्जलिना गृहीतवती, न त्वेकेन हस्तेन, यतस्तन्वी कोमलाङ्गी तथा तद्ग्रहणयोग्या इयं चन्द्रावलीसुहृद्भूता शैव्याभिधा सखी। अथैवंविधाया एव चतुर्थ्या वृत्तमाह॥ एका तस्य वामभुजेन श्यामलाख्यां सखीमवलम्ब्य तिष्ठतः प्रेष्ठस्य

दक्षिणमङ्घ्रिसरोरुहं स्वयमुपविष्टा सती स्तनयोरधारयत् संतप्ता । इयमपि चन्द्रावलीसुहृद्भूता पद्माख्या सखी ॥ ५ ॥

अथ वामासु प्रथमाया अतिवामायाः मखरायाः स्वाधीनकान्ताया वृत्तमाह ।

एका भ्रुकुटिमाबध्य प्रेमसंरम्भविह्वला ॥
घ्नतीवैक्षत् कटाक्षेपैः संदष्टदशनच्छदा ॥ ६ ॥

एका भ्रुकुटिमाबध्य भ्रुवौ कुटिलीकृत्य प्रेमसंरम्भेण प्रणयकोपावेशेन विह्वला सती संदष्टाधरोष्ठा भूत्वा, कटाः कटाक्षास्तैर्य आक्षेपाः परिभावास्तैस्ताडयन्तीवैक्षत । इष्टेऽपि गर्वमानाभ्यां बिब्बोकः स्यादनादरः॥इत्युक्तलक्षणो बिब्बोकाख्योऽयमनुभावः । सर्वाः परित्यज्य या नीता पश्चात् त्यक्ता च । सेयं श्रीराधाख्या मुख्या सखी गोपालतापिन्यां गान्धर्वीति नाम्ना ख्याता ॥ ६ ॥

अथ द्वितीयायाः मखरायाः स्वाधीनकान्ताया वामाया वृत्तमाह ।

अपराऽनिमिषद्दृग्भ्यां जुषाणा तन्मुखाऽम्बुजम् ॥
आपीतमपि नातृप्यत् सन्तस्तच्चरणं यथा ॥ ७ ॥

अपरा अनिमिषद्दृग्भ्याम् अनिमीलिताभ्यां दृग्भ्याम् अलिस्थानापन्नाभ्यां तत्रापि क्षरणशङ्कया अनिमिषिताभ्यां तस्य प्रेष्ठस्य मुखाऽम्बुजं तत्रत्यलावण्यामृतम् आसमन्तात् पीतमपि जुषाणा अत्रैवागमनं करिष्यतीति मानवशात् स्वस्थान एव स्थित्वा सेवमाना नातृप्यत् उत्कण्ठातिशयादलंबुद्धिं न कृतवती । सत्रानुरूपदृष्टान्तमाह ॥ यथा ॥ ७ ॥

अथ तृतीयाया मृद्व्याः स्वाधीनकान्ताया वामायाश्चरितमाह ।

तं काचिन्नेत्ररन्ध्रेण हृदिकृत्य निमील्य च ॥

पुलकाङ्ग्युपगूह्यास्ते योगीवानन्दसंप्लुता॥८॥

तं प्रेष्ठं नेत्ररन्ध्रेण हृदिकृत्य हृदयं नीत्वा प्रवेशनीयरूपस्यै-कत्वाद्रन्ध्रेणेत्येकवचनम् । तन्निःसरणभयान्नेत्रे निमील्य च त-मन्तरेवालिङ्ग्य तज्जन्यानन्दमग्ना पुलकाङ्गी रोमाञ्चिततनुरास्ते । अत्रैवागत्यालिङ्गनं विधास्यालीति मानेनैवम्भूता सती स्वस्थान एव स्थिता । यथाऽऽविर्भूतानन्दे निमग्नो योगी समाधावास्ते तद्वदित्यर्थः । इयमपि राधासुहृद्भूता विशाखाऽभिधा सखी । एवं सत्याऽत्राभिहिता, अष्टमी तु सरला भद्राख्या विष्णुपुराणेऽभि-ता । काचिदायातमालोक्य गोविन्दमतिहर्षिता * कृष्ण कृष्णेति कृष्णेति प्राह नान्यदुदैरयदिति । चन्द्रावल्यादिनामानि तु स्कान्द-प्रह्लादसंहिताद्वारकामाहात्म्यादावुक्तानि ॥ ८ ॥

अथान्यासां वृत्तमाह ।

सर्वास्ताः केशवालोकपरमोत्सवनिर्वृताः ॥

जहुर्विरहजं तापं प्राज्ञं प्राप्य यथा जनाः ॥ ९ ॥

सर्वास्ता गोप्यः केशवस्य ब्रह्माद्यनुकम्पकस्य तेजोनिधेरव-लोकनाद् यः परमोत्सवस्तेन निर्वृता आनन्दिताः, विरहजन्यं तापं जहुः । यथा प्राज्ञं परमेश्वरं प्राप्य तदीया जनाः । यद्वा प्रा-ज्ञं ब्रह्मज्ञं प्राप्य मोक्षविरहजं तापं मुमुक्षवस्त्यजन्ति । यद्वा प्राज्ञं सौषुप्तं पुरुषं प्राप्य विश्वतैजसावस्था जीवाः ॥ ९ ॥

एवम्भूताभिस्ताभिर्भगवानपि विशेषेण शुशुभ इत्याह ।

ताभिर्विधूतशोकाभिर्भगवानच्युतो वृतः ॥

व्यरोचताधिकं तात पुरुषः शक्तिभिर्यथा ॥१०॥

ताभिरिति ॥ भगवान् षड्विधैश्वर्यसंपन्नोऽपि अच्युतः स्व-स्वरूपादानन्दघनादप्रच्युतोऽपि विधूतशोकाभिस्ताभिरधिकं तत्रापि विशेषणारोचत पुरुषः स्वयमेव परमात्मा सत्त्वादिभिः शक्तिभि-र्यथा। यद्वा उपासको ज्ञानबलवीर्यादिभिर्यथा।अथवा पुरुषः सङ्घा-ताभिमानी सर्वेन्द्रियशक्तिभिर्यथा तथा स्वस्वरूपानतिरिक्ताभिः स्वशक्तिरूपाभिः। याभिर्गोपाङ्गनाभिर्भगवतः क्रीडानुकरणं संवृ-त्तमिति भावः। पुत्रवदनुकम्प्यत्वात् तवाग्रे मयेदं रहस्यं प्रकाशि-तमिति तातसंबोधनाशयः। प्रमदाशतकोटिभिराकुलित इत्यागमो-क्तेरसंख्याता गोप्यस्तासां मध्ये, षोडशैव सहस्राणि गोप्यस्तत्र समागताः ※ चन्द्ररूपी मतः कृष्णः कलारूपास्तु ता मताः ※ एकैकशस्ताः संभिन्नाः सहस्रेण पृथक् पृथगिति स्कन्दोक्ताः षोड-शसहस्राणि मुख्यास्तासामपि मध्ये सहस्रसंख्याका मुख्यास्तत्रा-प्युक्ता अष्टौ मुख्यतरास्तत्रापि श्रीराधाचन्द्रावल्यौ मुख्ये। तत्रापि श्रीराधा परममुख्यतमेति विवेकः॥

तासामित्यत आरभ्य निवृत्तिपक्षे, तासां श्रुतीनां संबन्धी शौरिः शूरः संसारविजयं कर्त्तुं प्रवृत्तोऽधिकारिदेहस्तत्र स्थितं वसु-देवशब्दाभिधेयमन्तःकरणं, तत्रैवोपलब्धियोग्यत्वाद्वासुदेव औपनि-षदः परमात्मा। तत्रैव सर्वसाधनसंपन्नाधिकार्यन्तःकरणलक्षणे धन एवाविरभूत्। अहं ब्रह्मास्मीति साक्षात्प्रकटितः। आत्म-न्येवात्मानं पश्येदित्यादिश्रुतेः। तत्रापि सगुणः स्मयमानमु-खो म्बुजत्वादिरूपेणानिशं ध्यातः। स एव साक्षान्मन्मथश्चासौ मन्मथश्च सर्ववृत्तिसाक्षिरूपः। प्रतिबोधविदितं मतमिति श्रुतेः। तं तथाभूतमागतमधिकारिचेतसि आविर्भूतमवलोक्याबलाः साक्षात्त-त्प्रकाशनबलरहिताः श्रुतयः स्वानुकूलाऽधिकारिणि प्रीत्योत्फुल्ला विकासं प्राप्ता दृग् ज्ञानं यासाम्। अधिकारिणे प्रकाशिततत्त्वार्थ-

ज्ञानाः सर्वाः काण्डत्रयात्मिकाः युगपदुत्तस्थुः । यथाभूतस्वार्थाभिमुखा जाता इत्यर्थः । काचिदित्यादौ जातावेकवचनम् । काश्चिद् भगवदवयवभूतत्तद्देवयजनप्रतिपादिका इति कर्मकाण्डश्रुतीनां तात्पर्यं सूचितवान् । काश्चित्तदुपभुक्तनैवेद्यादिग्रहणपरास्तदङ्घ्रिध्यानप्रतिपादिकाश्चेत्युपासनाकाण्डश्रुतीनां तात्पर्यं ध्वनितवान् । काश्चिन्मुख्या, नेह नानास्ति किञ्चन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीत्याद्या भेददर्शनपरिक्रुद्धाः । काश्चित्तत्त्वमस्यहं ब्रह्मास्मीत्याद्याः पदार्थद्वयाऽभेदपराः, काश्चिदात्मानमेव लोकमुपासीतेत्याद्या निर्गुणोपासनपरा इति ज्ञानकाण्डश्रुतीनां तात्पर्यं सूचितवान् । सर्वा अपि ताः केशवस्य परमात्मनो योऽधिकारिण आलोकः साक्षात्कारस्तेन परमोत्सवस्तेन निर्वृता अहो अयं स्वात्मभूतपरमात्मानं न जानातीति तदीयविरहाज्जातो यस्तापस्तज्जहुः । ततश्च विधूतः शोको याभिः प्रसन्नाभिरिति वा, ताभिः श्रुतिभिर्वृतः सगुणो निर्गुणश्चाधिकं व्यरोचत सच्चिदानन्दस्वरूपतया प्रतिपाद्यः सन् सम्यगशोभतेत्यर्थः ॥ १० ॥

ताः समादाय कालिन्द्या निर्विश्य पुलिनं विभुः ॥
विकसत्कुन्दमन्दारसुरभ्यनिलषट्पदम् ॥ ११ ॥
शरच्चन्द्रांशुसन्दोहध्वस्तदोषातमः शिवम् ॥
कृष्णाया हस्ततरलाञ्चितकोमलवालुकम् ॥ १२ ॥
तद्दर्शनाह्लादविधूतहृद्रुजो
मनोरथान्तं श्रुतयो यथा ययुः ॥
स्वैरुत्तरीयैः कुचकुङ्कुमाङ्कितै-
रचीक्लृपन्नासनमात्मबन्धवे ॥ १३ ॥

ततः काश्चित् प्रियालापैः काश्चिद् भ्रूभङ्गवीक्षितैः * निन्ये-ऽनुनयमन्याश्च करस्पर्शेन माधव इति विष्णुपुराणोक्तहेतुभिर्वि-धूतशोकास्ताः सम्यग् हस्तधारणप्रियालापादिसमीचीनप्रकारेणा-दाय सह गृहीत्वा रासक्रीडायोग्यं कालिन्द्याः पुलिनं निर्विश्य ताभिर्व्यरोचनेत्यनुभवन्धनीयम् । कलिं कलहं द्यति खण्डयतीति कलिन्दस्तस्याः कन्या कालिन्दी । तथाच तत्पुलिने गोपीनां पर-स्परं मया च कलहो न भविष्यतीति तत्र नयनस्याशयः । विभु-र्व्यापकत्वात् सर्वासामैकमत्यसंपादकः । तत्र नयने समर्थ इति वा । पुलिनस्य रासयोग्यतामाविष्करोति ॥ विकसत्कुन्दमन्दारैः सुर-भिर्यो वायुस्तस्मात् षट्पदा यत्र ॥

पुनश्च शरत्कालीनचन्द्रकिरणानां समूहैर्ध्वस्तं दोषाया रा-त्र्यास्तमो यत्र तेन दिवसतुल्यकालत्वादत्यन्तशोभनम् । पुनश्च कृष्णसदृशवर्णनामधेयाया भगवत्सख्या यमुनाया भगवद्रमणार्थं पुलिनभूमिं संस्कृत्य स्थिताया हस्तरूपैस्तरङ्गैराचिता आस्तृता कोमलवालुका यत्र । तरङ्गैः पुलिनभूमेः समतासम्पादनात्तेषां हस्तत्वनिरूपणम् । तथाच जलसुगन्धपुष्पवायुनादैः परितो वेष्टितं सुप्रकाशवत् शीतलं समं चेति बोधितम् ॥ अथ गोपीनां कृत्यमाह ।

तस्य क्रीडोत्सुकस्य विभोर्दर्शनेन यो ह्लादस्तेन नाशिताः सर्वाधयो यासां ताः मनोरथस्यान्तं पूर्णकामतां ययुः । यथा श्रुतयः परमात्मनि समन्वयं प्राप्य कृतकृत्या भवन्ति तद्वत् । ततः सुस्थिर-चित्ताः सत्यः कुचकुङ्कुमेन स्वेदार्द्रेणाङ्कितैः स्वीयैरुत्तरीयैरासनं कृतवत्यः । यत आत्मबन्धवे, अभिज्ञापक्षे, अन्तर्यामिणे, तदुत्तरपक्ष-योः स्वप्रेष्ठाय । तथाच ईदृशोत्तरीयैस्तदासननिर्माणमुचितमेवेति भावः । एतेनाहो पूर्वमुपदेशं कर्तुं प्रवृत्तोऽस्माभिर्निवारित आसीद् कदाचिद् दुःखादेव तिरोहितः स्यादतोऽधुना प्रथमं व्यासासनो-

पर्य्युपनेश्यैतन्मुखारविन्दादुपदेश एव ग्राह्य इत्याशयेनैवं कर्तुं प्रवृत्ता इति ध्वनितम् ॥

निवृत्तिपक्षे, ताः श्रुतीः स्वप्रतिपादकत्वेन समादाय कालिन्द्या मायायास्तीरं शुद्धान्तःकरणं निर्विश्य, विभुर्व्यरोचत विकासं प्राप्तः । कुन्दमन्दारादिस्थानीयैर्यमनियमादिभिः सुरभिर्योऽनिलः निरुद्धः प्राणवायुस्तेन निरुद्धं षट्पदं षड्वर्गो यत्र। पुनश्च शरत्कालस्थानीयेन निष्कामभगवदाराधनलक्षणेन कर्मणोदितो यो विवेकाख्यश्चन्द्रस्तस्य विचारलक्षणानामंशूनां सन्दोहेन समूहेन ध्वस्तं रागद्वेषादिदोषलक्षणमासमन्ताद् तमो यस्मिन् । अत एव शिवं कल्याणरूपं पुनश्च कृष्णाया अविद्याया हस्तैर्हस्तलक्षणैस्तरङ्गैरात्मानात्माज्ञानभेदैरचिता असंस्पृष्टा कोमला वालुकास्थानीया कृतयो यस्मिँस्तस्य प्रत्यगभिन्नस्य परमात्मनो दर्शनेन य आह्लादस्तेन विधूतास्तद्वादिकल्पिता विपरीताभिप्रायरूपा हृदयरोगा यासां ताः श्रुतयो मनोरथस्याखण्डैकरसरूपपरमात्मप्रतिपादनाभिलाषस्यान्तं समाप्तिं ययुः । कुचकुङ्कुमेन कर्मोपासनाकाण्डबोधितकर्मोपासनाद्यनुष्ठानासादितपरमात्मानुरागेणाङ्कितैः । स्वीयैरुत्तरीयैः स्वजन्यप्रत्ययैरात्मबन्धवे औपनिषदाय परब्रह्मणे आसनमभिव्यक्तिस्थानं कृतवत्यः ॥ ११ ॥ १२ ॥ १३ ॥

तत्रोपविष्टो भगवान् स ईश्वरो
योगीश्वरान्तर्हृदि कल्पितासनः ॥
चकास गोपीपरिषद्गतोऽर्चित-
स्त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत् ॥ १४ ॥

स भगवानपि ईश्वरः स्वतन्त्रोऽपि तत्र ताभिरुत्तरीयैर्निर्मित

आसने उपविष्टः, किञ्च, योगीश्वरैर्ब्रह्मादिभिरन्तर्हृदि एकाग्रे मनसि कल्पितमासनं यस्य तथाभूतोऽपि, यद्यप्येवं तथापि गोपीपरिषद्गतः तत्सभापातिस्ताभिस्ताम्बूलनर्मस्मितादिना अर्चितः सन् अधिकं शुशुभे । यतस्त्रैलोक्यस्य चतुर्दशभुवनस्य या सौन्दर्य्यलक्ष्मी तस्या एव मुख्यं पदमायतनं पुनर्विग्रहं दधत् प्रकटयन् सन् यद्वा गोपीपरिषद्गतत्वादिरूपेण योगीश्वरान्तर्हृदि कल्पितासनः । अत्रोत्तरीयैरासनस्य निर्माणेऽपि तदन्तस्तादृशवस्त्रान्तरस्य सत्त्वात्, तत्क्षण एव भगवत्कृपया दिव्योत्तरीयोद्भवसम्भवाच्च न तासां रसाभासकरी नग्नता शङ्क्या ॥

निवृत्तिपक्षे, तत्र योगीश्वरान्तर्हृदि कल्पितासनो भगवानीश्वरः स परमात्मा गोपीनां गोपस्य स्वसत्तास्फूर्तिप्रदानेन सर्वपालकस्य देवस्यावबोधनपराणां श्रुतीनां समवायस्तत्प्रतिपाद्यतया अर्चितः निखिलप्रपञ्चशोभाया एवमधिष्ठानभूतं वपुर्दधत् ॥१४॥

एवं यथोक्तासनोपर्य्युपविष्टं भगवन्तं किञ्चित् पप्रच्छुरित्याह ।

सभाजयित्वा तमनङ्गदीपनं
सहासलीलेक्षणविभ्रमभ्रुवा ॥
संस्पर्शनेनाङ्ककृताङ्घ्रिहस्तयोः
संस्तुत्य ईषत्कुपिता बभाषिरे ॥ १५ ॥

सभाजयित्वेति ॥ तं सम्मान्य ईषत्कुपितास्ता बभाषिरे । यतः कामं नानाविलासैर्दीपयतीति अनङ्गदीपनम् । केन सम्मान्येत्यपेक्षायामाह ॥ हासलीलापूर्वकं यदीक्षणं तेन विभ्रमो विलासो यस्याः, तया भ्रुवा । पुनश्चाङ्कीकृतयोः स्वस्वाङ्के गृहीतयोरङ्घ्रिहस्तयोः संस्पर्शनेन । ततश्च संस्तुत्य भवानेवास्माकं गतिः

परमानन्दप्रद इत्येवमादिवचनैः स्तुत्वा बभाषिरे ॥

मानिनीपक्षे, स्वहासलीलेक्षणविभ्रमभ्रुवा अनङ्गस्य दीपनं यस्य तं, तेनैव स्वाङ्के कृतयोरङ्घ्रिहस्तयोः संस्पर्शनेन संस्तुत्याहो तव करचरणकमलयोरपूर्वं शैत्यं यत्संस्पर्शाद्स्मत्तापोऽपि निवर्त्तते । तस्मात् सम्प्रति तापानभिज्ञश्चन्द्रवत् सर्वदा सख्येवासीति व्याजेन स्तुत्वा तद्दर्शनादिना कोपस्य कुण्ठितत्वादीषत्कुपिता बभाषिरे ॥

निवृत्तिपक्षे, अनङ्गस्य सवासनस्य सकारणस्य कामादेर्दीपनम् । तेषामेवानुकम्पार्थमहमज्ञानजं तमः * नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वतेति । सहासलीलापूर्वकेणेक्षणेनासंख्यातजगदुत्पादकेन तत्सहितेन विभ्रमवत्या भ्रुवा तत्प्रलयहेतुभूतया उपलक्षितम् । अङ्घ्रिहस्तयोरित्युपलक्षणम् । स्वस्मिन् प्रतिपाद्यानामसंख्यातावयवानां संस्पर्शेन दूरतः सहस्रशीर्षा इत्यादिना प्रतिपादनेन संस्तुत्य । अहो अस्माकमप्यगम्य इत्येवमीषत्कुपिता बभाषिरे । तथाचैवंविधानां श्रुतीनां कथमगम्यः परमात्मेत्यधिकारिचेतसि शङ्का समुत्थितेति भावः ॥ १५ ॥

अहो विज्ञातमस्माभिर्भवत उपदेशकरणे महत्युत्कण्ठा वर्ततेऽतः सम्प्रत्यस्मत्प्रश्नानुसारेण यथेष्टमुपदिश्य तेन च प्रसन्नो भवेति द्योतयन्त्यस्तस्याकृतज्ञतां तन्मुखेनैवोद्घाटयितुकामा गूढाऽभिप्राया लोकवृत्तान्तमिव पृच्छन्ति ॥

गोप्य ऊचुः ॥

भजतोऽनुभजन्त्येके एक एतद्विपर्ययम् ॥
नोभयाँश्च भजन्त्येक एतन्नो ब्रूहि साधु भोः ॥ १६ ॥

भजत इति ॥ भजतः प्राणिनः, अनु पश्चात् केचिद् भजना-

ऽनुसारेण भजन्ति । एके त्वेतद्विपर्ययं यथा भवति तथा । अ-भजतोऽपि तद्भजनानपेक्षा भजन्ति । एके तु उभयान् भजतो-ऽभजतश्च न भजन्ति । एतत्पक्षत्रयमपि सोदाहरणं साधु सम्यक् नो ब्रूहि । सावधानतयैदुत्तरं वक्तव्यमिति द्योतयितुं, भो इति सम्बोधनम् ॥ १६ ॥

तासामभिप्रायमवगत्य क्रमेणोत्तरमाह ।

श्रीभगवानुवाच ॥

मिथो भजन्ति ये सख्यः स्वार्थैकान्तोद्यमा हि ते ॥
न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा ॥ १७ ॥

मिथ इति ॥ ये मिथोऽन्योऽन्यं परस्परोपकाराकाङ्क्षया भज-न्ति ते स्वार्थ एवैकान्तत उद्यमो येषान्तथाभूताः । न ते कञ्चिदन्यं भजन्ति किन्तु स्वात्मानमेव दृष्टफलार्थित्वात् प्रसिद्धं चेदम् । पशवश्चैतदुदाहरणभूता, अतो नाधिकमत्र वक्तव्यमिति द्योतनाय हिशब्दः । तत्र सत्कीर्तिकरं सौहृदम्, निर्व्याजेन हितैषित्वं ना-स्ति । नापि धर्मो दृष्टोद्देशात् । यद्वा, नात्रैवंविधे भजने सौहृदं धर्मः, किन्तु मित्रतालक्षणो धर्मः । हि यतस्तद्भजनं स्वार्थं पशूनां परस्परकण्डूयनसदृशं नान्यथा । स्वार्थाभावे निवर्तते । हे सख्य इति संबोधयन् युष्माकं मम च नैवंविधं मित्रत्वमपि तु निरुपाधिकं सख्यमिति द्योतयति ॥ १७ ॥

द्वितीयप्रश्नस्योत्तरमाह ।

भजन्त्यभजतो ये वै करुणाः पितरौ यथा ॥
धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः ॥ १८ ॥

भजन्तीति ॥ ये अभजतोऽपि भजन्ति ते द्विधा—संबन्धराहि-

तास्तद्भिन्नाश्च । तत्राद्याः करुणा दयालवो यथा, द्वितीयाः पितरौ यथा । अत्र प्रथमपक्षे निरपवादो धर्मो, निरुपाधिकत्वाद्नश्वरः । द्वितीयपक्षे निरपवादं सौहृदम् । यद्वा पक्षद्वये निरपवादो धर्मः सौहृदं च । यद्वा अत्र सौहृदरूपो धर्मो निरपवादः । सुमध्यमा इति संबोधयन् करुणायाः संबन्धस्य च विषयभूता भवत्य इति सूचयति । श्लेषेण शोभनो मध्यमप्रश्नो यासां ताः । सुष्ठुमध्यमपक्षोदाहरणभूता भवत्य इति वा ज्ञापयति ॥ १८ ॥

तृतीयप्रश्नस्योत्तरमाह ।

भजतोऽपि न वै केचिद्भजन्त्यभजतः कुतः ॥
आत्मारामाश्चाप्तकामा अकृतज्ञा गुरुद्रुहः ॥ १९ ॥

भजत इति ॥ ते चतुर्विधाः - केचिदात्मारामा अन्तर्मुखाः, केचिद्बहिर्मुखा अपि पूर्णत्वादाप्तकामा उपकारापेक्षारहिताः । केचिदकृतज्ञा उपकारानपकारज्ञानविधुरा अत्यन्तमूढाः । केचिद् उपकर्ता गुरुः स्मृत इत्युक्त्या गुर्वादय उपकारिणस्तान् द्रुह्यन्तीति ते । तथाच तदुपकारं न जानन्ति प्रत्युतापकारं प्रकुर्वन्ति ते अतिकठिना इत्यर्थः ॥

निवृत्तिपक्षे समानार्थकम् ॥ १९ ॥

एतेषु मध्ये भवान् क इत्यभिज्ञानापेक्षायाम्, अहो स्वमुखेनैव चरमकोटिप्रविष्ट इति संतुष्टा अक्षिसंकोचैः परस्परं गूढस्मितमुखीर्मानिनीश्चालक्ष्याह ।

नाहन्तु सख्यो भजतोऽपि जन्तून्
भजाम्यमीषामनुवृत्तिवृत्तये ॥

यथाऽधनो लब्धधने विनष्टे
तच्चिन्तयान्यन्निभृतो न वेद ॥ २० ॥
एवं मदर्थोज्झितलोकवेद-
स्वानां हि वो मय्यनुवृत्तयेऽबलाः ॥
मया परोक्षं भजता तिरोहितं
मासूयितुं मार्हथ तत्प्रियं प्रियाः ॥ २१ ॥
न पारयेऽहं निरवद्यसंयुजां
स्वसाधुकृत्यं विबुधायुषापि वः ॥
या माभजन् दुर्जरगेहशृङ्खलाः
संवृश्च्य तद्वः प्रतियातु साधुना ॥ २२ ॥

नेति ॥ हे सख्यः, अहं तु भजतोऽपि न भजामि । तुशब्देन पक्षान्तरव्यावृत्तिः । तच्चाभजनं नाकृतज्ञत्वादिनिबन्धनं, किन्तु तदनुवृत्तिधारेच्छानिबन्धनमित्याशयेनाह॥अमीषां भजतां जन्तूनाम् अनुवृत्तये निरन्तरध्यानप्रवृत्त्यर्थं तान्न भजामि । जन्तुमात्रं प्रति यदैवं तदा सखीर्युष्माकं प्रति किं वक्तव्यमिति संबोधनाशयः । तथाच कारुणिकः परमसुहृदहं, न त्वकृतज्ञ इति भावः । एतत् सदृष्टान्तमाह ॥ यथेति ॥ यथा अधनो दरिद्रो दैववशाल्लब्धधनो जातः पुनश्च तस्मिँल्लब्धे धने विनष्टे सति तस्य धनस्यैव चिन्तया निभृतः पूर्णः, अन्यत् क्षुत्पिपासादिकमपि न वेद ॥

एवं वो युष्माकं मय्यनुवृत्तये परोक्षमदर्शनं यथा लोकादित्यागे दुर्बला इति तदाशयः । मया तिरोहितं तिरोधाय स्थितम् । यतो मदर्थोज्झितलोकवेदस्वानां मदर्थमेव त्यक्तो लोको युक्तायुक्ताप्रतीक्षणाद्, वेदश्च धर्म्माधर्म्मानादरात्, स्वज्ञातयश्च स्नेहत्यागाद् याभिस्तासाम् ।

न तु भवतीष्ववलासु बलं प्रकटयितुं मया तिरोहितमिति सूचनार्थं संबोधनम् । हे अबलाः । भवत्सः, तथा भजता युष्मत्प्रेमाकुलेन, अत एव तत् तस्मात् प्रियं मासूयितुं दोषारोपेण द्रष्टुं यूयं मा अर्हथ, न योग्याः स्थ । यथाहं युष्माकं प्रियस्तथैव यूयमपि प्रियाः । अत्रार्थे संशयो न कर्तव्य इत्याशयेन संबोधयति ॥ हे प्रिया इति ॥ मानिनीपक्षे, यद्यप्येवं तथापि तादृशं प्रियं मां प्रिया यूयमसूयितुं मार्हथेति मा, प्रियस्य प्रियासु तथा प्रवृत्तेरनुचितत्वादिति भावः ॥

आस्तामिदं परमार्थन्तु शृणुतेत्याह ।

नेति ॥ काममयत्वेन प्रतीयमानाऽपि वस्तुतो निर्मलप्रेममयत्वेन निरवद्या निर्दोषा संयुग् मद्विषयकचित्तैकाग्रता अङ्गसङ्गमो वा यासां तासां वः स्वीयसमीचीनप्रत्युपकारकृत्यं विबुधायुषा देवायुषा ब्रह्मायुषा वा विबुधानां ज्ञानिनां मतेनायुषाऽपि न पारये, प्रत्युत हेतुर्लोकवेदमर्यादाः विवृश्च्य निःशेषं छित्त्वा मा मामभजन् शरीराद्यर्पणं कृतवत्यः । तथाचाभिज्ञापक्षे, भजनस्य जीवधर्मत्वात्तादृशभजनस्य मयि दुर्लभत्वान्न पारये । अनभिज्ञापक्षे मम चित्तस्य पितृभ्रातृबन्ध्वादिष्वपि स्निग्धत्वात् न पारये ॥ मानिनीपक्षे, मम चित्तं बह्वीषु प्रेमयुक्तं, न त्वनन्यतां गतमतो न पारये । तत्तस्माद्युष्माकमेव साधुना साधुत्वेन प्रतियातु प्रत्युपकृतं भवतु । तथाच युष्मत्सौशील्येनैव ममाऽऽनृण्यं, न तु मत्कृतेन प्रत्युपकारेणेति भावः ॥

निवृत्तिपक्षे, भजतोऽपि जन्तूनहं न भजामि, विषयतया तेषां प्रकटो न भवामि । किमर्थमिति चेत्तत्राह-अनुवृत्तये, प्रतिबोधविदितत्वसिद्धये । एतत् सदृष्टान्तमाह ॥ यथेति ॥ एवं वां युष्माकं मय्यनुवृत्तये मदर्थोज्झितलोकवेदस्वानां विवेकिनां परोक्षं भजता वर्तमानेन मया परोक्षतया लब्धेनापि मया तिरोहितम् अन्तर्द्धानेन स्थितम् ।

तथाच यावद् ब्रह्मसाक्षात्कारो न भवति तावच्छ्रवणाद्यावृत्तिः कर्त्तव्या परोक्षतया भातस्य तिरोहितत्वात्। तथाच भगवतो बादरायणस्य सूत्रम्—आवृत्तिरसकृदुपदेशादितीति भावः। तस्माद् प्रियाः प्रतिपादकत्वेनाभिमेता यूयं प्रियं प्रतिपादकत्वेन संमतं माम्। अहो अस्मद्विचारपरस्य झटिति प्रत्यक्षतया कुतो न भातीत्यऽसूयितुं मार्हथेत्यर्थः॥

आस्तामिदं जीवरूपेण बद्धस्य मम बन्धननिवारकाणां युष्माककमुपकारस्य प्रत्युपकारं त्वहं न पश्यामीत्याह॥ नेति॥ निरवद्ये कर्तृत्वादिदोषासंस्पृष्टे मयि संयुजां तात्पर्येण संगतानां वः स्वसाधुकृत्यं विबुधायुषाऽपि न पारये, यतो भवत्यो दुर्जरा देहगेहादिशृङ्खला मदीयाः संवृश्च्य माभजन्, तत्तस्माद् युष्मत्साधुकृत्यं वः साधुत्वेन प्रतियातु, श्रुतिकृतोपकारस्य प्रत्युपकारः केनापि कर्त्तुमशक्य इत्यर्थः॥ २०॥ २१॥ २२॥

इति श्रीधनपतिमिश्रकृतौ गूढार्थदीपिकायां द्वात्रिंशत्तमोऽध्यायः॥

अथ त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

त्रयस्त्रिंशे ततोऽध्याये हरेर्लीला निरूप्यते ॥
वने जले च बहुधा राजप्रश्नोत्तरं तथा ॥ १ ॥

अथ रासोत्सवं वर्णयिष्यन्नादौ भगवतोक्तानुनयवाक्येन ताः सम्यक् प्रसन्नाः सम्पन्ना इत्याह ॥

श्रीशुक उवाच ॥

इत्थं भगवतो गोप्यः श्रुत्वा वाचः सुपेशलाः ॥
जहुर्विरहजं तापं तदङ्गोपचिताशिषः ॥ १ ॥

इत्थं पूर्वोक्तप्रकारेण भगवतः पूर्णस्याहं भवतीनामधमर्ण इत्येवंरूपाः, गोप्यः—भगवता स्वीयत्वेन स्वीकृता वयं न तु त्यक्ता इति निश्चयवत्यः, तादृशाधिकाराऽयोग्या अपि वयं भगवतैवमनुनीता इति मनसि विचारयन्त्य इति वा, वाचः श्रुत्वा विरहजं तापं जहुः । यतो भगवद्वाचः सुपेशला अतिमनोहराः । आपातरम्यतानिरासाय सुपदं प्रयुक्तम् । यतश्चोपचिताशिषः लब्धमनोरथाः । यद्वा तस्य भगवतोऽङ्गेन वपुषा करणाद्यङ्गैर्वा उपचिताः समृद्धा आशिषो यासां ताः । यद्यपि पूर्वं तापत्याग उक्तस्तथापि तादृशवाक्श्रवणादिना पुनर्विरहशङ्कानवगमाद्विरहजन्यतापत्यागः पुनरुक्तः । तासां गोपीनामङ्गस्पर्शादिना लब्धसुखा इति वा । एतेन प्रश्नोत्तरसमाप्तौ मानशान्त्या तदा आलिङ्गनचुम्बनादिविलासा आसन्निति सूचितम् ॥

निवृत्तिपक्षे, अथ विद्वच्चेतसि परमात्मनः श्रुतिभिः रमणं वक्तुमुपक्रमते ॥ इत्थमिति ॥ भगवद्भावं प्राप्तस्य प्रत्यगात्मनो य-

श्रोक्ताः सुपेशला वाचः श्रुत्वा लब्धमनोरथास्तदा, हे राजन्, तच्छ्वादिभिः श्रुतिषु प्रत्यगभिन्नपरमात्मप्रतिपादनं नास्तीत्यादिना प्रतिपादिततद्विरहाज्जातं तापं जहुः ॥ १ ॥

तत्रारभत गोविन्दो रासक्रीडामनुव्रतैः ॥
स्त्रीरत्नैरन्वितः प्रीतैरन्योन्याबद्धबाहुभिः ॥ २ ॥

तत्र ताभिः सहैकमत्ये सति, तस्मिन् प्रदेश इति वा गोविन्दः स्त्रीरत्नैः समन्वितो रासक्रीडामारभत। नटैर्गृहीतकण्ठानामन्योन्यान्तःकराश्रियाम् * नर्त्तकीनां भवेद्रासो मण्डलीभूय नर्तनमित्युक्तं रासलक्षणम् । रसानां समूहो रासस्तन्मयी क्रीडेति तद्व्युत्पत्तिः । एतदर्थमेव स्वीकृतगवेन्द्राभिषेक इति सूचयितुं गोविन्द इत्युक्तम् । भगवता सार्द्धं रासक्रीडायोग्यता तासामेवासीदिति सूचनाय रत्नैरित्युक्तम्। तत्राप्यनुव्रतैस्तत्रापि नान्यानुरोधेन, किन्तु प्रीतैः प्रीतिपूर्वकमुत्कटोत्कण्ठावद्भिः । कथमित्यपेक्षायामन्योन्यं वा बद्धाः सङ्ग्रथिता बाहवो याभिस्तैः। तथाचान्योन्याबद्धबाहूनां भगवता गृहीतकण्ठानां नर्तनं सम्प्रवृत्तमित्यर्थः ॥

निवृत्तिपक्षे, तत्र श्रुतीनामैकमत्ये सति विद्वदन्तःकरण इति वा । गोविन्दः श्रुत्यैकगम्यः परमात्मा श्रुतिलक्षणस्त्रीरत्नैः श्रुतिमस्तकैरन्वितः प्रतिपाद्यप्रतिपादकसम्बन्धवान् । रसो वै स इति श्रुत्या रस आनन्दरूपः परमात्मा तदीयां तदाविर्भावकरीं क्रीडां श्रुतिप्रतिपाद्यतालक्षणां लीलामारभत। तत्र कापि श्रुतिरद्वितीयब्रह्मानानुस्मृता न स्थिता इत्याशयेनाह ॥ अनुव्रतैः॥ तत्रापि न क्लिष्टकल्पनया तत्र नीता इत्याशयेनाह॥ प्रीतैरिति ॥ तत्रापि परस्परविरोधराहित्येनेत्याशयेनाह ॥अन्योन्येति॥ परस्परमाबद्धा अविरोधं प्राप्ता बाहुस्थानीया वाक्यार्था येषां तैः ॥ २ ॥

चतुर्वर्णाधिकेन सार्द्धेन तत्साहित्यं दर्शयति ।

रासोत्सवः सम्प्रवृत्तो गोपीमण्डलमण्डितः ॥
योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः ॥ ३ ॥

रासेति ॥ तासां रासक्रीडालक्षण उत्सवो मनोविस्मापकाह्लादरूपः सम्यक् प्रवृत्तः । यथा उत्सवोऽनेकविधैर्ब्राह्मणादिभिर्मण्डितो भवति तथाऽयमुत्सवो गोपीनां बहुविधैर्मण्डलैर्मण्डितः । कथम्भूतानां तासां, कृष्णेन कण्ठे गृहीतानाम् । कथम्भूतेन कृष्णेन द्वयोर्द्वयोर्मध्ये प्रविष्टेन । कृष्णपदेनानवच्छिन्नानन्दसमुद्रे तासां निमग्नता सूचिता । नन्वेकस्य कथमेककालमेवंविधः प्रवेश इत्याशङ्कानिरासायोक्तं योगेश्वरेण ॥ योगः अघटितघटनापटीयसी महामायाशक्तिस्तस्या ईश्वरेण । तथाच तादृशशक्त्या तस्य तथा प्रतीतिरित्याशयेनाह ॥ यं श्रीकृष्णं स्त्रियः स्वनिकटं मन्येरन् । अत्र गोपीद्वयान्तरितः कृष्ण इत्युक्त्या गोप्यर्द्धसंख्यककृष्णमूर्तिसंयुक्तो रासोत्सवः । तेन गोपीसमसंख्याकवन्मूर्तियुक्तेन वक्ष्यमाणेन तेन न पौनरुक्त्यम् । किञ्चात्र न तावत्संख्याकमूर्तिस्वीकारः, किन्त्वेक एवातिलाघवेन तथा नृत्यति स्मात एव, यं मन्येरन्नित्युक्तम् । न तु तथा दृष्टवस इति । इयं च भगवल्लीला परमोत्कृष्टा लक्ष्म्यादीनामपि प्रार्थनीया परमदुर्लभा चेति बोध्यम् । रासोत्सव इत्यारभ्य, कथालङ्कारार्थं पुरञ्जनोपाख्याने नगरीवर्णनवद्रासवर्णनमतो निवृत्तिपक्षविवरणप्रयत्नादुपरम्यते ॥ ३ ॥

प्रविष्टेन गृहीतानां कण्ठे स्वनिकटं स्त्रियः ॥
यं मन्येरन्नभस्तावद्विमानशतसंकुलम् ॥ ४ ॥

तावत् क्षणमेवौत्सुक्याकृष्टचेतसां सस्त्रीकाणां देवानां विमान-

शतैः संव्याप्तं नभ आसीदिति शेषः । स्वर्गसबन्धिनृत्तगीतादिकं तेषां तदानीं तुच्छमभूदिति सूचनाय दिवौकसामित्युक्तम् । रसा॰न्तरव्यग्रतानिरासाय, सदाराणामित्युक्तम् । ननु भगवल्लीलां द्र॰ष्टुमधिकाराभावात् कथं तत्र प्रवृत्तिः इत्याशङ्कानिवृत्त्यर्थमुक्तमौ॰त्सुक्येति । तत्रापि यावत् तेषां दर्शनीयं स्थितं तावदेव तेषां दर्श॰यामास भगवानिति द्रष्टव्यम् ॥ ४ ॥

देवा अपि न केवलं कौतुकद्रष्टार एव बभूवुरपि तु रासक्रीडाप॰रिकरतां ययुरित्याशयेनाह ॥

दिवौकसां सदाराणामौत्सुक्यापहृतात्मनाम् ॥
ततो दुन्दुभयो नेदुर्निपेतुः पुष्पवृष्टयः ॥
जगुर्गन्धर्वपतयः सस्त्रीकास्तद्यशोऽमलम् ॥ ५ ॥

ततस्तदनन्तरं देवैर्वादिता दुन्दुभयो नेदुस्तथा तैरेव क्रियमाणाः रङ्गाधिष्ठानदेवतापूजार्थं स्तरणार्थं च पुष्पवृष्टयो निपेतुः । नानाविधानां पुष्पाणां भिन्ना वृष्टय इति द्योतनाय बहुवचनम् । ततो गन्धर्वपतयो गानाधिकारिमुख्या विश्वावसुप्रमुखा जगुः । भगवान् श्रोष्यतीति मत्वा तत्पतयो जगुरित्याशयः । तत्रापि स॰स्त्रीकाः प्रेमाविष्टत्वात् तत्त्वादव्यग्रचित्ता इति भावः । तत्रापि तां भगवल्लीलामवलोक्य न तेषां भगवति विषयित्वबुद्धिरासीदित्या॰शयेनाह ॥ तस्य तादृशक्रीडायां निष्ठस्य भगवतो निर्मलं यश इति तथाच तद्दर्शनं शुद्धबुद्धीनां तेषां मलनिवर्तकमभूदितिभावः ॥ ५ ॥

एवं बाह्यवाद्यादिकमुक्त्वा नृत्यमध्ये रसोपयोगीनि वादित्राण्याह ।

वलयानां नूपुराणां किङ्किणीनां च योषिताम् ॥
सप्रियाणामभूच्छब्दस्तुमुलो रासमण्डले ॥ ६ ॥

वलयानामिति ॥ तत्राप्युपरि योषितां वलयानां मध्ये नूपुराणां मध्ये किङ्किणीनां शब्दो रासमण्डले तुमुलः संकीर्णोऽभूव तत्रापि मिषेण श्रीकृष्णेन सह वर्तमानानाम् । तथाच तत्क्रियायां न कस्या अपि कृष्णविश्लेष आसीदिति भावः । चकारेण संगृहीतस्य करतालादिशब्दस्याप्राधान्यं व्यज्यते । ननु महामायानटीनर्तकस्य भगवतस्तत्र नृत्यतः का शोभेत्याशङ्क्याह ॥

तत्रातिशुशुभे ताभिर्भगवान् देवकीसुतः ॥
मध्ये मणीनां हैमानां महामरकतो यथा ॥ ७ ॥

तत्रेति ॥ तत्र तस्मिन् रासमण्डले भगवानपि देवकीसुतोऽपि अत्यर्थं शुशुभे । तत्र दृष्टान्तः । सौवर्णानां मणीनां मध्ये मध्ये महामरकतो नीलमणिर्यथा शोभते तद्वत् गोपीदृष्ट्यभिप्रायेणैव विनैव मध्यपदावृत्तिमेकवचनम् । यद्वा कदाचिन्मण्डलमध्यगतो वेणुं वादयन् शुशुभे । तदुक्तं विल्वमङ्गले । अङ्गनामङ्गनामन्तरे माधवो माधवं माधवं चान्तरे चाङ्गना * इत्थमाकल्पिते मण्डले मध्यगः संजगौ वेणुना देवकीनन्दन इति ॥ ७ ॥

स यथा ताभिः शुशुभे तथा ता अपि तेन विरेजुरित्याह ।

पादन्यासैर्भुजविधुतिभिः सस्मितैर्भ्रूविलासै-
र्भज्यन्मध्यैश्चलकुचपटैः कुण्डलैर्गण्डलोलैः ॥
स्विद्यन्मुख्यः कवररसनाग्रन्थयः कृष्णवध्वो
गायन्त्यस्तं तडित इव ता मेघचक्रे विरेजुः ॥ ८ ॥

पादन्यासैः संगीतशास्त्रोक्तनृत्तानुकूलपादगतभेदैः । भुजविधुतिभिरन्योन्यावद्धभुजानामपि यथोक्तक्रीडानुकूलैः कम्पनविशेषैः । यद्वा कदाचिदन्योन्यावद्धबाहुमुत्सृज्याभिनयार्थं कृतैश्चालनैः

सस्मितैर्भ्रुवां विलासैः, कार्श्याद् कुण्डलीभवन्मध्यभागैः, चलद्भिः कुचैस्तत्पटैश्च, गण्डेषु चञ्चलैः कुण्डलैः, स्विद्यन्ति स्वेदबिन्दूलंकृतानि मुखानि यासां, कबरेषु रशनासु च दृढा ग्रन्थयो यासां ताः। अग्रन्थयः शिथिलग्रन्थय इति वा, तं कृष्णं गायन्त्यो विरेजुः । तत्रानेक-मूर्तिः श्रीकृष्णो मेघचक्रमिव, गोप्यस्तडित इव, स्वेदबिन्दवस्तुषार इव गीतं गर्जितमिवेत्यर्थाद् सूचितम् । कृष्णवध्वः कृष्णभोग्यस्त्रियः वधूपदेन तस्यैव वस्तुतः स्वाभाविकाः स्त्रियः इति सूचितम् । स्व-वधूवदेव चेष्टां कृतवत्य इति वा । तडित इवेत्यनेन तथाभूता अपि ता देवादिभिर्मेघचक्रे तडित इव कदाचिद् शोभमाना दृष्टा इत्यपि ध्वनितम् ॥ ८ ॥

केवलनृत्यमुक्त्वा सङ्गीतं तदाह ।

उच्चैर्जगुर्नृत्यमाना रक्तकण्ठ्यो रतिप्रियाः ॥
कृष्णाभिमर्षमुदिता यद्गीतनेदमावृतम् ॥ ९ ॥

नृत्यमाना नृत्यन्त्योऽप्युच्चैर्जगुः। शानजार्षः। नृत्ये मानो गर्व आदरो वा यासामिति वा। रक्तकण्ठ्यः। नानारागैरनुरञ्जितकण्ठाः स्निग्ध-कण्ठा इति वा। तथापि रतिरेव प्रिया यासाम्। यद्वा गानफलमाह ॥ रतिः कृष्णकर्तृका प्रीतिः प्रिया यासाम् । ननु तादृशचिर-कालीननृत्ये श्रमापनोदस्तासां केन जात इत्याशङ्क्याह ॥ कृष्णेन सदानन्दरूपेण प्रेष्ठेन कृतः अभितो मर्षः प्रोञ्छनादिरूपस्तेन मुदिता मोदसागरे निमग्नाः । किञ्च तद्गीतेन सर्वैरपि सर्वं विस्मृतं, तासां श्रमविस्मरणे किं चित्रमित्याह ॥ यासामुच्चैर्गीतेनेदं विश्व-मावृतमासीत् । यद्वा यासां स्वयं कल्पितेन षोडशसहस्रभेदभिन्नेन गीतेनेदमावृतं व्याप्तम् । यद्वा तद्विषयकेण लोकैः स्वोद्धारार्थं क्रियमाणेन गीतेनेदमावृतम् ॥ ९ ॥

अथ पञ्चभिस्तासां प्रेमचेष्टितान्याह ॥

काचित्सह मुकुन्देन स्वरजातीरमिश्रिताः ॥
उन्निन्ये पूजिता तेन प्रीयता साधुसाध्विति ॥ १० ॥

काचिदिति ॥

षड्जर्षभौ च गान्धारो मध्यमः पञ्चमस्तथा ।
धैवतश्च निषादश्च सर्वे स्युः श्रुतिसम्भवाः ॥
मयूरचातकच्छागक्रौञ्चकोकिलदर्दुराः ।
मातङ्गाश्च क्रमेणाहुः स्वरानेतान् सुर्दुर्गमान् ॥
रागस्तु जायते यस्याः सा जातिरभिधीयते ।
शुद्धा चाविकृता चेति सा द्विधा परिकीर्तिता ॥
शुद्धाः स्युर्जातयः सप्त ताः षड्जादिस्वराभिधाः ।
ता एव विकृताः सत्यो जाता विकृतसंज्ञया ॥
षड्जर्षभा च गान्धारी मध्यमा पञ्चमी तथा ।
धैवती चाथ नैषदी शुद्धा एतास्तु जातयः—

इत्युक्तजातीरमिश्रिता जात्यन्तरासंस्पृष्टा मुकुन्देन सह उन्निन्ये उत्कृष्टाः कल्पयामास । यद्वा कृष्णोन्नीताभिरसङ्कीर्णाः स्वरजातीः षड्जादिस्वरालापगतीरुन्निन्ये । सहशब्देन संख्याप्राधान्यमुच्यते । ततश्च प्रीयमाणेन तेन साधुसाध्विति पूजिता संमानिता । वीप्सा हर्षेण । इयं ललितानाम्नी श्रीराधासखी ॥ १० ॥

तदेव ध्रुवमुन्निन्ये तस्यै मानं च बह्वदात् ॥
काचिद्रासपरिश्रान्ता पार्श्वस्थस्य गदाभृतः ॥
जग्राह बाहुना स्कन्धं श्लथद्वलयमल्लिका ॥ ११ ॥

काचित्तु तदेव जात्युन्नयनमेव ध्रुवं ध्रुवाख्यं तालविशेषं कृत्वोन्निन्ये उन्नीतवती । तस्यै तथा गानपरायै बहु यथा स्यात् तथा मानम् अदात् । वस्त्रालिङ्गनादिदानपूर्वकं साधुवादं श्रीमुकुन्दः कृतवान् । विशाखाख्यैषा श्रीराधासखी ॥ एवं नृत्यगीतादिपराणां भगवता संमानितानां मध्ये कस्याश्चिदतिप्रीतिविलसितं वृत्तमाह ॥ काचित् पार्श्वस्थस्य, गदां नटवृन्दाधिपत्युचितां गदाकारां यष्टिं बिभर्त्ति, गदति वर्णानिति गदां वंशीमिति वा । तथाचानायासग्रहणस्य स्वानिरोधपरस्य मध्यशङ्कुस्थानीयमूर्तेः प्रेष्ठस्य स्कन्धं बाहुना जग्राह । यतो रासपरिश्रान्ता । यतः सौकुमार्य्यात् श्रमकार्श्येन श्लथन्तो वलया गलन्त्यो मल्लिकाश्च कबरस्था यस्याः । तथाच विश्रमाय तथा प्रवृत्तिपरा मध्यस्थप्रेष्ठसन्निहिता स्वाधीनभर्तृका प्रियापदप्रतिपाद्या सर्वाधिका श्रीराधिकाऽभिधाऽलङ्कृतेयमिति ध्वनितम् ॥ ११ ॥

तत्रैकांसगतं बाहुं कृष्णस्योत्पलसौरभम् ॥
चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह ॥ १२ ॥

तासु मध्ये एका रासपरिश्रान्तस्येषद्धाराक्रान्तस्य च कृष्णस्य स्वांसगतं बाहुं स्वभावत एव उत्पलतोऽप्यधिकं सौरभं यस्य तम् । तत्रापि चन्दनेनालिप्तं चुचुम्ब । यतो हृष्टरोमा अन्तर्मातुमशक्यत्वाद्रोमद्वारा बहिर्निःसृतेन हर्षेण युक्ता । प्रागल्भ्याख्योऽनुभावोऽयम् । निःशङ्कत्वं संप्रयोगे बुधैरुक्ता प्रगल्भतेत्युक्तेः । श्यामलाऽऽख्यैषा सखी ॥ १२ ॥

कस्याश्चिन्नाट्यविक्षिप्तकुण्डलत्विषमण्डितम् ॥
गण्डं गण्डे सन्दधत्या अदात्ताम्बूलचर्वितम् ॥ १३ ॥

कस्याश्चित्तु नाट्येन नृत्येन विक्षिप्ते चञ्चले कुण्डले च स्वाभाविकी गण्डत्विट् तत्समाहारः । नाट्यविक्षिप्तकुण्डलत्विषं तेन मण्डितं स्वगण्डं श्रीकृष्णगण्डे श्रमनिरासमनोरथेन सन्दधत्याः संयोजयन्त्याः स्वसंमुखं कृत्वा ताम्बूलचर्वितं प्रादात् शैव्याख्येयं सखी ॥ १३ ॥

नृत्यन्ती गायती काचित् कूजन्नूपुरमेखला ॥
पार्श्वस्थाऽच्युतहस्ताब्जं श्रान्ताधात् स्तनयोः शिवम्॥१४॥

अत्र काचित्पदाऽऽवृत्त्या द्वे सख्यौ प्रोक्ते इति ज्ञातव्यम् । तथाच कूजन्ती नूपुरे मेखला च यस्याः सा नृत्यन्ती काचित् पार्श्वस्थाच्युतहस्ताब्जं श्रमजनिततापनिवर्तकम् । अतः शिवं श्रमनिवृत्त्यर्थमञ्जलिना अधात् गृहीतवती । पूर्ववद्धस्तग्रहणाऽनुसारात् चन्द्रावलीसंज्ञे‍ं सखी । काचित्तु गायन्ती तद्धस्ताब्जं शिवं श्रान्ता सती श्रमनिवृत्त्यर्थं स्तनयोरधात् । चन्द्रावलीसाहचर्य्यात् स्तनयोर्धारणस्य पूर्वसाम्याच्च पद्माख्या चन्द्रावलीसुहृद्भूता सखीयम् । भद्रासंज्ञाऽष्टमी तु पूर्ववद्विष्णुपुराणादवगन्तव्या ।

काचित् परिलसद्बाहुं परिरभ्य चुचुम्ब तम् ।
गोपीगीतस्तुतिव्याजनिपुणा मधुसूदनम्—
इति तत्रोक्तेः ॥ १४ ॥

एवं मुख्यानामष्टानां वृत्तमभिधाय सर्वासां तदाह ।

गोप्यो लब्ध्वाऽच्युतं कान्तं श्रिय एकान्तवल्लभम् ॥
गृहीतकण्ठ्यस्तद्दोर्भ्यां गायन्त्यस्तं विजह्रिरे ॥ १५ ॥

गोप्य इति ॥ अच्युतं स्वस्वरूपात् कदाप्यऽप्रच्युतं श्रियः एकान्तवल्लभम् अव्यभिचरितप्रेमविषयं, न तु तथात्वेन लब्धं का-

भ्भं लब्ध्वा, तत्रापि तद्दोर्भ्यां गृहीतकण्ठ्यो गायन्त्यः सत्यो विजह्रिरे । यद्वा श्रियः कान्तमात्रं, स्वस्य त्वेकान्तवल्लभम् । एतेन श्रियोऽप्याधिकसौभाग्यमासामुक्तम् । वक्ष्यते च, नाऽयं श्रियोऽङ्ग उ विनान्तरतेः प्रसाद इति ॥ १५ ॥

तत्र गायकेषुं वादकेषुं च सस्त्रीकेषु गन्धर्वादिषु साविशेषेण मुह्यत्सु नृत्यत्सु चान्यामेव वाद्यादिसम्पत्तिं दर्शयन्नुक्तसौभाग्यं स्फोरयति ।

कर्णोत्पलालकविटङ्ककपोलघर्म्म-
वक्त्रश्रियो वलयनूपुरघोषवाद्यैः ॥
गोप्यः समं भगवता ननृतुः स्वकेश-
स्रस्तस्रजो भ्रमरागायकरासगोष्ठ्याम् ॥ १६ ॥

कर्णेति, द्वाभ्याम् ॥ कर्णोत्पलैश्च अलकविटङ्कैः कुटिलकुन्तलाऽलंकृतैः कपोलैश्च, घर्मैः स्वेदबिन्दुभिश्च वक्त्रेषु श्रीः शोभा यासामिति रासश्रमेऽपि शोभोक्ता । ननु श्रमेऽपि कुतो नृत्यप्रवृत्तिरित्याशङ्क्याह ॥ भगवता समामिति ॥ तथाच तत्साहित्यात्क्रमोऽपि ताभिर्न गणित इति भावः । यतश्च गोप्यः ॥ गोपस्य भगवतः संबन्धिन्यः । तथाच भगवति नृत्यति तदनुयायिनीनां तासां विरामो नोचित इति भावः ॥ भगवता सममित्यनेन भगवन्नृत्यसमं तासां नृत्यमिति कथितम् । वलयानां नूपुराणां च घोषाः शब्दायमानाः किङ्किण्यस्तद्रूपैर्वाद्यैर्वादित्रैः । पुनश्च भ्रमरा एव गायका यस्यां तस्यां राससभायां ननृतुः । अनेन लोकविलक्षणता ध्वनिता । तदानीं स्वकेशेभ्यः स्रस्ता विगलिताः स्रजो याभ्यस्ताः । एतेन नृत्यगतिसन्तुष्टाः स्वकेशाः सशिरःकम्पं पादेषु पुष्पवृष्टिमिव चक्रुरित्युत्प्रेक्षा दर्शिता ॥ १६ ॥

यथा गोप्यो नानाविभ्रमैर्भगवता सह विजह्रुरेवं भगवानपि स्वविलासैस्ताभिः सह रेम इत्याह ।

एवं परिष्वङ्गकराभिमर्ष-
स्निग्धेक्षणोद्दामविलासहासैः ॥
रेमे रमेशो व्रजसुन्दरीभि-
र्यथार्भकः स्वप्रतिबिम्बविभ्रमः ॥ १७ ॥

एवमिति ॥ रमाया ईशः पतिरपि व्रजसुन्दरीभिरेवं रेमे, न तये-ति रमातोऽपि तासां प्रेमाधिक्यं सूचितम् । यद्वा, ननु प्राकृताभि-स्ताभिरप्राकृतो भगवान् कथं रेम इत्याशङ्क्योक्तं,रमश इति ॥ तथाच तासु भगवदाज्ञया रमा प्रविष्टाऽतस्तयैव भगवान् रेमे इति भावः । तास्तस्याः प्रवेशयोग्या इत्याशयेनाह ॥ व्रजसुन्दरीभिरिति ॥ यद्वा रमेशो व्रजसुन्दरीभिरिति पदद्वयेन रमया परास्त्रीरूपमादाय रम-माणे भगवति द्वयोर्विलक्षणो रस उद्भूत इति ध्वनितम् । एवं पदार्थमाह ॥ परिष्वङ्गेति ॥ आश्लेषश्च तासां करालम्भनं च त-न्मुखादीनां सप्रेमावलोकनम् उद्दामविलासः स्तनस्पर्शादिश्च भावव्यजकं स्मितं च तैस्तद्विलासानभिभूतस्यैव रतौ दृष्टान्तः, यथाऽर्भक इति ॥ स्वप्रतिबिम्बे विभ्रमः क्रीडा यस्यैवम् । एतेन स्वीयमेव कलाकौशलं सौगन्ध्यलावण्यमाधुर्य्यादिकं च तासु सञ्चार्य ताभिः सह रेम इति दर्शितम् । यद्वा तासां रमणयोग्यतायां दृष्टान्तः । तथाच गुणलावण्यादिना स्वतुल्याभिः स्वबन्धुत्वयो-ग्याभिस्ताभिः रेमे । अत एव पूर्वं कृष्णवध्व इत्युक्तम् । यद्वा य-था कश्चित् प्रतिबिम्बद्वारैव स्वमुखमाधुर्य्यमनुभवति तथा भगवा-नपि तादृशस्वप्रेयसीद्वारैवेत्येनेन व्यज्यते । यद्वा यथाऽर्भको मुग्ध-

स्तद्वत् । तथाच तासु प्रेमाधीनत्वान्मौग्ध्यमेवाश्रितवान्न तु रमायामिव वैदग्ध्यमिति भावः । नन्वसंख्याताभिः कथमेकस्य रमणमित्याशङ्क्याह ॥ स्वप्रतिबिम्बं प्रतिस्वरूपमेव विभ्रमो विलासो यस्य सः । तथाचैकैकया प्रियया सहैकैकस्वरूपः सन् रेमे इत्यर्थः । यद्वा परमेश्वरस्य नैवंविधा लीला घटत इत्याशङ्कानिवृत्त्यर्थमुक्तं यथार्भक इति ॥ तथाच यथा बाललीलां कृतवाँस्तथेमामपीति भावः ॥ यद्वा यथोक्तक्रीडादिना भगवति दोषापत्तिर्न शङ्क्या इत्याशयेनाह ॥ स्वेति ॥ तथाच स्वप्रतिबिम्बभूताभिस्ताभिर्बिम्बभूतस्य परमेश्वरस्य क्रीडां कुर्वतः का दोषप्रसक्तिसंभावनेति भावः । ननु तथापि किमर्थं तथा कृतवानिति चेत् तत्राह ॥ अर्भक इव ॥

तथाच बालकस्य कामक्रोधादिविनिर्मुक्तस्य विहारो यथा लीलामात्रं, तथा भगवतोऽपि सृष्ट्यादिवदिदमपि विहरणं लीलामात्रमिति भावः ॥ १७ ॥

अथ रासक्रीडाविरामहेतुं तासां भगवद्विलासैराकुलेन्द्रियत्वमाह ।

तदङ्गसङ्गप्रमुदाकुलेन्द्रियाः
केशान् दुकूलं कुचपट्टिकां वा ॥
नाञ्जः प्रतिव्योढुमलं व्रजस्त्रियो
विस्रस्तमालाभरणाः कुरूद्वह ॥ १८ ॥

तदिति ॥ तस्याङ्गसङ्गैः प्रकृष्टा या मुत् हर्षस्तया विवशेन्द्रियाः । यत एवमतः केशान् दुकूलं कञ्चुकीं च शिथिलतां गतान्येतानि अञ्जसा प्रतिव्योढुं यथापूर्वं धर्तुं नालं, समर्था न बभूवुः । विस्रस्तानि मालाभरणानि यासां ताः । ननु केशादिशैथिल्ये हेतुभूतां क्रीडां लज्जां विहाय किमिति कर्तुं प्रवृत्ता इत्याशङ्क्याह

व्रजस्त्रियः॥ नगरस्त्रीणां तादृशः स्वभाव इति भावः। तत्रापि राजवंशोद्भवानां स्त्रीणां तथा प्रवृत्तिर्नोचितेति संबोधनाशयः ॥ १८ ॥

कृष्णविक्रीडितं वीक्ष्य मुमुहुः खेचरस्त्रियः ॥
कामार्दिताः शशाङ्कश्च सगणो विस्मितोऽभवत्॥१९॥

साक्षाद्भगवता विक्रीडन्तीनां तासां व्याकुलेन्द्रियत्वे किं चित्रं, देवाद्यङ्गनानां तु दर्शनमात्रादेव व्याकुलता सञ्जातेत्याशयेनाह ॥ कृष्णस्य सदानन्दरूपस्य परमात्मनः विक्रीडितमलौकिकं क्रीडनं वीक्ष्य विशेषेणोपलभ्य कामार्दिताः सत्यो देवाद्यो मुमुहुः विकलचित्ता बभुवुः ॥ खेचरस्त्रिय इत्यनेन तत्पत्नीनां पुरुषत्वाद् गुह्यलीलादर्शनाभावो योगमायया संपादित इति सूचितम्। तत्सर्वमवलोक्य शशाङ्कश्चन्द्रः सगणः ज्योतिश्चक्रेण सर्वेण सहितः विस्मितश्चकितहृदयोऽभवत्।अनेन चन्द्रादिग्रहणां गतिविस्मृतत्वाव् कालदैर्घ्यं सूचितम् । तत्रापि योगमायया सर्वोऽपेक्षया यामचतुष्टयात्मिका या रजिनी तस्यामेव क्रीडानुकूलदैर्घ्यं संजातमिति द्रष्टव्यम् ॥ १९ ॥

अथ रासानन्तरं विश्रम्य रहस्यकृतां लीलामाह ।

कृत्वा तावन्तमात्मानं यावतीर्गोपयोषितः ॥
रेमे स भगवाँस्ताभिरात्मारामोऽपि लीलया ॥ २० ॥

कृत्वेति, द्वाभ्याम् ॥ यावत्यो गोपाङ्गनाः तावन्तम् आत्मानं प्रकटीकृत्य ताभिः सह भगवान् शृङ्गाररसलीलया रेमे । रमणं चेदं पृथक् कुञ्जेषु, तत्रैव वा योगमायया विरचितेषु नवीनेषु परस्परमदृश्येषु तदनुकूलप्रदेशेष्विति ज्ञेयम् । अनेन, कात्यायनि महामाये महायोगीन्यधीश्वरि * नन्दगोपसुतं देवि पतिं मे कुरु ते

नमः, इति प्रत्येकं तासां प्रार्थनायाः, याताऽबला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः * इति भगवता दत्तस्य वरस्य च चरितार्थकता बोधिता ॥ २० ॥

अथ तासु भगवतः कृपातिशयमाह ।

तासामतिविहारेण श्रान्तानां वदनानि सः ॥
प्रामृजत् करुणः प्रेम्णा शंतमेनाङ्गपाणिना ॥२१॥

तासामिति ॥ अत्यर्थं रमणात्मकेन विहारेण, रतिविहारेणेति क्वचित् पाठः । श्रान्तानां वदनानि सः भगवान् प्रामृजत् । तत्रापि स्वहस्तकमलेन । तत्रापि शंतमेन । स्पर्शमात्रेण स्वभावतः सुखकरेण । तत्रापि कान्तोचितप्रेमविशेषेण । यतः करुणस्तत्परिश्रमं द्रष्टुमक्षमः ! पाणिनेति वीजनोपलेपनादेरुपलक्षणम् । तथाच तासां परिश्रममालक्ष्य तद्विहारान्निवृत्तः सन् तथा कृतवानित्यर्थः ॥ २१ ॥

ततः पूर्णाऽखिलमनोरथानां पुनर्मिलितानां तासां प्रहृष्टानां कृत्यमाह ।

गोप्यः स्फुरत्पुरटकुण्डलकुन्तलत्विड्-
गण्डश्रिया सुधितहासनिरीक्षणेन ॥
मानं दधत्य ऋषभस्य जगुः कृतानि
पुण्यानि तत्कररुहस्पर्शप्रमोदाः ॥ २२ ॥

गोप्य इति ॥ स्फुरतां कनककुण्डलानां कुन्तलानां च त्विषा या गण्डश्रीस्तया सुधितेनाऽमृतायितेन सहासावलोकनेन च गोप्यः, ऋषभस्य पत्युर्भगवतो मानं पूजां कुर्वत्यः तस्य कृतानि जगुर्यतः ॥ पुण्यानि ॥ स्फुरादिति तन्वा, सुधितेति मनसा,

जगुरिति वाचेति त्रिविधं प्रहर्षणमुक्तम् । पुनश्च तस्य भगवतो नखस्पर्शेन प्रमोदो यासां ताः ॥ २२ ॥

ततो रासोत्सवान्ते जातमवभृथस्नानमिव जलविहारमाह ।

ताभिर्युतः श्रममपोहितुमङ्गसङ्ग-
घृष्टस्रजः स कुचकुङ्कुमरञ्जितायाः ॥
गन्धर्वपालिभिरनुद्रुत आविशद्वाः
श्रान्तो गजीभिरिभराडिव भिन्नसेतुः ॥ २३ ॥

ताभिर्युतः ॥ तासामङ्गसङ्गेन घृष्टाया मर्दितायाः कुसुमस्रजः, अत एव तासां कुचकुङ्कुमेन रञ्जितायाः सम्बन्धिभिः गन्धर्वपालिभिः । गन्धर्वो मृगभेदे स्याद्गायने खेचरेऽपि चेति विश्वप्रकाशाद् गायनश्रेष्ठैर्भ्रमरैरनुद्रुतः स कृष्णः । भगवदङ्गसङ्गेन घृष्टस्रजः । अत एव स्वकुचकुङ्कुमेन रत्यावेशात् प्रसृतेन रञ्जिताखिलदेहास्ताभिर्युतस्तासां श्रमं निराकर्तुं स्वयमपि श्रान्तः सन्, वाः यामुनं जलमाविशत् । श्रान्ततायां हेतुः—भिन्नसेतुः । भिन्नः सेतुर्लीलामर्यादा येन कृतलीलौद्धत्य इत्यर्थः । गजोऽपि विदारितवप्रत्वात्, श्रान्तः । गजस्यैव वेदं विशेषणद्वयम् । स्वयं चातिक्रान्तलोकवेदमर्य्याद इति केचित् ॥ २३ ॥

सोऽम्भस्यलं युवतिभिः परिषिच्यमानः
प्रेम्णेक्षितः प्रहसतीभिरितस्ततोऽङ्ग ॥
वैमानिकैः कुसुमवर्षिभिरीड्यमानो
रेमे स्वयं स्वरतिरत्र गजेन्द्रलीलः ॥ २४ ॥

अङ्ग हे राजन्, सः लीलाविलासचतुरः युवतिभिः जलक्रीडा

कर्तुमनिसमर्थाभिः अम्भसि इवस्ततः सर्वतः जलैः परिषिच्यमानः प्रेम्णेक्षितश्च स प्रेक्षणेनान्तरपि सिच्यमानः। क्वचित् प्रेम्णोक्षित इति पाठः। परिषिच्यमानं प्रेष्ठमवलोक्य प्रकर्षेण हसतीभिस्तदानीमपि पुष्पवर्षापरायणैर्विमानस्थितैर्देवादिभिः स्तूयमानः स्वयं साक्षात्पुरुषोत्तमविग्रहो रेमे। तत्र दृष्टान्तः। गजेन्द्रस्येव लीला यस्य। अत्रैवम्भूतरमणकालेऽपि वस्तुतः स्वरतिः। स्वस्मिन्नेव रतिर्यस्य, न बहिः। तथा तादृशरमणं कुर्वतोऽपि भगवतः स्वमहिम्न्येवावस्थानमेवासीदिति भावः। अत्र गोपीमण्डले, अम्भसि वेत्यन्ये॥ २४॥

स्थलजलक्रीडां वर्णयित्वा वनक्रीडां वर्णयति।

ततश्च कृष्णोपवने जलस्थल-
प्रसूनगन्धानिलजुष्टदिक्तटे॥
चचार भृङ्गप्रमदागणाऽऽवृतो
यथामदच्युद् द्विरदः करेणुभिः॥ २५॥

ततो यथोक्तक्रीडानन्तरं च जलस्थलपुष्पाणां गन्धो यत्र तेन वायुना जुष्टानि दिशां तटानि अन्ता यस्मिन् तादृशे यमुनाया उपवने, सौगन्धासक्तानां भृङ्गाणां लावण्यासक्तानां प्रमदानां च गणैरावृतः सन् विचचार विहृतवान्। यथा गजः मदच्युततया भृङ्गगणावृतः करेणुभिश्चावृतस्तद्वत्॥ २५॥

एवं प्रथमरात्रिकृतरासक्रीडामभिधायानुक्तं संस्मरन् अपररात्रिषु तत्प्रकारमतिदिशन्नुपसंहरति।

एवं शशाङ्कांऽशुविराजिता निशाः
स सत्यकामोऽनुरताऽबलागणः॥

सिषेव आत्मन्यवरुद्धसौरतः
सर्वाः शरत्काव्यकथारसाश्रयाः ॥ २६ ॥

एवमिति ॥ सः श्रीकृष्णः अनुरक्तस्त्रीकदम्बस्थः, सर्वा अपि शशाङ्कांशुविराजिताः शरदि भवाः काव्येषु कथ्यमाना ये रसास्तेषामाश्रयभूता निशाः सेवितवान् । यद्वा, निशा इति द्वितीया अत्यन्तसंयोगे । तथाभूतासु निशासु शरदि प्रसिद्धाः काव्येषु याः कथास्ताः सिषेवे । सत्यसङ्कल्पस्य भगवतो रमणाधिकरणभूताः सर्वा अपि ता निशाः शशाङ्कांशुविराजिता एव सम्पन्ना इति बोधनाय सत्यकाम इत्युक्तम् । तस्मिन्नभिरमणे तासां नैर्बल्यमेव स्थितमिति सूचनायाऽबलेत्युक्तम् । अत एवात्मन्येवावरुद्धः सौरतः चरमधातुर्न तु स्खलितो यस्येति कामविजयोक्तिः । यद्वा, सर्वाः द्वादशमासिकाः । हायनोऽस्त्री शरत् समा इति कोशात् शरदि संवत्सरमध्ये याः श्रीवृन्दावनीयकृष्णक्रीडाऽधिकरणीभूता आश्रित्य भूतभविष्यद्वर्तमानकविकृतकाव्येषु याः कथाः रसाश्च तेषामाश्रयभूता निशाः सिषेवे । रममाणश्च भगवानात्मन्यवरुद्धसौरतः । आत्मनि मनसि अवरुद्धा अवरुध्य स्थापिताः सौरताः सुरतसम्बन्धिनो भावा बिब्बोककिलकिञ्चितादयः संलापप्रलापादयः वाम्यौत्सुक्यहर्षादयः स्तम्भस्वेदवैवर्ण्यादयः दर्शनस्पर्शनाश्लेषादयश्च येन सः । यद्वा, एकस्यामेव रजन्यामसंख्याताः स्वयं कल्पिता निशाः स्वसङ्कल्पितशशाङ्कांशुविराजिताः । यतः सत्यसङ्कल्पः । समानमन्यत् ॥ २६ ॥

भगवत्कृतां रासलीलाम् आकर्ण्य सर्वसन्देहनिवृत्तये राजा पृच्छति ।

राजोवाच ।

संस्थापनाय धर्मस्य प्रशमायेतरस्य च ॥
अवतीर्णो हि भगवानंशेन जगदीश्वरः ॥ २७ ॥

धर्मेति ॥ परित्राणाय साधूनाम् इत्युक्तत्वाद् धर्मस्य सम्यक्स्थापनायेतरस्याऽधर्मस्य च प्रकर्षेण शमनाय भगवान् जगदीश्वरोंऽशेन बलदेवेन सहावतीर्ण इति प्रसिद्धम्। भगवानिति पदेनाऽन्यथा पूर्णकामस्यावतरणं न घटत इति सूचयति। युक्तं चैवं भगवतो जगत्परिपालनमिति द्योतनाय जगदीश्वर इत्युक्तम्। यद्वा, अंशेन जगदीश्वरः। तदुक्तं—विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति ॥ २७ ॥

स कथं धर्मसेतूनां वक्ता कर्त्ताऽभिरक्षिता ॥
प्रतीपमाचरद् ब्रह्मन् परदाराभिमर्शनम् ॥ २८ ॥

एवम्भूतः सः, धर्म्मसेतूनां तत्प्रतिपादकवेदादीनां वक्ता। तत्रापि, न केवलं वक्ता किन्तु तत्कर्ता तत्प्रतिपादकशास्त्रस्य निर्माता च। किञ्च तदुक्ताऽऽचरणेन तद्विरुद्धवादिनिराकरणेन तत्प्रतिपक्षबलवधादिना च रक्षिता पालकश्च, कथं प्रतीपं धर्मसेतूनां प्रतिकूलं परदाराभिमर्शनरूपं साहसमधर्म्ममाचरत्। न केवलं कलञ्जभक्षणादिवदधर्म्ममात्रमित्यर्थः। नन्वीशचेष्टितं कथं मया ज्ञातुं शक्यमिति चेत् तत्राह ॥ हे ब्रह्मन् वेदमूर्ते सर्वज्ञ, तदभिज्ञेति वा ॥ २८ ॥

नचाप्तकामस्य भगवतो नाधर्मसंस्पर्श इति चेत् तत्राह।

आप्तकामो यदुपतिः कृतवान् वै जुगुप्सितम् ॥
किमभिप्राय एतन्नः संशयं छिन्धि सुव्रत ॥ २९ ॥

आप्तकाम इति ॥ यद्याप्तकामस्तर्हि सुतरामिदं जुगुप्सितं कर्म

कृतवान् । तथाचाप्तकामस्यावतारावस्थायां यदूनां परमधार्म्मिकाणां पत्युरत्रंविधं कर्म निन्दितमेव । ननु किमेवं परमेश्वरे दोषमुद्भावयितुं प्रवृत्तोऽसीत्याशङ्क्य, नाहं तस्मिन् दोषमुद्भावयामि, किन्तु तदाचरणे तस्याभिप्रायं पृच्छामीत्याह ॥ किमिति ॥ किमभिप्रायः कृतवान् एनन्नोऽस्माकं सर्वेषां संशयं छिन्धि । न इति करचालनेन संशयाक्रान्ततां दर्शितवान् । यथा ब्रह्मचर्य्यादिसुव्रतैर्भवद्भिस्तत्प्रतीपाचरणं न क्रियते तद्वत्तस्यापि तदकरणं शोभनमिति संबोधनाशयः । यद्वा, हे संशयच्छेदनलक्षणसुव्रत ॥२९॥

ईश्वराणामपि दृष्टेन धर्म्मव्यतिक्रमेण साहसेन च दोषाभावनिश्चयात् परमेश्वरे कुतस्तच्छङ्कोत्थानमिति कैमुत्यन्यायेन परिहर्तुं सामान्यत ईश्वराणां वृत्तमाह ।

श्रीशुक उवाच ॥

धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ॥
तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥ ३० ॥

धर्म्मेति ॥ ईश्वराणां प्रजापतीन्द्रचन्द्रविश्वामित्रादीनां धर्म्मस्य व्यतिक्रम उल्लङ्घनं, तथा साहसं सहसा प्रवृत्तिरधर्माचरणं च दृष्टं, तत् तेजीयसां न दोषाय, प्रत्यवायाय न भवति । यथा च वह्नेः सर्वभुजः सर्वभुक्तं दोषावहं न भवति तद्वत् ॥ ३० ॥

नन्वेवं तर्हि यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन इति न्यायादितरस्यापि तदनुष्ठानं दोषावहं न भविष्यतीति, तत्राह ।

नैतत् समाचरेज्जातु मनसापि ह्यनीश्वरः ॥
विनश्यत्याचरन्मौढ्याद्यथा रुद्रो जुषन् विषम् ॥ ३१ ॥

नेति ॥ इतरस्तु एतन्मनसाऽपि कदाचिदपि न समाचरेत् ।

वाचा देहेन समाचरेदिति किमु वक्तव्यम् । हि यतः अनीश्वरः देहादिपरतन्त्रः । विपक्षे बाधकमाह ॥ मौढ्यात् सामर्थ्यासामर्थ्यविवेकराहित्यात्तद्वदाचरन् मन् विशेषेण नायश्चः । यथा रुद्रव्यतिरिक्तो विषं जुषन् भक्षयन् विनश्यति तद्वत् ॥ ३१ ॥

ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित् ॥
तेषां यत् स्ववचो युक्तं बुद्धिमाँस्तत् समाचरेत् ॥ ३२॥

तस्मादीश्वराणां वचः सत्यं सर्वथाऽनुल्लङ्घनीयम् । तर्हि सदाचारः प्रमाणमिति घण्टाघोषस्य का गतिरिति चेत् तत्राह ॥ तथैवेति ॥ क्वचित् तेषामाचरितमपि तथैव सत्यम् । तत्किमित्यपेक्षायामाह ॥ तेषां यदाचरितं तेषां वचसा युक्तं तदेव बुद्धिमान् सम्यगाचरेदन्यथा निर्बुद्धिर्भवेत् । तथाच धर्म्मबुद्ध्या सद्भिर्यदनुष्ठितं तदेव प्रमाणतयोपादेयं, न सर्वमित्यर्थः ॥ ३२ ॥

ननु तेऽपि स्ववचोऽनुरूपं कुतो नाचरन्ति इत्याशङ्क्य स्ववचसो विधिनिषेधरूपत्वात्, तेषां च तदप्रयोज्यत्वान्न स्ववचनानुसरणमित्याशयेनाह ।

कुशलाचरितेनैषामिह स्वार्थो न विद्यते ॥
विपर्यये न चानर्थो निरहंकारिणां प्रभो ॥ ३३ ॥

कुशलेति ॥ तथाचोक्तं भगवता- नैव तस्य कृतेनाऽर्थो नाकृतेनेह कश्चन * इति । यतस्ते निरहङ्कारिणः । तदुक्तं- यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते * इति । तथाच तेषां तथा प्रवृत्तिरेतच्छास्त्रसार्थक्यमिति भावः । यथा प्रभोस्तव न नामरूपनियम्यता तद्वत्तेषामपि नास्ति विधिनिषेधनियम्यतेति संबोधनाशयः ॥ ३३ ॥

किमुताखिलसत्त्वानां तिर्यङ्मर्त्यदिवौकसाम् ॥

ईशितुश्चेशितव्यानां कुशलाकुशलान्वयः ॥ ३४ ॥

तथाच यथोक्तरीत्या यदैवं तदा तिर्य्यगाद्यखिलसत्त्वानां नियम्यानामीशितुर्नियामकस्य सर्वकर्मणां यथायथं फलप्रदस्य स्वतन्त्रस्य परमात्मना नियम्यानां कुशलाकुशलाभ्यामन्वयो नियम्यतारूपः संबन्धः कुतः । सर्वथा न विद्यते इत्यर्थः ॥ ३४ ॥

किञ्च जीवानामपि तदनधिकारिणां नास्ति कर्मबन्धो यदा परमेश्वरस्य कुतस्तत्संभव इत्याह ।

यत्पादपङ्कजपरागनिषेवतृप्ता
योगप्रभावविधुताऽखिलकर्मबन्धाः ॥
स्वैरं चरन्ति मुनयोऽपि न नह्यमाना-
स्तस्येच्छयात्तवपुषः कुत एव बन्धः ॥ ३५ ॥

यदिति ॥ यस्य भगवतः पादपद्मयोः परागाणां कान्तिलक्षणरेणूनां नितरां सेवनेन ध्यानादिना तृप्ता अन्यत्र जाताऽलम्प्रत्यया यत्पादपङ्कजपरागेषु निषेवो येषां ते च ते तृप्ताश्चेति वा । एवम्भूता भागवतप्रधानास्तथा ज्ञानयोगप्रभावेण विधुता निराकृता अखिलकर्मणां बन्धो येषां ते तत्त्वज्ञा मुनयोऽपि न नह्यमानाः कर्मभिरबध्यमानाः स्वैरं विधिनिषेधककर्म्मविनिर्मुक्ताश्चरन्ति तस्य स्वेच्छया स्वीकृतनरदेहस्य परमेश्वरस्यैव कुतो बन्धः । सर्वथाऽपि तत्र नाऽऽशङ्कनीयमित्यर्थः । यद्वा, यद्भक्ता लब्धज्ञाना मुनयोऽपीति व्याख्येयम् ॥ ३५ ॥

एवं गोपीनां परदारत्वं तदभिमर्शनजन्यदोषं चाङ्गीकृत्य समाहितम् । वस्तुतस्तु नास्ति तासां परदारत्वमतो नास्ति तत्सेवाकृतदोषगन्धोऽपीत्याह ॥

गोपीनां तत्पतीनां च सर्वेषामेव देहिनाम् ॥
योऽन्तश्चरति सोऽध्यक्षः क्रीडनेनेह देहभाक् ॥३६॥

गोपीनामिति ॥ यः गोपीनां तत्पतीनां च, किञ्च, सर्वेषामेव देहिनामन्तर्जीवरूपेणान्तर्यामिरूपेण चरति स एवाध्यक्षस्तद्देहादिनियन्ता क्रीडनेन क्रीडार्थं देहभाक् गृहीतलीलाविग्रहो, न त्वस्मदादिवत् कर्मभोगाद्यर्थं देहभाक् । अतो नास्ति तत्र दोषगन्धस्य शङ्कापीति भावः ॥ ३६ ॥

नन्वस्त्वेवं, तथापि लोकदृष्ट्या निन्दितस्य कर्मणोऽनुष्ठाने भगवतः कोऽभिप्राय इति चेत् तत्राह ।

अनुग्रहाय भूतानां मानुषं देहमास्थितः ॥
भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेत् ॥३७॥

अनुग्रहायेति ॥ भूतानां संसारिणामनुग्रहाय मानुषदेहमास्थितः । अतस्तादृशीः क्रीडा भजते याः श्रुत्वा तत्परः स्वक्रीडानुसन्धानपरो भवेत् । तथाच शृङ्गाररसाकृष्टचेतसोत्पन्नबहिर्मुखा अपि मत्परा भूत्वा उद्धृताः स्युरित्यभिप्रायेण तदाचरणमिति भावः॥३७॥

नन्वेवं प्रवृत्ते भगवति तत्पतीनामसूया कथं नोत्पन्नेत्याशङ्क्याह ।

नासूयन् खलु कृष्णाय मोहितास्तस्य मायया ॥
मन्यमानाः स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकसः ३८

नेति ॥ व्रजौकसां तत्पतयः कृष्णाय नासूयन् यतस्तस्य योगमायया मोहिताः । ननु कोऽसौ मोहो मूर्च्छारूपः किं वाऽन्यथा भावरूप इत्यपेक्षायामाह ॥ स्वस्वान् दारान् स्वपार्श्वस्थान् मन्यमानाः । एतेनान्येऽपि भिन्नाचाराः स्वचेष्टितमेव वदन्तीत्याशङ्कापि निरस्ता । यथोक्तैश्वर्यरहितानामन्यथाचरणे पापिष्ठत्वावग-

भाव । तस्माद्, न देवचरितं चरेदित्युक्तत्वादेवंविधा प्रवृत्तिर्न कस्यापि मनुष्यस्य भवतीति भावः ॥ ३८ ॥

इतः परं संशयमनुचितं मन्यमानः खिन्नचित्तः श्रीशुको रासक्रीडावर्णनमुपसंहरति ।

ब्रह्मरात्र उपावृत्ते वासुदेवाऽनुमोदिताः ॥
अनिच्छन्त्यो ययुर्गोप्यः स्वगृहान् भगवत्प्रियाः ॥३९॥

ब्रह्मरात्रे इति ॥ ब्रह्मरात्रौ समासान्त आर्षः । सत्यसङ्कल्पस्य भगवतः सङ्कल्पवशाद् यामचतुष्टयात्मिकायां रजन्यां सहस्रयुगपरिमिते यथोक्तलीलानिर्वाहके काले उपावृत्ते सम्यग् एकाम् आवृत्तिं गते सति । नचात्र विस्मयः कार्यः । भगवद्योगमायया सर्वसम्भवात् । तथाच यथा वृन्दावनस्य कस्मिँश्चित् प्रदेशे असंख्यातानि ब्रह्माण्डानि प्रतिष्ठितानि ब्रह्मणा दृष्टानि । यथा वा बाल्ये स्थितस्य स्वल्पस्य स्वोदरस्योपर्यपरिमितानि दामानि बद्धान्यऽवलोकितानि व्रजौकोभिः । यथा वा भगवन्मुखे चतुर्दशभुवनानि दृष्टानि श्रीयशोदया । तथा स्वल्पदेशे क्रीडायोग्यदेशस्य स्वल्पे काले तद्योग्यकालस्य चानुभवे नास्ति किञ्चिदपि चित्रम् । ब्रह्मरात्रेर्ब्राह्मे मुहूर्ते उपावृत्ते सतीत्यनेन वासुदेवेनाऽनुमोदिताः । वासुदेवपदेनान्तरवस्थितेन तेन तासामन्तरगमनोद्योगं स्वयमेवोत्पाद्य बहिरप्यनुमोदिताः । अत एवानिच्छन्त्योऽपि स्वगृहान् ययुः । भगवानेव प्रियो यासां ताः । तथाच गमनागमनाभ्यां भगवत्प्रियमेव यासां सम्पाद्यमिति भावः । यद्वा स्वगृहान् प्रति गता अपि भगवतः प्रीतिविषया एवेति भावः ॥ ३९ ॥

अथ भगवतः कामविजयरूपसर्वलीलावतंसरासक्रीडाश्रवणादेर्यथायोग्यपरमोत्कृष्टं फलमाह ॥

विक्रीडितं व्रजवधूभिरिदं हि विष्णोः
श्रद्धान्वितोऽनुशृणुयादथ वर्णयेद् यः ॥
भक्तिं परां भगवति प्रतिलभ्य कामं
हृद्रोगमाश्वपहिनोत्यचिरेण धीरः ॥ ४० ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे रासक्रीडा-
नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

विक्रीडितमिति ॥ इदं मया वर्णितं व्रजवधूभिर्विष्णोः पूर्ण-स्य क्रीडानुरूपरूपाणि प्रकटीकृत्य विविधं क्रीडितं श्रद्धान्वितः सर्वलोकोद्धारार्थमाप्तकामेन भगवतेदं विक्रीडनं कृतमिति विश्वास-युक्तः योऽनु निश्चयेन संशयकलङ्करहितः शृणुयात् अनुदिनं वा शृणुयात् । अथ तथा यः कीर्तयेत् स भगवति परां प्रेमलक्ष-णां भक्तिं प्रतिलभ्य भगवदनुग्रहादचिरेण धीरस्तत्त्ववित् सन् हृ-द्रोगं सर्वानर्थभूतं काममाशु शीघ्रमपहिनोति परित्यजति । तथाच सर्वानर्थनिवृत्तिपरमानन्दप्राप्तिरूपपरमपुरुषार्थफलकोऽयं पञ्चाध्या-यात्मको ग्रन्थः परमादरेण श्रोतव्यो वर्णयितव्यश्चेति भावः ॥४०॥

श्रुतिगोपाङ्गनाभिर्यः क्रीडते सत्सु मानसे ॥
वन्दे तं धनपत्याख्यो नौमि कृष्णं पदात् परम् ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपाद-
शिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृतायां
श्रीमद्भागवतगूढार्थदीपिकायां दशमस्कन्धे
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

G. THIBAUT, PH. D.

*Nos. 131, 142 & 146.*

---

श्रीमद्भागवतदशमस्कन्धस्थरासपञ्चाध्यायीव्याख्या।

# गूढार्थदीपिका।

पण्डितवर–श्रीधनपतिसूरिकृता।

रसव्याख्या च।

श्रीमदाचार्यश्रीवल्लभाधीश्वर–श्रीविट्ठलनाथदीक्षितशुद्धाद्वैत-
संप्रदायविदुषा रत्नगोपालभट्टेन परिशोधिते।

# GÛḌHÂRTHADÎPIKÂ,

A Commentary on Râsa Panchâdhyâyî
of the Tenth Chapter of Śrîmad Bhâgawata,
BY PANDIT DHANAPATI SÛRI;

*And RASAVYÂKHYÂ.*

*Edited By Ratna Gopâl Bhaṭṭa.*

---

BENARES:
*Published by the Proprietors Messrs. Braj B. Das & Co.*
AND SOLD BY H. D. GUPTA,
*Secretary, Chowkhamba Sanskrit Book Depot.*

---

Printed at the Vidyâ Vilâs Press
By Harikrishna Dasa.
BENARES.

1908.

श्रीगणेशाय नमः ।

श्रीमद्भागवतीय–जन्माद्यस्येत्याद्यश्लोकविवृतिः ।

# रसव्याख्या ।

विद्वद्वरश्रीजगन्नाथसुधीविनिर्मिता ।

---

अथ कलिमलकलुषीकृतचित्तानां कलियुगोत्पन्नानां जनानामञ्जसा श्रेयस्समधिगन्तुकामानां तत्प्राप्तये परमकारुणिको भगवान् बादरायणो भगवद्गुणवर्णनप्राधान्येन परमधर्म्मप्रतिपादकं श्रीमद्भागवतं पुराणम्प्रारिप्सुस्तत्प्रतिपाद्यं सत्यात्मकं परमधर्म्मं ध्यायन् ग्रन्थसमाप्तिप्रचयगमनाभ्यामन्यानुपाशिक्षयन्नादौ मङ्गलमाचरति ।

ॐ जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञस्स्वराट्
तेने ब्रह्महृदा य आदिकवये मुह्यन्ति यत्सूरयः ॥
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १ ॥

ॐ जन्मेति ॥ अत्रेत्थं व्यवस्था । कृतयुगे साङ्गश्चतुष्पाद्धर्मः त्रेताऽऽदिषु क्रमेण पादशो हीनत्वात् कलौ धर्म्मपादः सत्यमेवाऽवशिष्यते । पादास्तु– तपः शौचं दया सत्यमिति पादा विभोर्नृपेति । इदानीं धर्म्मपादस्ते सत्यं निर्वर्तयेद्यत इति चात्रैव वक्ष्यति । तच्च मुख्यं सत्यं भगवता निर्णीतम् । सत्यञ्च समदर्शनमिति । समशब्दो ब्रह्मवचनः । निर्दोषं हि समं ब्रह्मेति च भगवद्-

वचनात् । तस्य चाऽतिदुष्करत्वात् तत्साधनत्वेन वेदविद्भिः सत्यं परिभाषितम् । तथाहि पाद्मे । दृष्टानुभूतमर्थश्चेदिष्टानिष्टं न गूहते * यथा भूतप्रवादो हि इत्येतत् सत्यलक्षणम् । तथा सत्यप्रतिपादकत्वात् सत्यविषयत्वात् सत्यप्रापकत्वाच्च नामसङ्कीर्तनादि भगवद्भजनमेव सत्यम् । अतो द्वापरान्ते पुराणविभागात् कलियुगोत्पन्नानामेवोपकारकत्वं मुख्यमभिप्रेत्य सत्यप्रधानत्वमेवास्य पुराणस्य युक्तम् । अन्येषां ज्ञानादीनां युगान्तरीयाधिकारविषयत्वेनात्राप्युदाहरणत्वेनेदानीन्तनानां प्रायशोऽनधिकारित्वाच्चानुवादरूपत्वं संगच्छते । तथा ह्यत्रैव प्रतिज्ञायामनन्तरपद्ये, धर्म्मः प्रोज्झितकैतवोऽत्र परम इत्यादि । अन्यत्र च, रामेति वर्णद्वयमादरेण सदा स्मरन्मुक्तिमुपैति जन्तुः * कलौ युगे कल्मषमानसानामन्यत्र धर्म्मे खलु नाधिकारः ॥ हरेर्नामैव नामैव नामैव मम जीवनम् कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥ कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेदित्यादि । तथाच मनुः, सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम् * प्रियञ्च नानृतं ब्रूयादेष धर्म्मः सनातनः ॥ इत्यादि च शतशः प्रमाणानि सन्ति । तेनेत्थं व्याख्या सम्भवति । यथा— सत्यं सत्यात्मकं धर्मं धीमहि ध्यायेम । तत्रैवोभयविधसत्यात्मके धर्म्मेऽस्माकं चित्तवृत्तिरस्तु । सत्यस्य समानाधिकरणं विशेषणद्वयम् । यथा, परं सर्वधर्म्मोत्कृष्टम् । तथाच गायत्रीभाष्ये, नास्ति सत्यात् परो धर्म्मो नानृतात् पातकं परम् * न गायत्र्याः परो मन्त्रो न देवः केशवात् पर इत्यादि । पुनः धाम्ना स्वेन सदा निरस्तकुहकम् ॥ स्वेन धाम्ना स्वरूपेण प्रभावेन वा, सदा कालत्रयेऽपि निरस्तकुहकम् । निरस्तः कुहको माया यस्मिन् येन वा तत् । एवञ्च सप्तभिर्व्यधिकरणविशेषणैः सत्यस्य परमत्वं स्फुटयति ॥ जन्माद्यस्य यतोऽन्वयादिति ॥ यतो

यस्य सत्यस्य अन्वयात् संबन्धाद् अस्य श्रीवासुदेवस्याऽपि जन्मादि श्रीमूर्तिप्रादुर्भावो, मनुष्यनाट्यञ्च, भवतीति शेषः । अनेन भगवद्वशीकरणत्वं भगवत्प्रापकत्वञ्चास्य सत्यस्योक्तम् । वक्ष्यति च, सत्यव्रतं सत्यपरं त्रिसत्यमित्यत्र । चः समुच्चये । पुनः, स्वराट् ॥ स्वेन स्वयमेव राजते, न तु द्रव्यदेशादिसाधनैः । अनेन पूर्णत्वं सुसेव्यत्वञ्चोक्तम् । पुनः, यः सत्यात्मको धर्म्मः कवये स्वनिपुणाय, ब्रह्महृदा वेदरहस्येन, उपासनया सह, आदिं सर्वकारणकारणं ब्रह्म तेने प्रकाशितवान् स्वनिष्ठेभ्यः । एतेन भूतनिर्देशेनाऽस्य प्रमाणसिद्धत्वमुक्तम् । नाऽस्त्यत्र प्रमाणाऽन्तरापेक्षा ऐतिह्यस्यापि प्रमाणत्वात् । कथम्भूतम् ॥ आदि ॥ यत्र अप्रादि प्रति सूरयो मुह्यन्ति तत् । अनेनाऽलभ्यप्रापकत्वमुक्तम् ।

पुनः, इतरतः । षष्ठीबहुवचने तसिल् । इतरेषां सकामानाम् अर्थेषु प्रयोजनेषु धर्म्माऽर्थकामेषु अभिज्ञः । तद्दातृत्वेन निपुणः । अनेन चतुर्वर्गप्रदत्वेन सर्वोपकारकत्वं सर्वसेव्यत्वञ्च दर्शितम् । पुनः यत्र-यस्मिन् सत्ये सति त्रिमर्गस्त्रयाणां तपःशौचदयानां सर्गो विस्तारः अमृषा सत्यम् । यथा तेजोवारिमृदां सर्गो विस्तारः सत्ये सत्येव अविनिमयो भवति व्यावहारिकसत्यतापन्नो भवति तथेति दृष्टान्तः । सत्याभावे तपआदीनां दम्भहेतुत्वेनानर्थप्रापकत्वात् । एवं यत्तदोर्नित्यसंबन्धत्वेन तं सत्यात्मकं धर्म्मं धीमहीति योज्यम् ॥ १ ॥

यद्वाऽनेन पद्येन वर्णनीयस्यास्य महापुराणस्य दशलक्षणत्वं स्मरन्, तेषु च नवभिर्लक्षणैर्लक्षितं श्रीवासुदेवं समग्रग्रन्थगोचरं ध्यायन् मङ्गलमाचरति ॥ जन्मेति ॥ तानि च द्वितीये वक्ष्यमाणानि । यथा, अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः मन्वन्तरेशाऽनुकथा निरोधो मुक्तिराश्रयः ॥ दशमस्य विशुद्ध्यर्थं

नवानामिह लक्षणम् । वर्णयन्ति महात्मानः श्रुतेनाऽर्थेन चाञ्जसा इति ॥ यतः ॥ चतुर्थीस्थाने तसिल् । यस्मै यं श्रीवासुदेव-मनुकूलयितुं ज्ञातुं वा । सति शोभनेऽत्र पुराणे, आद्यस्य महदादिकरणवर्गस्य जन्म वर्ण्यते इति शेषः । तेन भूतमात्रेन्द्रियधियां जन्मसर्ग उदाहृत * इत्युक्तलक्षणः सर्गो वर्ण्यते इत्यर्थः । चेति समुच्चये । पुनः, अन्वयादितरः । अन्वयो वंशविस्तारस्तस्यादि-र्ब्रह्माऽन्वयादिरतिशयेनान्वयादितरः पुरुषावतारः । विसर्गो व-र्ण्यते । विसर्गः पौरुषः स्मृत इति । पुनः, अर्थेषु तत्तल्लोकपालनेषु प्रयोजनेषु अभिज्ञो निपुणस्तत्तल्लोकपालो वर्ण्यते । स्थितिर्वैकुण्ठ-विजय इति । पुनः स्वराट् ॥ स्वे भक्ता राजन्तेऽनेन । स्वै राजते इति वा । स्वराट् । अनेन पोषणं वर्णितम् । पोषणं तदनुग्रह इति । पुनः, ब्रह्म वेदं तज्जन्यज्ञानं वाहरतीति ब्रह्महृत् । वासना ऊतिपदवाच्या वर्णिता । ऊतयः कर्म्मवासना इति । यत् यस्मि-न् सूरयो विद्वांसोऽपि मुह्यन्ति । अर्थात् सद्धर्म्मो मन्वन्तरपदवा-च्यो वर्ण्यते । मन्वन्तराणि सद्धर्म्म इति । पुनः, यैर्भगवदवतारै-स्तद्भक्तैश्च तेजोऽवारि भवसिन्धुशोषणं कर्म्म स्वीकृतं ते च ईशा वर्ण्यन्तेऽर्थात्तेषां कथा इत्यर्थः । अवतारानुचरितं हरेरस्यानुवर्त्ति-नाम् * पुंसामीशकथाः प्रोक्ता नानाख्यानोपबृंहिता इति । पुनः यत्र निरोधे मृदां मर्द्दयन्ति पीडयन्ति भूतानीति मृदो दुष्टरा-जानस्तेषां यथा यथावद्विनिमयो विनाशो निरोधपदार्थो वर्णितः । निरोधोऽस्यानुशयनमात्मनः सहशक्तिभिरिति । यत्रेति पदमुभ-यत्र सम्बध्यते । यत्र यस्यां मुक्तौ त्रयाणां गुणानां सर्गोऽमृषा वा मृषा भवति सा मुक्तिर्वर्ण्यते । मुक्तिर्हित्वान्यथा रूपं स्वरूपे-ण व्यवस्थितिरिति । पुनः, स्वेन धाम्ना सदानिरस्तकुहकं ब्रह्म श्रीवासुदेवः । आश्रयपदार्थो वर्ण्यते । आभासश्च निरोधश्च यतश्चा-

ऽध्यवसीयते * स आश्रयः परं ब्रह्मः परमात्मेति शब्द्यते इति तम् अं श्रीवासुदेवं धीमहीति सम्बन्धः । अस्यैव समानाधिकरणविशेषणं–परमिति ॥ चतुर्व्यूहनवव्यूहोपास्येषु श्रेष्ठम् । व्यधिकरणविशेषणद्वयम् ॥ आ इति ॥ आसतेऽस्मिन् भूतानीति । आः । क्विबन्तस्यास्ते रूपम् । पुनः यः श्रीवासुदेवः कवये उपासकाय आदि सर्वकारणं स्वरूपं ब्रह्म तेने प्रकाशितवान् । एतेन वासुदेवस्मरणेनाऽस्य वाचकस्य द्वादशाक्षरमनोर्विवरणरूपमिदं पुराणं, तेनैव च मन्त्राक्षरसमसंख्यस्कन्धकल्पनञ्च प्रतीयते इति ॥ २ ॥

यद्वा, न पूज्यते गुरुर्यत्र नरैस्तत्राफला क्रिया इति स्मृतेः, यस्य देवे परा भक्तिर्यथा देवे तथा गुरावित्यादिश्रुतेश्च भगवान् वेदव्यासोऽन्यानुपशिक्षयन् स्वयमपि स्वगुरुं श्रीनारदं नमस्यँस्तदनुस्मरणात्मकं मङ्गलमाचरति ॥ जन्मेति ॥ यः श्रीनारदः, आदिकवये श्रीवाल्मीकये, हृदा नमस्कारमात्रेणैव ब्रह्म श्रीरामस्वरूपं तेने तं धीमहि । अनेन स्वगुरोः परमकृपालुता बोधिता । कथम्भूतो यः, जन्माद्यस्य यतोऽन्वयात् । यतो यस्य श्रीनारदस्यान्वयात् सन्ततेरस्य वर्णनीयत्वेनोपस्थितस्य श्रीभागवतपुराणस्य जन्मादिं । जन्म आदिर्यस्यास्तितत्वलक्षणस्य तज्जन्मादि भविष्यतीति शेषः । नित्यस्यापि श्रीभागवतस्य लोकेऽस्मिन्नप्रसिद्धत्वात् प्रादुर्भावमात्रं मत्तो भविष्यतीत्यर्थः । स्वगुरोः सर्वज्ञतामाह, पदाभ्याम् ॥ इतरतः, अर्थेष्वभिज्ञ इति ॥ इतं ज्ञानं तत्र रतः प्राप्ताऽनुरागो विषयवैतथ्यदर्शनात् । ज्ञानञ्च शास्त्रीयम् । यथाह—परोक्षमपरोक्षञ्च ज्ञानं द्विविधमिष्यते * परोक्षमस्थिरं प्रोक्तमपरोक्षं तु सुस्थिरम् ॥ हेतूपदेशगम्यञ्च परोक्षं तत् प्रचक्षते । अपरोक्षं पुनः श्रेष्ठादनुष्ठानात् प्रजायते इति । तत्र परोक्षज्ञानं दर्शितमपरोक्षमाह ॥ अर्थेष्वभिज्ञ इति ॥ अर्थो वस्तु परमात्मा तस्मिन्निष्वभिज्ञः ।

यथा धनुर्धरो जनो लक्ष्यवेधनार्थमिषुप्रयोगं चिरमभ्यस्य इष्ववभिज्ञो भवति, तथा श्रीनारदोऽपि बहुजन्मसु भगवति लक्ष्ये मनइषुमभ्यस्य इदानीं तथा जात इति । तज्ज्ञापकं तस्य परमानन्दस्वमाह ॥ स्वराडिति ॥ स्वरैर्निषादर्षभादिभिः सहाऽटतीति । अत एव, विनिमयः ॥ परिदानं परीवर्तो नैमेयनिमयावपीत्यमरः । विगतो निमयो विपर्य्यासो यस्य सः । अनेनास्य सर्वदाऽद्वयावस्थानमुक्तम् । एतदेव स्फोटयति ॥ यत्र यस्मिन् श्रीनारदे त्रिसर्गो मृषा त्रयाणां जाग्रदादीनां सर्गः स्वभावो मृषा । सदा समाहितत्वात् । यच्छब्दानां तदा(१) सम्बन्धः । तं परं भगवद्भक्तेषु श्रेष्ठं सत्येऽभिनिविष्टत्वाच्च सत्यं धीमहि । निर्गुणस्य ब्रह्मणो रामस्वरूपत्वाय तं विशिनष्टि ॥ यथा येन श्रीरामस्वरूपेण ब्रह्मणा, मृदां मर्दयन्तीति मृदो रावणादयो राक्षसास्तेषां तेजोऽवारि स्वीकृतं नाशितं वा । ननु तादृशानां नाशायेच्छामात्रमेवालं किमिति प्राकृतसदृशेन रूपेणेत्यत्राह ॥ धाम्ना स्वेन सदा निरस्तकुहकम् ॥ स्वेन धाम्ना श्रीरामविग्रहेण सतां साधूनाम् । आ सम्यग् निरस्तः कुहको येन तत् । एतेन, परित्राणाय साधूनां विनाशाय च दुष्कृताम् * धर्मसंस्थापनार्थाय सम्भवामि युगे युगे इति स्वप्रतिज्ञा निष्पादिता । कथम्भूतास्ते ॥ मुह्यन्ति यत्सूरयः ॥ यत् येषु मृत्सु सत्सु सूरयों विवेकिनोऽपि मुनयो मुह्यन्ति । वर्तमाननिर्देशेनाद्यापि तत्तुल्यै राजसतामसस्वभावैर्मुह्यन्तीति प्रत्यक्षं ज्ञापितम् । अत एव तादृशस्य श्रीरामचन्द्रस्य नामकर्माऽऽदिकीर्तनैरद्यापि ते नश्यन्तीति ॥ ३ ॥

यद्वाऽनेन पद्येन सर्वेषां भगवद्भगवदीयानां पदार्थानां स्वरूपं नमस्कुर्वन् वक्तव्यत्वेन च हृदि ध्यायन् मङ्गलमाचरति ॥

(१) तदा=तच्छब्देन ।

जन्मेति ॥ यतो याभ्यां देवकीवसुदेवाभ्यां यत्र येषु च स्थानेषु मथुरागोकुलवृन्दावनद्वारकादिसंज्ञेषु, अस्य सर्वकार्यैककारणात्मकस्याखण्डस्वरूपस्य । यद्वा, अकारो वासुदेवः स्यादित्येकाक्षरात्, श्रीवासुदेवस्य वस्तुतो जन्मादिशून्यस्यापि जन्मादि अभूदिति शेषः । आदिशब्देन वृद्धिस्थितिबाल्यकौमारादिस्वर्गारोहणान्ता लीला गृह्यन्ते । अनु पश्चाज्जन्मानन्तरं यश्च श्रीवासुदेवो यन्मिथुनं नन्दयशोदारूपम् । अयात् अगमत् । यत्र च यासु लीलासु स्वेन धाम्ना तत्तदधिकारिषु अधिकारतारतम्यतः क्वचिन्निर्गुणसच्चिदानन्दकन्दसन्दोहरूपेण, क्वचित् कोटिकन्दर्पदर्पपरिमर्दनसुन्दरेण श्रीविग्रहेण ब्रह्म ब्रह्मानन्दं तेने । तच्च ताश्च धीमहीति सर्वेषां यच्छब्दानां लिङ्गसमन्वयेन तदा सम्बन्धः । आनन्दं विशिनष्टि ॥ सदा निरस्तकुहकम् ॥ सतां कृष्णक्रीडाकथादिपराणाम् । आ सम्यङ्निरस्तं कुहकमज्ञानं येन तत् । तथा सत्यविषयत्वात् सत्यप्रापकत्वाच्च सत्यम् । परं सर्वसुखाश्रयम् । यदपेक्षयान्यस्य सुखस्य समत्वमधिकत्वञ्च नास्तीत्यर्थः । अत एव तदा तेषां त्रिसर्गस्त्रिविधो भूतेन्द्रियदेवतारूपः सर्गो, मृषा मिथ्याऽभूत् । देहेन्द्रियाध्यासाभावेन सदा समाहितत्वात् । केषाञ्चित्तु अमृषा सत्यं वाऽभूत् ।

ताश्च लीलाः क्रमेण निर्दिशति ॥ यः श्रीकृष्ण इतरेषां वहिर्मुखाणां पूतनादीनामपि, अर्थेषु यथाधिकारं भोगमोक्षलक्षणेषु अभिज्ञो निपुणः स्वयं सम्पादक इत्यनेन राजसतामसदैत्यादिभूभारक्षपणलीला, परमदयालुता च निरूपिता । पुनः, स्वराट् ॥ स्वाश्च स्वे च स्वे एकशेषः । तैः स्वैः वत्सवत्सपालगोपालयादवकौरवादिभिः, गोगोपीयादवीकौरवीप्रभृतिभिश्च कौमाराद्यवस्थासु यथोपयोगं यथावसरं राजते इति स्वराट् । तेन सर्वानुग्राहकत्वं सर्वो-

पास्यत्वञ्च स्वस्य दर्शितम् । विशेषतो ब्रह्ममोहनलीलामाह ॥ कव-ये कवि ब्रह्माणमानन्दयितुम् आदि स्वरूपं प्रपञ्चाञ्चितं प्रपञ्च-वञ्चितञ्च तेने अदर्शयत् । अनेन, सर्वं विष्णुमयं जगत्, नेह नानास्ति किञ्चनेत्यादिश्रुत्यर्थो दर्शितः । ननु किमाशय एवम-तिरहस्यं स्वरूपम् अदर्शयत्, तमाशयमाह ॥ अमुह्यन्ति सूरय इति ॥ सर्वं खल्विदं ब्रह्मेत्यनया श्रुत्या प्रत्यक्षप्रमाणसिद्धस्य प्रपञ्चस्य बाधेन सर्वत्राऽखण्डब्रह्मज्ञानस्यातिदुर्घटत्वात् सूरयो विद्वांसोऽपि मुह्यन्ति । तादृशदर्शने असम्भावनाविपरीतभावना-दिभिर्व्याकुला भवन्ति । अनया लीलया श्रुत्युदाहरणरूपया तु अमुह्यन्ति । अ इत्यव्ययं निषेधे । लिङर्थो लट् लकारश्छान्दसः । तेन सूरयो न मुह्येयुरिति सम्भावयितुं तथाऽदर्शयदिति । तदपि हृदा मनसा सङ्कल्पमात्रेणैव, न बहुप्रयत्नैरिति । विशेषतो रास-लीलामाह ॥ यत्र तेजोवारिमृदां यथा विनिमयो जातः । यत्र रासलीलायामनन्तानन्तमूर्त्तेः स्वस्य तथा श्रीमतीनां गोपीनाञ्च चमत्कृतकन्दर्पकदम्बरुचिरतरमरीचिचयचुम्बितचारुमुखचन्द्रवृन्द-चन्द्रिकासुषमाभिस्तेजसां सकलकलाधरादीनां ज्योतिर्गणानां प्र-काशकानामपि प्रकाश्यभावं तेने । तेन, न यत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः * तमेव भान्तम-नुभाति सर्वं तस्य भासा सर्वमिदं विभातीत्यादिश्रुत्यर्थो दर्शि-तः । तथा निजवेणुकलरवेण वारिमृदां वारिणो यमुनाजलस्य सदा स्वतः प्रसरणस्वभावस्य स्तब्धत्वेन मृद्भावत्वं कठिनत्वं निश्च-लत्वं, तथा मृदां मृद्भेदानां गोवर्द्धनतरुलतानां स्थावराणामचेत-सामपि द्रवपुलकादिना जङ्गमचेतनधर्मत्वञ्च तेने । अनेन कर्तुमक-र्तुमन्यथाकर्तुं समर्थत्वस्येश्वरत्वस्य सूचनेन स्वभक्तानां सर्वथा स-र्वाभीष्टसाधकत्वं व्यञ्जितम् ॥ ४ ॥

यद्वा, अष्टादशसहस्रश्लोकात्मकं श्रीमद्भागवतमालामन्त्रं द्योतयन् मन्त्रदेवतयोश्चाभेदमुपदिशन् भगवान् कृष्णद्वैपायनः श्रीमद्भागवतमेव ध्यायन् मङ्गलमाचरति॥ जन्मेति॥ यत् श्रीमद्भागवतं यतः पुरुषस्य जन्मादि अस्य = निरस्य ब्रह्मस्वरूपं तेने। ब्रह्मैव सन् ब्रह्माप्येतीति श्रुतेः। तद्धीमहीति सम्बन्धः। यतते इति यत् तस्य यतः प्रयत्नं कुर्वतः स्वनिष्ठस्येत्यर्थः। प्रयत्नो नाम, आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रौतः। तत्र श्रवणं तु, उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्। * अर्थवादोपपत्ती च लिङ्गं तात्पर्य्यनिर्णये इत्युक्तषड्लिङ्गैः समग्रग्रन्थस्य तात्पर्य्यावधारणम्। मननञ्च, श्रवणावधारितेऽप्यर्थे रजस्तमोभ्यां प्राप्तस्यासम्भावनाविपरीतभावनादेस्तत्तदुक्तयुक्तिभिर्निरासः। निदिध्यासनं तु, संशयादिशून्यस्य शास्त्रार्थस्याविच्छिन्नधाराप्रवाहेनाऽनुचिन्तनमिति। अस्येत्यत्र असुधातोः क्त्वाप्रत्ययस्य समासं विनाऽपि ल्यबादेशश्छान्दसः। आदीति ब्रह्मविशेषणम्। अनेनैव सांख्याभिमताः षड्भावविकारा निरस्ताः। चेति समुच्चये। पुनः यत्पदोक्तस्य श्रीभागवतस्य सर्वशास्त्रेभ्यः सर्वथा श्रेष्ठत्वप्रतिपादकानि समानाधिकरणानि षड्विशेषणानि। यथा– अन्वयात्, इतरतः, अर्थेष्वभिज्ञः, स्वराट्, धाम्ना स्वेन सदा निरस्तकुहकं, सत्यं परम् इति। तत्र, अन्वयः = सन्ततिः। सन्ततिर्गोत्रजननकुलान्यभिजनान्वयावित्यमरः। सा हि द्विधा। पुत्रपौत्रादिरूपा, शिष्यप्रशिष्यादिरूपा च। अन्वयेन शिष्यादिसन्तत्या अत्यते गम्यते प्राप्यते वा इत्यन्वयात्। यद्वा अनु प्रतिपदम् अयं शुभाऽदृष्टं धर्म्मादिजनकम् आतयति प्रापयतीति अन्वयात्। यद्वा, अन्वयमनादिसंसारसम्बन्धम् अत्तीति अन्वयात्, संसारनिवर्तकमित्यर्थः॥ इतरत इति॥ इतं ज्ञानं राति ददातीति

इतरं, प्रथमैकवचने तसिल् । अनेन संसारनिवर्तकत्वमुपपादितम् । यद्वा, अन्वयादितरत इत्येकमेव पदम् । तत्र पञ्चैव विशेषणानि । अत्र पक्षे अन्वयस्य संसारसम्बन्धस्य आदि मूलाज्ञानं, तद् तरतः तर्तुकामस्येति षष्ठ्यन्तम् । यत इत्यस्य विशेषणम् । पुनः, अर्थेष्वभिज्ञः स्वराट् इति पदद्वयम् । अर्थेषु प्रकरणाऽभिधेयेषु ये अभिज्ञा उपक्रमाद्युक्त्या तात्पर्य्यावधारणचतुरास्तेषु स्वेन स्वरूपेण राजते इति । यद्वा, एकमेव पदम् । अत्र अर्थोऽवधारितं वस्तु परमात्मा । तस्मिन्नर्थेष्वभिज्ञास्तल्लक्ष्यसाधने दक्षास्तेषु स्वराट् । तदुक्तं कठोपनिषदि– आत्मानं रथिनं विद्धीत्यादिना । अत्रापि वक्ष्यति–आहुः शरीरं रथमिन्द्रियाणि हयानभीषून् मन इन्द्रियेशम् ॥ वर्त्मानि मात्रा धिषणां च सूतं सत्त्वं बृहद्बन्धुरमीशसृष्टम् ॥ अक्षं दशप्राणमधर्मधर्म्मौ चक्रेऽभिमानं रथिनं च जीवम् । धनुर्हि तस्य प्रणवं पठन्ति शरं तु जीवं परमेव लक्ष्यमिति ॥ श्रीभागवतस्वरूपञ्च गौरीतन्त्रे श्रीशिवेनोक्तम् - प्रथमश्च द्वितीयश्च चरणौ द्वौ प्रकीर्तितौ ॥ तृतीयश्च चतुर्थश्च द्वावूरू समुदीरितौ ॥ पञ्चमो नाभिदेशश्च षष्ठो हृदयमेव च । सप्तमश्चाष्टमश्चैव बाहू द्वौ परिकीर्तितौ ॥ नवमः स्कन्धदेशः स्याद्दशमो मुखमुच्यते । एकादशो भालतटं द्वादशस्तु शिखोच्यते ॥ एवं सर्वं भागवतं श्रीहरेर्मूर्तिरुच्यते । रसिकास्तद्विजानन्ति नान्येषां पदमत्र हीति ॥ यद्वा तत्स्वरूपमत्रैव वक्ष्यति । यथा, कृष्णे स्वधामोपगते धर्म्मज्ञानादिभिः सह ॥ कलौ नष्टदृशामेष पुराणार्कोऽधुनोदित इति । अत्रेदं तत्त्वम् । त्रिलोकतिमिरहर्ताऽर्को हि त्रिलोक्या एव, बाह्यमेव, दिनेष्वेव, सावशेषमेव, अतिरोहितमेव तमो हन्ति, न सदा सर्वतः । अयन्तु श्रीमद्भागवताऽर्को ब्रह्माद्यनन्तान्तस्य लोकस्याऽऽभ्यन्तरं तिरोहितमपि तमः सर्वदा सर्वप्रकारेण निःशेषमेव हन्तीति द्वितीय-

थार्कोदयो विफल इत्यपि नाऽऽशङ्कनीयमिति।

अस्यार्करूपकत्वमित्थमनुसन्धेयम्। गगनमण्डलस्थो हि सूर्य्यो, द्वादशात्मा शीघ्रमन्दसमगतिभिश्चलन् लघुदीर्घसमदिनानि प्रकटयन् षट्सु ऋतुषु रसविशेषान् शीतोष्णादीननुभावयति तथा श्रीमद्भागवतार्कोऽपि द्वादशस्कन्धाऽऽत्मा कर्मज्ञानोपासनागतिभिश्चरन् भोगमोक्षप्रेमभक्तिसुखानि प्रकाशयन् षट्सु ज्ञानेन्द्रियेषु लोकोत्तरान् रसविशेषाननुभावयतीति। पुनः, धाम्ना स्वेन सदा निरस्तकुहकम्॥ स्वेन धाम्ना स्वरूपेण सघनघनश्यामद्विभुजमुरलीधरवासुदेवरूपेण उक्तार्करूपेण वा सतां स्वनिष्ठानाम् आ सम्यग् निरस्तं कुहकं येन तत्। पुनः सत्यं सत्यविषयत्वात्। पुनः परम्। उक्तयुक्त्या सर्वशास्त्रोत्तरम्। अयं भावः। भगवान् वेदव्यासो द्वापरान्ते वेदेतिहाससप्तदशपुराणानि विभज्य विचार्य्यापि आत्मप्रसादमलभमानस्तत्र तत्रापरितुष्यन् परमकारुणिकतया सर्वेभ्यो वेदेतिहासपुराणादिभ्यः सारं सारं समुद्धृत्याधिकारिजनचित्तप्रसादायैतत्पुराणञ्चकार। प्रथमस्कन्धे प्रथमाध्याये ऋषीणां प्रश्नः। त्वया खलु पुराणानीत्यारभ्य, अतः साधोऽत्र यत् सारं समुद्धृत्य मनीषया * ब्रूहि नः श्रद्दधानानां येनाऽऽत्मा सुप्रसीदतीत्यादिः। दशमस्कन्धे, इत्यशेषसमाम्नायपुराणोपनिषद्रसः * समुद्धृत इत्याद्यभ्यासश्च। सर्ववेदान्तसारं हि श्रीभागवतमिष्यते * इत्युपसंहारश्चेममेवाऽर्थमावेदयतीति। ननु, तेने इति भूतनिर्देशेन इदानीन्तनेषु स्वरूपं न प्रकाशयतीत्येवात्रगम्यते। तत्राह॥ मुह्यन्ति यत्सूरय इति॥ ये शास्त्रकुशलाः सूरयो हृदा नमनेन। उपलक्षणमेतच्छ्रवणादीनाम्। श्रवणादिभक्तिरसावेशेन मुह्यन्ति रसविवशा भवन्तीति वर्तमाननिर्देशेन तेषाञ्च सदैव तनोतीत्याक्षिप्यते इति। रसविवशत्वञ्चालङ्कारविद्भिः सात्त्विकगुण-

त्वेनोक्तम्। यथा, स्वेदस्तम्भोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः * वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मता इति। अत्रापि च— यदा विकारो नेत्रे जलं गात्ररुहेषु हर्ष इति। गौरीतन्त्रे च, रसिकास्त-द्विजानन्ति, नान्येषां पदमत्र हि * इति। पुनः कथम्भूतम्॥ यत्र त्रिसर्गो मृषा इति॥ यत्र यस्मिन् भागवते विचारिते इति शेषः। तिसृणामवस्थानां जाग्रदादीनां सर्गः स्वभावो विश्वादि-र्मृषा भवति। तुरीयस्यैव सत्यत्वात्। यद्वा, त्रयाणां कायिकादीनां कर्म्मणां सर्गस्त्यागः सन्न्यासो मृषा भवति। तेषामपि भगवद-र्पितत्वेन भक्तिद्वारा तत्त्वज्ञानपर्य्यवसायित्वात्। वासुदेवे भ-गवति भक्तियोगः प्रयोजितः * जनयत्याशु वैराग्यं ज्ञानञ्च यद-ऽहैतुकमिति वचनात्। यद्वा, त्रयाणां ब्रह्मादीनां भेदयुक्तानां सर्गो निश्चयो मृषा भवति। वस्त्वैक्यविकाशेनौपाधिकभेदस्यावास्तव-त्वात्। यद्वा त्रयाणां गुणानां सर्गः सृष्टिः। सर्वोऽपि प्रपञ्चो मृषा भवति। अज्ञानकार्य्यस्य ज्ञानैकनिवर्त्यत्वाद् रज्जुसर्पवदिति। अत्र दृष्टान्तः॥ कवये तेजोवारिमृदां यथा विनिमय इति॥ क-वये कवेः, तदर्थं वा। कविरत्र सांख्यादिशास्त्रज्ञः। विनिमयो-ऽन्यस्मिन्नन्यप्रतीतिः। तेनाऽयमर्थः। तेजसो महाभूतभेदस्य वि-निमयो ग्रहनक्षत्रदीपादिः। वारिणो विनिमयो फेनोपलतुषारादिः। मृदो विनिमयो नगवृक्षादिः। ते तु अतिमूढस्य वस्तुतस्तत्त्वान्तर-तया प्रतीयन्ते। कवेस्तु कार्य्यकारणभावेन कारणतयैव प्रतीयन्ते। यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं भवति। वाचारम्भ-णं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिश्रुतेः। कार्य्यकारण-वस्त्वैक्यमर्शनं पटतन्तुवद् * इतिस्मृतेश्च। तथा श्रीमद्भागवते वि-चारिते सर्वाण्यपि कार्य्यकारणानि परमकारणतया प्रतीयन्ते इति। नेह नानास्ति किञ्चन, सर्वं खल्विदं ब्रह्मेत्यादि। तथा सर्वं

विष्णुमयं जगत्, सकलमिदमहञ्च वासुदेवः, वासुदेवः सर्वमिति स महात्मा सुदुर्लभ इत्यादिश्रुतिस्मृतिसारार्थस्यैवाऽत्र प्रतिपादनात्। द्रव्यं कर्म्म च कालश्च स्वभावो जीव एव च * वासुदेवात् परो ब्रह्मन्नचान्योऽर्थोऽस्ति तत्त्वत इत्यादिष्विति ॥ ६ ॥

यद्वा, यत्राधिकृत्य गायत्रीं वर्ण्यते धर्म्मविस्तरः * वृत्रासुरवधोपेतं तद्भागवतमिष्यते इति मत्स्यपुराणात्। तथा, ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः * हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा। गायत्र्या च समारम्भस्तद्वै भागवतं विदुरिति वामनपुराणात्। गायत्रीभाष्यरूपोऽयं द्वादशस्कन्धसंयुतः * ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिध इति गौरीतन्त्राच्चास्य पुराणस्य गायत्रीभाष्यरूपत्वं, गायत्र्यारम्भत्वञ्च प्रतीयते। तच्च गायत्रीभाष्यं नाम तद्विवरणम्। तच्च जीवब्रह्मयोः शुद्धतत्त्वम्पदयोरेकत्वेनोपपादनम्। यत्ते रूपं कल्याणतमं तत्ते पश्यामि, योऽसावादित्ये पुरुषः सोऽहमस्मीति श्रुतेः। तच्च श्रीमद्भिः सर्वज्ञैः स्वामिपादैः सुविस्तरं समग्रग्रन्थेनोपपादितम्। गायत्र्यारम्भस्तु, धीमहीति पदेनैव गायत्र्याः प्रारम्भेण च गायत्र्याख्यब्रह्मविद्यारूपमेतत्पुराणमिति दर्शितमित्युक्तं, न त्वानुपूर्व्येण। अत एवेदानीं जन्माद्यस्येति पद्येन गायत्र्यर्थो निरूप्यते। तथाबहुभिर्विशेषणैरुपपत्त्या चास्मिन्नेव पद्ये सामान्यतो भाष्यरूपत्वञ्चोपपादितं ज्ञेयमिति। तत्र गायत्र्यारम्भो नाम, तत् सवितुर्वरेण्यमितिमन्त्रेणैवारम्भ इति चेन्न। पुराणस्य वेदविवरणरूपत्वाद् गायत्र्यर्थप्रतिपादकश्लोकेनाऽऽरम्भ एव गायत्र्यारम्भो विवक्षितो, न तु गायत्रीस्वरूपेण। तथा सति श्रुतिस्मृत्योर्भेदाप्रतीतेरिति। तदुक्तं स्मृतौ। पुराणं धर्म्मशास्त्रञ्च वेदार्थपरिबृंहणमिति। श्रवणाच्छ्रुतिरित्याहुः स्मरणात् स्मृतिरुच्यते इत्यादि। श्रुतेरिवार्थं स्मृतिरन्वगच्छदितिशिष्टोक्तेश्च। तत्रादौ गायत्री यथा,

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयादिति। अस्या अर्थस्तु, तत् तस्य प्रसिद्धस्य देवस्य दिवि द्योतमानस्य सवितुर्विश्वप्रसवकर्तुर्यो भर्गोऽज्ञानादिद्वैततृणभर्जको मण्डलस्थः पुरुषविशेषस्तेजोरूपो नोऽस्माकं जीवानां धियो धीवृत्तीः प्रचोदयात् दृष्टादृष्टफलजनकेषु कर्म्मसु प्रेरयति तं वरेण्यं वरणीयं सर्वोत्तमं पुरुषम् आत्मत्वेन धीमहि ध्यायेम इत्याशंसा ॥

वस्तुतस्तु सवितुर्देवस्येत्यत्र उपचारे षष्ठी, राहोः शिर इतिवत्। तेन यः स प्रसिद्धः सविता देवो भर्गः सर्वानर्थभर्जको नोऽस्माकं धियः प्रचोदयात् तं वरेण्यं धीमहीत्येव प्रतिभातीति मनसि निधाय भगवान् कृष्णद्वैपायनो मङ्गलमाचरति ॥ जन्माद्यस्येति ॥ यतः यस्मात् सवितुरस्य विश्वस्य जन्मादि भवतीति शेषः, तस्य तेजो भर्गो धीमहीति सम्बन्धः। यच्छब्दस्य उद्देश्यसमर्पकत्वात् सवितृसमर्पकत्वं युक्तमेवं भर्गपदस्य भर्जनकर्तृत्वाद्युक्तमेव तेजोवाच्यत्वमिति। तथोक्तं योगियाज्ञवल्क्येन। सविता सर्वभूतानां सर्वभावान् प्रसूयते * सवनात् पवनाच्चैव सवितेत्युच्यते हि सः ॥ १ ॥ भ्रस्जो पाके भवेद्धातुर्यस्मात् पाचयते ह्यसौ। भ्राजते दीप्यते यस्माज्जगच्चान्ते हरत्यपि ॥ कालाग्निरूपमास्थाय सप्तार्चिः सप्तरश्मिभिः। भ्राजयेद्यत्स्वरूपेण तस्माद्भर्गः स उच्यते। तथा च, भेति भीषयते लोकान् रेति रञ्जयते प्रजाः * ग इत्यागच्छत्यजस्रं भगवान् भर्ग उच्यते इति। यच्छब्देनोक्तस्य सवितुर्विशेषणं स्वराडिति। स्वः स्वर्गे आसम्यगटतीति स्वराट्। यद्वा स्वेन असाधारणस्वरूपेण राजते इति स्वराट्। अनेन देवपदं व्याख्यातम्। यदाह योगियाज्ञवल्क्यः। दीव्यते क्रीडते यस्माद्रोचते द्योतते दिवि * तस्माद्देव इति प्रोक्तः स्तूयते सर्वदैवतैरिति। चः समुच्चये। पुनः कथम्भूतः सविता ॥ अरिमृदां हृदायः ॥ अरिभिः

कामादिभिः षडिन्द्रियैर्वा मृद्यन्ते पीड्यन्ते इति अरिमृदो बुद्ध्यादिपरतन्त्रा जीवास्तेषां हृदायः । हृत् अन्तःकरणम् । आययति दृष्टादृष्टार्थकर्म्मसु प्रेरयतीति हृदायः। एतेन पदद्वयेन, धियो यो नः प्रचोदयादिति पदचतुष्टयं व्याख्यातम्। यथाऽऽह स एव। चिन्तयामो वयं भर्गं धियो यो नः प्रचोदयात् * धर्म्मार्थकाममोक्षेषु बुद्धिवृत्तीः पुनः पुनरिति ॥ धीमहीति स्वरूपमेवोक्तम् । यच्छब्देनैव तच्छब्द आक्षिप्यते । यथाह स एव, यच्छब्देनैव तच्छोब्दो बोद्धव्यः सततं बुधैः * उदाहृते तु तच्छब्दे यच्छब्दः स्यादुदाहृत इति। तेजसो विशेषणं परमिति ॥ परं सर्वोत्तममित्यर्थः । एतेन वरेण्यपदं व्याख्यातम्। एवमेभिरुक्तपदैः सर्वो गायत्र्यर्थो व्याख्यातः । अवशिष्टानि पदानि भाष्यरूपत्वप्रतिपादनाय यथासम्भवं विशेषणतया योज्यानि । यथा तेजसोऽग्न्यादितेजोव्यावर्तनाय वरेण्यत्वप्रतिपादनाय च चत्वारि विशेषणानि– आदीति, यथा विनिमयो यत्र त्रिसर्गो मृषेति, धाम्ना स्वेन सदा निरस्तकुहकमिति, सत्यमिति च । तत्र आदिपदेन, तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति श्रुतेः सर्वतेजसां तेजस्त्वेन वरेण्यत्वं सिद्धम् । एवं यत्र, यस्मिन् तेजसि मृषाऽपि त्रिसर्गः त्रयाणां मायागुणानां सर्गो भूतेन्द्रियदेवतादिरूपो, यथा यथावदेव, वा एवार्थे । विनिमयः सत्यरूपो व्यवहारदशायां भातीति शेषः। तत् यत्सत्यतया मृषासर्गोऽपि रज्जुसर्पवदधिष्ठानसत्तयैव सद्वन् प्रतीयत इत्यर्थः । असङ्गो ह्ययं पुरुष इति श्रुतेः । प्राप्तत्रिसर्गसम्बन्धं वारयति॥ धाम्ना स्वेन सदा निरस्तकुहकमिति ॥ सदा कालत्रयेऽपि स्वेन महसैव निरस्तं कुहकं सङ्गदोषो येन तत् । अत एव, सत्यं सर्पभ्रमस्य अधिष्ठानावधित्वाभ्यां रज्जुवत्। कालत्रयव्यापिपूर्णमित्यर्थः। पुनः यत इत्यस्य सवितृसमर्पकस्य अन्वयव्यतिरेकाभ्यां कारणत्वोप-

